आरण्यकानि पञ्चेति प्रोक्तान्यर्थविभेदतः।
महाव्रतमहः प्रोक्तं प्रथमारण्यके स्फुटं ॥ ६ ॥
गवामयनमित्युक्ते सत्रे संवत्सरात्मके।
उपान्त्यमस्ति यदहस्तन्महाव्रतनामकं ॥ ७ ॥
सत्रप्रकरणेऽनुक्तिररण्याध्ययनाय हि।
महाव्रतस्य तस्मात् हौत्रं कर्म्म विविच्यते ॥ ८ ॥

तत्रादौ विवक्षितमर्थं प्रतिजानीते। (१)अथ महाव्रतम्(१) इति। 'अथ'शब्द आरम्भवाची। महाव्रताख्यं कर्म्म प्रारब्धमित्यर्थः। अथवा अयमानन्तर्य्यार्थः 'अथ'शब्दः। प्रकृतिज्ञानानन्तरं विकृतिरूपं महाव्रताख्यं कर्माभिधीयत इति शेषः। प्रकृतिज्ञाने हि सति ततो* विकृतावतिदिष्टा धर्माः साकल्येनावबोद्धुं शक्यन्ते। विश्वजिच्चतुर्विंशादीनि कर्माणि महाव्रतस्य प्रकृतयः। आज्यप्रउगनामके द्वे शस्त्रे विश्वजिदाख्यात् कर्मणो महाव्रतेऽतिदिश्येते। होत्रकाणां शस्त्राणि चतुर्विंशाख्यात् कर्मणोऽतिदिश्यन्ते। तथा च पञ्चमारण्यके पठिष्यते। आज्यप्रउगे विश्वजितो होत्राश्चतुर्विंशदिति ॥

महाव्रतं प्रशंसितुमाख्यायिकामुखेन तच्छब्दनिर्वचनं दर्शयति। (२)इन्द्रो वै वृत्रं हत्वा महानभवद्यन् महानभवत्तन् महाव्रतमभवत्तन् महाव्रतस्य महाव्रतत्वम्(२) इति। वृत्रवधस्य अत्यन्तप्रसिद्धिद्योतनार्थः 'वै'शब्दः। तैत्तिरीयके दर्शपूर्णमासब्राह्मणशेषे त्वष्टा हतपुत्र इत्यस्मिन्ननुवाके वृत्रनाम्नोऽसुरस्योत्पत्तिवधादिकं बहुना प्रपञ्चेनाभिधायान्ते द्यावापृथिवीभ्यामनु-

---

* सति ततस्तत्कार्ये इति ग०।

ज्ञातेनेन्द्रेण कृतो वृत्रवधः। एवमाम्नायते। स आभ्यामेव प्रसूत इन्द्रो वृत्रमहन्निति। एवमन्यत्रापि। इन्द्रो वृत्राय वज्रं प्राहरदिन्द्रो वृत्राय वज्रमुदयच्छदिन्द्रो वृत्रं हत्वा इत्यादिषु प्रसिद्धिर्द्रष्टव्या। ईदृशात् प्रसिद्धात् वृत्रबधादूर्ध्वम् अयम् 'इन्द्रो महानभवत्'। भीतिराहित्यमस्य महत्त्वं। वृत्रबधात्पुरा तु स्वकीयां भीतिं स्वयमेव प्रजापतेरग्रे प्रोवाच। तथा च तैत्तिरीया आमनन्ति। तस्मादिन्द्रोऽबिभेत्स प्रजापतिमुपधावत्* शत्रुर्मेऽजनीति। इत्थं भीतस्य स्वेच्छया बहुषु देशेषु सञ्चारासम्भवात् स्वगृहे च निद्राभोजनादौ बिभ्यतः स्वास्थ्याभावादल्पत्वम्। अतो निर्भयत्वमेव महत्त्वं। 'यत्' यदा, असौ 'इन्द्रः', 'महानभवत्', 'तत्' तदानीम्, इन्द्रार्थं क्रियमाणं सोमपानविशेषात्मकं कर्म 'महाव्रतमभवत्'। तस्मात् कारणाद्याज्ञिकैर्महाव्रतमिति व्यवह्रियमाणस्य कर्मणो 'महाव्रतनामकत्वं सम्पन्नम्। तस्य च नाम्नस्त्रेधा निर्वचनं द्रष्टव्यम्। महान् भवत्यनेन व्रतेनेति महाव्रतं। महतो देवस्य व्रतमिति महाव्रतं। महच्च तत् व्रतमिति महाव्रतम्। एतानि त्रीणि निर्वचनानि तैत्तिरीया आमनन्ति। प्रजापतिः प्रजाः सृष्ट्वा वृत्तोऽशयत्। तं देवा भूतानां रसन्तेजः सम्भृत्य तेनैनमभिष तन्महानवत्रर्त्ति इति 'तन्महाव्रतस्य महाव्रतत्वं'। महतो व्रतमिति 'तन्महाव्रतस्य महाव्रतत्वं' इति। वृत्तोऽशयच्छ्रान्तो भूमावपतत्तदानीं देवास्तेजोहेतुं† तन्युलोकादानाय्यत्रा समानीतं रसायनरूपं सोमं महाव्रताङ्गभूतैर्मन्त्रैः सम्पाद्याय प्रजापतिं तेन सोमेन चिकित्सित्वा महानववर्त्ति अमरहितो

---

* उपाधावदिति साधुः। † ते देवास्तेजोहेतुमिति क०, ग० घ।

हृत्तोऽनेन कर्मणेत्युक्तवन्तः। छन्दोगैरपि महद्व्रतं महतो व्रतमिति निरुक्तिद्वयमाम्नातं। प्रजापतिः प्रजा असृजत सोऽरिच्यत सोऽपद्यत तं देवा अभिसङ्गच्छन्त तेऽब्रुवन् महदस्मै व्रतं सम्भरामो यदिमन्धिनवदिति यस्मै तत्संवत्सरमन्नं पच्यते तत् समभरत् तदस्मै प्रायच्छत्तदव्रजयत्तदेनमधिनोन्महन्मर्थ्या व्रतं यदिममधिन्वीदिति तन्महाव्रतस्य महाव्रतत्वं प्रजापतिर्वाव महांस्तस्यैतद्व्रतमिति। अरिच्यत शक्त्या रिक्तोऽभूत्। अपद्यत भूमौ पतितः। धिनवत् प्रीणयत्। अव्रजयत् प्राप्नोत्। अधिनोत् अप्रीणयत्। हेमर्थ्या मरणयोग्या मनुष्याः यद् व्रतमिमं प्रजापतिं अधिन्वीत् अप्रीणयत्। तद् व्रतं महदिति देवा उक्तवन्त इत्यर्थः॥

इत्थं महाव्रतं प्रशस्य तत्र प्रातःसवने होतृशंसनीये आज्यनामके शस्त्रे पूर्वपक्षसिद्धान्तौ दर्शयति। (१)द्वे एतस्याङ्गः आज्ये कुर्यादिति हैक आहुरेकमिति त्वेव स्थितं(१) इति। 'एतस्य', महाव्रताख्यस्य, 'अह्नः', प्राकृतं वैकृतं चेत्येवं द्वे आज्यशस्त्रे कुर्य्यात्। प्र वो देवायाग्नय इति सप्तर्चं सूक्तमाज्यशस्त्रत्वेनाग्निष्टोमेऽभिहितत्वात् प्राकृतं। अग्निं नरो दीधितिभिरिति पञ्चविंशत्यृचं सूक्तमाज्यशस्त्रत्वेन विश्वजिति विधानाद्वैकृतं। ते 'द्वे' अपि प्राकृतवैकृते, 'आज्ये', अस्मिन् महाव्रते 'कुर्य्यात्', 'इति' एवं, 'एके' शाखान्तरीयाः, 'आहुः'। सोऽयं पूर्वपक्षः। तस्य पूर्वपक्षस्य व्यावृत्त्यर्थः 'तु'शब्दः। द्वे आज्ये न कुर्य्यात् किन्तु विशेषविधानाद्वैकृतमेकमाज्यं कुर्य्यात् 'इत्येव', सिद्धान्तरहस्यं 'स्थितं'। यदाज्ये शस्त्रद्वयमङ्गीक्रियेत तदानीमग्निष्टोमसंस्थेऽस्मिन् महाव्रते प्रकृतितः प्राप्तेभ्यो द्वादशभ्यः शस्त्रेभ्योऽधिकं शस्त्रं प्राप्नुयात्। तच्चायुक्तं। द्वादशा-

ग्निष्टोमस्य स्तोत्राणि द्वादश शस्त्राणीति श्रुत्यन्तरविरोधात्। तदेवात्र नित्यमाज्यशस्त्रं व्यवस्थापितं॥

अथ काम्यान्याज्यशस्त्राण्युच्यन्ते। तत्र समृद्धिफलाय शस्त्रविशेषं विधत्ते। (४)प्र वो देवायाग्नय इति राद्धिकामः(४) इति॥

तच्च सप्तर्चं सूक्तमिति पूर्वमेवाभिहितं। पुष्टिकामाय * सूक्तान्तरं विधत्ते। (५)विशो विशो अतिथिमितिपुष्टिकामः(५) इति॥

एतच्च सूक्तं पञ्चदशर्चं। तस्य पुष्टिहेतुत्वमुपपादयति। (६)पुष्टिर्वै विशः पुष्टिमान् भवतीति(६) इति। 'विशः' वैश्याः, ते हि वाणिज्येन बहुधनमर्जयन्तः करमपि बहुलं प्रयच्छन्ति। अतो विशां पुष्टित्वं। अस्मिन्नर्थे लोकप्रसिद्धिः 'वै'शब्देनोच्यते॥ सूक्ते तु विशो विश इति वीप्सया बहुविधानां वैश्यानामभिहितत्वात्। तेन सूक्तेनायं यजमानः 'पुष्टिमान् भवति', इत्येतदुपपन्नं। 'इति'शब्दो हेत्वर्थः। यस्मात् पुष्टिमान् भवति, तस्मात् पुष्टिकामस्तत् सूक्तं कुर्य्यात्॥

अत्र पूर्वपक्षत्वेन तत्सूक्तं दूषयति। (७)अतिथिमिति पदं भवति नैतत्कुर्यादित्याहुरीश्वरोऽतिथिरेव चरितोः(७) इति। अस्मिन् सूक्ते दरिद्रस्य वाचकम् 'अतिथिमिति पदं', वर्त्तते। तस्मात् 'न', 'एतत्' सूक्तं, 'कुर्य्यात्,' 'इति' एवं, केचित्पण्डितमन्याः 'आहुः'। तत्रोपपत्तिञ्च वर्णयन्ति। य एतदाज्यं कुर्य्यात्सोऽयम् 'अतिथिरेव' दरिद्र एव भूत्वा, याच्ञार्थं परगृहेषु सर्वदा चरितुं प्रभुर्भवतीति॥

अत्र सिद्धान्तत्वेनैतत्सूक्तविधानार्थं प्रतिप्रसवं विधत्ते।

* पुष्टिफलायेति क०, ग० च।

(८)तदु ह स्माह कुर्य्यादेव(८) इति। अतिथिपदतात्पर्य्याभिज्ञः सिद्धान्ती 'तदु ह' तदेव सूक्तम्, अवश्यं 'कुर्य्यात्', इति 'आहस्म'॥

पूर्वपक्षोक्तदूषणशमनार्थमतिथिशब्दतात्पर्यं दर्शयति। (९)यो वै भवति यः श्रेष्ठतामश्नुते स वा अतिथिर्भवति(९) इति। सत्तावाची भूधातुः सन्मार्गवर्त्तिनं ब्रूते। 'यो वै भवति' यस्तु पुमान् सन्मार्गवर्त्ती भवति, तस्मिन्नपि सन्मार्गवर्त्तिसङ्घे 'यः' पुमान्, अतिशयेन प्राशस्त्यं प्राप्नोति, 'सः', एव 'अतिथिर्भवति'। अतः प्राशस्त्यमतिथिशब्दप्रवृत्तिनिमित्तं न तु दारिद्र्यं॥

एतदेव व्यतिरेकमुखेन स्पष्टयति। (१०)न वा असन्तमातिथ्यायाद्रियन्ते (१०)इति। सन्मार्गरहितं व्रात्याभिशस्तादिकं पुरुषमत्यन्तदरिद्रमप्यातिथ्यसत्काराय 'नाद्रियन्ते'॥

सिद्धान्तं निगमयति। (११)तस्मादु काममेवैतत् कुर्य्यात्(११) इति। यस्मादतिथिशब्दो न दुष्टः किन्तु प्रशस्तः 'तस्मात्' एव कारणात्, विस्रम्भेण 'एव,' 'एतत्' सूक्तं, 'कुर्य्यात्'॥

तत्सूक्तप्रयोगे कंचिद्विशेषं विधत्ते। (१२)स यद्येतत् कुर्यादागन्मवृत्रहन्तममित्येतं तृचं प्रथमं कुर्यात्(१२)इति। तस्मिन् सूक्ते विशो विशो व इत्यादिकः प्रथमस्तृचः। आगन्मित्यादिको द्वितीयस्तृचः। प्रयोगकाले तु 'आगन्मित्यादिकं प्रथमत्वेन पठेत्॥

तत्रोपपत्तिमाह। (१३)एतद्वा अहरीप्सन्तः संवत्सरमासते त आगच्छन्ति(१३) इति। ये गवामयननामकं 'सवत्सरसत्रमवतिष्ठन्ति ते महाव्रताख्यमेतदेवोपान्त्यम् 'अहः,' प्राप्तुमिच्छन्तोऽनुतिष्ठन्ति। तथा सत्यागन्मेति प्राप्तिवाचकं शब्दं प्रयुञ्जानाः 'ते' पुरुषाः, एतदहः 'आगच्छन्ति'। तस्मादेतस्य प्राथम्यं युक्तं॥

अतिथिमागन्मेतिपदद्वयतात्पर्यदर्शनेन तृचद्वयं व्याख्यातं। अथावशिष्टानां तृचानान्तात्पर्यं दर्शयति। (१४)त एतेऽनुष्टुप्शीर्षाणस्त्रयस्तृचा भवन्ति ब्रह्म वै गायत्री वागनुष्टुब् ब्रह्मणैव तद्वाचं सन्दधाति(१४) इति। पञ्चदशर्चे विशो विश इत्यादिके सूक्ते प्रथमतस्तृचद्वये गते सति तत ऊर्ध्वं त्रयस्तृचा अवशिष्यन्ते। तेष्वन्तिमस्तृचोऽहंहुवान इत्यादिकोऽनुष्टुप्छन्दस्कः। तत्रानुष्टुप्छन्दः शिर उत्तमाङ्गस्थानं येषां तृचानां ते 'अनुष्टुप्शीर्षाणः', 'एते', 'तृचाः' त्रिसङ्ख्याकाः, तत्रोपान्त्ये तृचे ततः पूर्वतने तृचे च गायत्रीच्छन्दो विद्यते। सा च 'गायत्री', 'ब्रह्म', एव। तत्सवितुर्वरेण्यमित्यनया गायत्र्या परब्रह्मणः प्रतिपाद्यत्वात्। येयं तृचगता 'अनुष्टुप्', सा 'वाग्रूपा चतुष्पात्त्वसाम्यात्। सा चत्वारि वाक्परिमिता पदानीति वाचः पादचतुष्टयमाम्नातं। परा पश्यन्ती मध्यमा वैखरीत्येवं पादचतुष्टयमन्यैर्व्याख्यातं। अनुष्टुभस्तु चतुष्पात्त्वं प्रसिद्धं। एवं सत्यस्मिन् सूक्ते गायत्र्यनुष्टुभोर्मेलने सति 'तत्' तेन सूक्तपाठेन, 'ब्रह्मणैव', 'वाचं', संयोजयति॥

अथ कीर्त्तिफलार्थं सूक्तान्तरं विधत्ते। (१५)अबोध्यग्निः समिधा जनानामिति कीर्त्तिकामः(१५) इति। 'अबोधीत्यादिकं द्वादशर्चं सूक्तं॥

फलार्थमन्यत् सूक्तं विधत्ते। (१६)होताजनिष्ट चेतन इति प्रजापशुकामः(१६) इति। 'होतेत्यादिकमष्टर्चं सूक्तं। अत्र यथोक्तानां काम्यसूक्तानां गोदोहनन्यायेन फलार्थत्वमेव न तु क्रत्वर्थत्वं। स च न्यायश्चतुर्थाध्यायस्य प्रथमपादे चिन्तितः।

गोदोहनं द्वयार्थं स्यान्नवा भानाद् द्वयार्थता।

अन्यथापि क्रतोः सिद्धेः केवलं पुरुषाय तत् ॥

दर्शपूर्णमासयोः श्रूयते। चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्येति। तत्र गोदोहनस्य क्रत्वर्थत्वं पुरुषार्थत्वञ्चेति आकारद्वयमस्ति। पशुफलप्रजननेन* पुरुषप्रीतिर्भाति। अपां प्रणयनेन क्रतुपौष्कल्यमपि भातीति चेत्। मैवं। गोदोहनमन्तरेण फलासिद्धेर्भवतु पुरुषार्थत्वं। क्रतुस्तु तदभावेऽपि चमसेन सिध्यतीति न क्रत्वर्थता। एवमत्रापि यथोक्तानि काम्यसूक्तानि फलार्थान्येव न तु क्रत्वर्थानि। एवं तर्हि क्रतोरङ्गवैकल्यं प्रसज्येतेति चेत्। मैवं। काम्यानामेतेषां क्रत्वङ्गभूतं शंसनमाश्रित्य विधाने सति काम्यैरपि सूक्तैः क्रत्वङ्गस्य शंसनस्य निष्पत्तेः। काम्येन नित्यसिद्धिरिति हि तान्त्रिकाणां विदितं†। तस्मात् फलसाधनत्वेन विधानादेतैः फलं साक्षात् सिध्यति। अर्थात् क्रतोः साङ्गत्वमित्युभयमुपपन्नं ॥ १ ॥

(१)अग्निं नरो दीधितिभिररण्योरित्यन्नाद्यकामः(१) (२)अग्निर्वा अन्नादः(२) (३)चिरतरमिव वा इतरेषामन्येष्वग्निमागच्छन्त्यथेह मुखत एवाग्निमागच्छन्ति मुखतोऽन्नाद्यमश्नुते मुखतः पाप्मानमपघ्नते(३) (४)हस्तच्युती जनयन्तेति जातवदेतस्माद्वा अङ्गो यजमानो जायते तस्माज्जातवत्(४) (५)तानि चत्वारि छन्दांसि भवन्ति चतु-

* पशुफलजनने इति घ०।

† तान्त्रिकाणां डिण्डिम इति क०, ग० च।

ष्पादा वै पशवः पशूनामवरुध्यै(५) (६)तानि त्रीणि छन्दांसि भवन्ति त्रयो वा इमे त्रिवृतो लोका एषामेव लोकानामभिजित्यै(६) (७)ते द्वे छन्दसी भवतः प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमानमेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति(७) (८)ताः पराग्वचनेन पञ्चविंशतिर्भवन्ति पञ्चविंशोऽयं पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशस्तमिममात्मानं पञ्चविंशं संस्कुरुते(८) (९)अथो पञ्चविंशं वा एतदह्नः पञ्चविंश एतस्याह्नः स्तोमस्तत्समेन समं प्रतिपद्यते तस्माद् द्वे एव पञ्चविंशतिर्भवन्ति(९) (१०)तास्तिः प्रथमया त्रिरुत्तमयैकया न त्रिंशन्न्यूनाक्षरा विराण् न्यूने वै रेतः सिच्यते न्यूने प्राणा न्यूनेऽन्नाद्यं प्रतिष्ठितमेतेषां कामानामवरुध्यै(१०) (११)एतान् कामानवरुन्धे य एवं वेद(११) (१२)ता अभिसम्पद्यन्ते बृहतीं च विराजं च छन्दो यैतस्याह्नः सम्पत्तामथो अनुष्टुभमनुष्टुबायतनानि ह्याज्यानि(१२) ॥ २ ॥

ऐतरेयारण्यकभाष्यम् ।

अन्नाद्यफलाय सूक्तान्तरं विधत्ते । (१)"अग्निं नरो दीधितिभिररण्योरित्यन्नाद्यकामः"(१) इति । अत्तुं योग्यं शाल्यादि-

निष्पन्नम् अन्नं च तदाद्यञ्चेति 'अन्नाद्य', तत्कामत्वमस्य।
'अग्निं नरः' इत्यादिकं पञ्चविंशत्यृचमाज्यशस्त्रमवगन्तव्यं ॥
अस्य सूक्तस्यान्नहेतुत्वं सम्भावयति। (२)"अग्निर्वा अन्नादः"(२)
इति। अग्नेरन्नभक्षकत्वे लोकप्रसिद्धिद्योतनार्थः 'वै' शब्दः।
अग्नेः स्वयमन्नभोजकत्वेनान्नप्रियत्वात्तद्विषयसूक्तेनान्नलाभो युक्त
इत्यर्थः ॥

ननु प्र वो देवायाग्नय इत्यादिसूक्तेष्वप्यग्निर्विद्यत इत्याशङ्क्य
तेभ्योऽस्य सूक्तस्य विशेषं दर्शयति। (३)"चिरतरमिव वा इतरे-
ष्वाज्येष्वग्निमागच्छन्त्यथेह मुखत एवाग्निमागच्छन्ति मुख-
तोऽन्नाद्यमश्नुते मुखतः पाप्मानमपघ्नते"(३) इति। 'इतरेषु' प्र
वो देवायाग्नय इत्यादिष्वाज्यशस्त्रेषु, यजमाना अत्यन्तविलम्बो
यथा भवति तथैव 'अग्निं', प्राप्नुवन्ति। सूक्तादावग्निपदाभा-
वात् इह तु तद्भावादादावेव सहसाग्निं प्राप्नुवन्ति। अतो-
ऽनवद्यं। आदौ विलम्बमन्तरेणैव यजमानः सद्यः प्राप्नोति, तथा
ते यजमाना आदावेव 'पाप्मानं', नाशयन्ति ॥

सूक्तस्य प्रथमपादे अग्निशब्दं प्रशस्य द्वितीयपादे जनयन्तेति-
शब्दं प्रशंसति। (४)"हस्तच्युती जनयन्तेति जातवदेतस्माद्वा
अङ्गो यजमानो जायते तस्माज्जातवत्"(४) इति। हस्तेत्यादि-
द्वितीयः पादः। तस्यायमर्थः। 'हस्तच्युती' हस्तव्यापारेण
मथनाख्येन, 'जनयन्त' यजमाना अग्निमुत्पादयन्तः, 'इति' तत्र
जनयन्तेत्यनेन शब्देन, इदं सूक्तं 'जातवत्' जन्मवाचकशब्दवत्
भवति। 'एतस्मात्' जन्मवाचिशब्दोपेतसूक्तयुक्तात्, 'अङ्गः' महा-
व्रताख्यात् कर्मणः, 'यजमानः', अयं तत्फलयोग्यजन्मवान्

भवति । 'तस्मात्' कारणात्, तथाविधजन्मसाधनभूतं सूक्तं जन्मवाचिशब्दोपेतमित्येतद्युक्तं ॥

अस्मिन् पञ्चविंशत्यृचे सूक्ते आदावष्टादशर्चो विराट्छन्दस्काः। अवशिष्टास्तु मा नो अग्ने वीरत इत्यादिकाः सप्तर्चस्त्रिष्टुप्छन्दस्काः । तास्वेकैकस्यामृचि पादचतुष्टयगतानि च्छन्दांसि प्रशंसति । (५)"तानि चत्वारि च्छन्दांसि भवन्ति चतुष्पादा वै पशवः पशूनामवरुध्यै"(५) इति। एकादशाक्षरा त्रिष्टुबिति श्रुत्यन्तरादेकैकस्मिन् पादे एकैकन्त्रिष्टुबाख्यं छन्दोऽस्ति । ततश्चतुर्षु पादेषु 'चत्वारि', त्रिष्टुप्'छन्दांसि' सम्पद्यन्ते । ततः पशूनां चतुष्पात्त्वेन तत्साम्यात् पशुप्राप्तिर्भवति ॥

यास्तु सूक्तादिगता विराट्छन्दस्का ऋचस्तासां पादगतानि च्छन्दांसि प्रशंसति । (६)"तानि त्रीणि च्छन्दांसि भवन्ति त्रयो वा इमे त्रिवृतो लोका एतेषामेव लोकानामभिजित्यै" (६)इति । यथा चतुष्पदा त्रिष्टुबेकादशाक्षरा त्रिष्टुबिति श्रुत्योः पादसङ्ख्याक्षरसङ्ख्या च श्रुता, तथा त्रिपदा विराड् दशाक्षरा विराडिति श्रुत्योस्तु तत्सङ्ख्याद्वयं श्रुतं। ततस्त्रिष्वपि पादेषु दशाक्षरसङ्ख्याकानि 'त्रीणि', विराट्छन्दांसि सम्पद्यन्ते। 'लोकाः', च पृथिव्यन्तरिक्षं द्यौरिति एवं त्रिसङ्ख्याका उत्तममध्यमाधमैः सात्त्विकराजसतामसैः प्राणिभिरुपेतत्वात् 'त्रिवृतः', च। अतः सङ्ख्यासाम्यात् लोकजयो भवति ॥

सूक्ते पूर्वोत्तरभागयोर्वर्त्तमाने विराट्त्रिष्टुबित्येते द्वे छन्दसी प्रशंसति । (७)"ते द्वे छन्दसी भवतः प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु

पशुसु प्रतिष्ठापयति"(७) इति। छन्दोद्वित्वं प्रतिष्ठार्थमेव सम्प-द्यते। लौकिक'पुरुषः', सर्वोऽपि भूमौ द्वाभ्यां पादाभ्यां प्रति-ष्ठितत्वात् 'द्विप्रतिष्ठः', भवति। 'पशवः', तु 'चतुष्पादाः'। एवं सति छन्दोद्वित्वेन पादचतुष्टेन च द्विपादं 'यजमानं', 'चतुष्पात्सु पशुषु', होता 'प्रतिष्ठापयति',॥

इदानीं सर्वासृक्षु अवस्थितां पञ्चविंशतिसङ्ख्यां प्रशंसति। (८)"ताः पराग्वचनेन पञ्चविंशतिर्भवन्ति पञ्चविंशोऽयं पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्च-विंशस्तमिममात्मानं पञ्चविंशं संस्कुरुते"(८) इति। आवृत्तिम-न्तरेणोर्ध्वपाठः 'पराग्वचनं'। 'आत्मा' मध्यदेहं। मध्यं ह्येषा-मङ्गानामात्मेति वक्ष्यमाणत्वात्। तेनात्मना सहितैरवयवैः सर्वैः 'अयं पुरुषः', पञ्चविंशतिसङ्ख्योपेतः। अतस्तादृशं पुरुषं ऋग्गतया पञ्चविंशतिसङ्ख्यया संस्करोति॥

प्रकारान्तरेण तां सङ्ख्यां प्रशंसति। (९)"अथो पञ्चविंशं वा एतदहः पञ्चविंश एतस्याह्नः स्तोमस्तत्समेन समं प्रतिपद्यते तस्माद्वे एव पञ्चविंशतिर्भवन्ति"(९) इति। 'अथो' अपिचेत्यर्थः। यन्महाव्रताख्यं 'अहः', तत् 'एतत्', 'पञ्चविंशतिसङ्ख्योपेत-मेव। तत् कथमिति तदुच्यते। 'एतस्याह्नः', यः'स्तोमः', सामगैः स्तोमकाले तृचस्यावृत्त्या सम्पाद्यते। सोऽयं त्रिवृत्पञ्चदशादि-रूपो न भवति। किन्तु 'पञ्चविंशः'। तस्मात् कारणात् पञ्चविंशतिसङ्ख्यया 'समेन', सूक्तेन, पञ्चविंशस्तोमयुक्तं 'समं', तदहः प्राप्नोति। यस्मादेतदहः सूक्तञ्चेत्युभयं समं 'तस्मात्', एते 'द्वे' अहःसूक्ते, पञ्चविंशतिसङ्ख्यायुक्ते 'एव', भवतः। अन्यथा

साम्यासम्भवात्। 'भवन्ति' इति बहुवचनं तु सूक्तगतानामृचां स्तोत्रगतानाञ्चापेक्षया द्रष्टव्यं ॥

तस्मिन् सूक्ते प्रथमोत्तमयोरृचोरावृत्तिविधिमभिप्रेत्य तदावृत्तिसहितां सङ्ख्यां प्रशंसति। (१०)"तास्त्रिः प्रथमया त्रिरुत्तमयैकया न त्रिंशन्न्यूनाक्षरा विराण् न्यूने वै रेतः सिच्यते न्यूने प्राणा न्यूनेऽन्नाद्यं प्रतिष्ठितमेतेषां कामानामवरुध्यै"(१०) इति। 'ताः' सूक्तगताः पञ्चविंशतिसङ्ख्याका ऋचः, त्रिरावृत्तया 'प्रथमया', त्रिरावृत्तया च 'उत्तमया', सहिताः सत्यो मिलिता एकोनत्रिंशत्सङ्ख्याकाः सम्पद्यन्ते। 'एकया', ऋचा 'न', सम्पूर्णा 'त्रिंशत्' इति योजना। त्रिंशदक्षरा विराडिति श्रुतेः। विराट्छन्दसस्त्रिंशत्सङ्ख्योपेतत्वात् अत्र त्रिंशत्सङ्ख्यायामेकया न्यूनत्वादियमृक्सङ्ख्या 'न्यूनाक्षरा विराट्', सम्पद्यते। लोकेऽपि 'न्यूने वै' स्वल्प एव गर्भाशये, प्रजोत्पादनार्थं 'रेतः सिच्यते'। तथा स्वल्पे हृदयपुण्डरीके 'प्राणाः', प्रतिष्ठन्ति। स्वल्पे चोदरे 'अन्नाद्यं,' 'प्रतिष्ठितं', भवति। तस्मादियं न्यूनाक्षरा विराट् 'एतेषां' प्रजोत्पत्तिप्राणान्नप्रतिष्ठारूपाणां, 'कामानां', प्राप्त्यै-सम्पद्यते ॥

यथोक्तार्थवेदनं प्रशंसति। (११)"एतान् कामानवरुन्धे य एवं वेद"(११) इति। 'यः' पुमान्, 'एवं', ऋग्गतामेकोनत्रिंशत्सङ्ख्यां 'वेद', स पुमानुक्तान् 'कामान्', आप्नोति। वेदनमात्रेण फलप्राप्तिर्यजुर्वेदार्थप्रकाशे उपपादिता ॥

प्रकारान्तरेण सूक्तगता ऋचः प्रशंसति। (१२)"ता अभि सम्पद्यन्ते बृहतीं च विराजं च च्छन्दो येतस्याक्षः सम्पत्तामयो

अनुष्टुभमनुष्टुबायतनानि ह्याज्यानि(१२) इति। या ऋचः सूक्ते प्रोक्ता अग्निं नर इत्यादिकाः 'ताः' सर्वा ऋचः, मिलित्वा बृहत्याख्यं 'छन्दः', 'अभिसम्पद्यन्ते', तथा विराडाख्यं 'छन्दः', 'अभिसम्पद्यन्ते'। एवं सति 'एतस्य' महाव्रताख्यस्य 'अङ्गः', अपेक्षिता 'या सम्पत्तां', प्राप्ता भवन्ति। तत्रादावष्टादशानामृचां स्वत एव विराडभिसम्पत्तिः सिद्धा। यास्तूत्तराः सप्त त्रिष्टुभस्तासु बृहतीच्छन्दः सम्पादनीयं। अन्तिमाया ऋचस्त्रिरावृत्तौ सत्यां नवत्रिष्टुभः सम्पद्यन्ते। तासु प्रत्येकमष्टाक्षरेष्वपनीतेषु अवशिष्टा नव बृहत्यो भवन्ति। अपनीताश्च नवसङ्ख्याका अष्टाक्षरपादा मिलित्वा द्वासप्ततिरक्षराणि सम्पद्यन्ते। तत्र षट्त्रिंशदक्षरोपेते द्वे बृहत्यौ निष्पद्येते। तदेवं बृहतीच्छन्दःसम्पत्तिः। अपि च प्रथमायामृच्यनुष्टुप्त्वस्य सम्पादयितुं शक्यत्वात् ताः सूक्तगता ऋचोऽनुष्टुभमभिसम्पद्यन्ते। यद्यप्याद्याया ऋचस्त्रयस्त्रिंशदक्षरत्वादेकमक्षरमनुष्टुभोऽधिकं तथापि नैतावतानुष्टुप्त्वं हीयते। न वा एकेनाक्षरेण च्छन्दांसि वियन्ति न द्वाभ्यामितिश्रुतेः। यथैवास्यामृच्यक्षरत्रयाधिक्येऽपि विराट्त्वमनुक्रमणिकाकारैरुक्तम्, एवमेकाक्षराधिक्येऽपि अनुष्टुप्त्वं किं न स्यात्। न चैतावता प्रयासेनानुष्टुप्त्वसम्पादने प्रयोजनाभावः। यस्मादाज्यशस्त्राण्यनुष्टुबाश्रितानि। प्र वो देवायाग्नय इत्यादौ तथा दृष्टत्वात्। तस्मादनुष्टुप्सम्पत्त्या प्रशस्तमिदं सूक्तमित्यभिप्रायः। नन्वेतत् सूक्तमन्नाद्यकामस्य विधीयत इति पुरुषार्थमिदं तथा क्रत्वर्थमप्यस्य चोदकेन प्रापितं। तथा हि आज्य प्रउगे विश्वजित इति पञ्चमारण्यके वक्ष्यते। विश्वजिन्नाम्न एकाहाच्छस्त्रद्वयम-

तिदेष्टव्यमिति तस्य वाक्यस्यार्थः। विश्वजितोऽग्निं नर इति सूत्रकारेणाभिधानाद्विश्वजिद्विकृतिरूपे महाव्रतेऽपि तदेवातिदिश्यते। तस्मादेतस्यैवाग्निं नर इति सूक्तस्य क्रत्वर्थत्वं पुरुषार्थत्वं चेत्युभयविधत्वमुपपन्नम्। नायं दोषो दध्यादिन्यायेनोपपत्तेः। स च न्यायश्चतुर्थाध्यायस्य तृतीयपादे प्रपञ्चितः॥

दध्ना त्विन्द्रियकामस्य नित्योऽन्य उत तद्दधि।

अन्यत् स्यात् पूर्ववन् मैवं संयोगस्य पृथक्त्वतः॥

अग्निहोत्रे श्रूयते। दध्नेन्द्रियकामस्य जुहुयादिति। तत्र दध्नः काम्यत्वान्नित्येऽग्निहोत्रे पूर्ववन्न्यायेन न प्रयोक्तव्यं किन्त्वन्यदेव किञ्च न द्रव्यमिति चेत्। मैवं। दध्ना जुहोतीत्येतस्मिन् वाक्यान्तरे कामसंयोगमन्तरेण नित्यहोमसंयोगेन दधिविधानात्तस्मादेकस्यापि दध्नो वाक्यद्वयेन नित्यत्वं काम्यत्वं चाविरुद्धम्। एवमग्नीषोमीयपशौ खादिरे बध्नाति खादिरं वीर्यकामस्य यूपं कुर्वीतेत्युदाहरणीयम्। अनेन दधिन्यायेनात्रापि काम्येन अग्निं नरो दीधितिभिरितिसूक्तप्रयोगेण पुरुषार्थेन क्रतुरपि निष्पद्यत इति एकस्यैव सूक्तस्य चोदकप्रत्यक्षवचनाभ्यामुभयार्थत्वमविरुद्धम्॥ २॥

(१)गायत्रं प्रउगं कुर्यादित्याहुस्तेजो वै ब्रह्मवर्चसं गायत्री तेजस्वी ब्रह्मवर्चसी भवतीति(१) (२)औष्णिहं प्रउगं कुर्यादित्याहुरायुर्वा उष्णिगायुष्मान् भवतीत्यानुष्टुभं प्रउगं कुर्यादित्याहुः क्षत्रं वा अनुष्टुप् क्षत्रस्याप्त्या इति बार्हतं प्रउगं कुर्यादित्याहुः श्रीर्वै बृहती श्रीमान् भवतीति

पाङ्क्तं प्रउगं कुर्य्यादित्याहुरन्नं वै पङ्क्तिरन्नवान् भवतीति त्रैष्टुभं प्रउगं कुर्य्यादित्याहुर्वीर्यं वै त्रिष्टुब् वीर्य्यवान् भवतीति जागतं प्रउगं कुर्य्यादित्याहुर्जागता वै पशवः पशुमान् भवतीति(२) (३)तदु गायत्रमेव कुर्य्याद् ब्रह्म वै गायत्री ब्रह्मैतदहर्ब्रह्मणैव तद् ब्रह्म प्रतिपद्यते(३) (४) तदु माधुच्छन्दसं(४) (५)मधु ह स्म वा ऋषिभ्यो मधुच्छन्दाश्छन्दति तन्मधुच्छन्दसो मधुच्छन्दस्त्वम् (५) (६)अथो अन्नं वै मधु सर्वं वै मधु सर्वे वै कामा मधु तद्यन्माधुच्छन्दसं शंसति सर्वेषां कामानामवरुध्यै(६) (७)सर्वान् कामानवरुन्धे य एवं वेद तद्वैकाह्निकं रूपसमृद्धं बहु वा एतस्मिन्नहनि किञ्च किञ्च वारुणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत् प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति(७) (८)प्रतितिष्ठति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति(८) ॥ ३॥

ऐतरेयारण्यकभाष्यम्।

ऋतुग्रहभक्षणादूर्द्धं निवित्पदानुचार्य्यंहोत्राशंसनीयं यदाज्यशस्त्रं तन्निरूपितम्। विश्वेदेवग्रहादूर्ध्वं * होत्राशंसनीयं प्रउगनामकं यत् शस्त्रं तद्विषये छन्दोविशेषमाश्रित्य नानाशाखानुसारेण सप्त पक्षाः सम्भाविताः। गायत्र्युष्णिगनुष्टुब्बृहती-

* विश्वेदेवग्रहणादूर्ध्वमिति ग०।

पङ्क्तित्रिष्टुब्जगतीतिच्छन्दोविशेषाः। तत्र प्रथमं पक्षमाह। (१)"गायत्रं प्रउगं कुर्य्यादित्याहुस्तेजो वै ब्रह्मवर्चसं गायत्री तेजस्वी ब्रह्मवर्चसी भवति"(१) इति। 'तेजः' शरीरकान्तिः, बाह्यां सामर्थ्यं वा, 'ब्रह्मवर्चसं' श्रुताध्ययनसम्पत्तिः, तदुभयहेतुत्वाद्गायत्र्यास्तद्रूपत्वम्। अतो यजमानस्तदुभयवान् भवत्वित्यनेनाभिप्रायेण 'प्रउगशस्त्रं 'गायत्रीच्छन्दोविशिष्टं 'कुर्य्यात्'। तस्य गायत्रस्य प्रउगस्य स्वरूपमाश्वलायनेन पूर्वषट्के पञ्चमाध्यायेऽभिहितं। वायुरग्रेगा यज्ञप्रीरिति सप्तानां पुरोरुचां तस्यास्तस्या उपरिष्टात्तृचं तृचं शंसेद्वायवा याहि दर्शतेति सप्त तृचा इति॥

द्वितीयादिपक्षानाह। (२)"औष्णिहं प्रउगं कुर्य्यादित्याहुरायुर्वा उष्णिगायुष्मान् भवतीत्यानुष्टुभं प्रउगं कुर्य्यादित्याहुः क्षत्रं वा अनुष्टुप् क्षत्रस्याप्त्या इति बार्हतं प्रउगं कुर्य्यादित्याहुः श्रीर्वै बृहती श्रीमान् भवतीति पाङ्क्तं प्रउगं कुर्य्यादित्याहुरन्नं वै पङ्क्तिरन्नवान् भवतीति त्रैष्टुभं प्रउगं कुर्य्यादित्याहुर्वीर्यं वै त्रिष्टुब् वीर्य्यवान् भवतीति जागतं प्रउगं कुर्य्यादित्याहुर्जागता वै पशवः पशुमान् भवतीति"(२) इति। 'क्षत्रं' बलम्। अन्यत् पूर्ववद् व्याख्येयम्॥

एवं नानाविधब्राह्मणसिद्धानि मतान्युपन्यस्य तेषु प्रथमं स्वकीयत्वेन स्वीकरोति। (३)"तदु गायत्रमेव कुर्य्याद् ब्रह्म वै गायत्री ब्रह्मैतदहर्ब्रह्मणैव तद् ब्रह्म प्रतिपद्यते"(३) इति। 'तदु' तेषान्तु सप्तानां मध्ये यत् प्रथममुपन्यस्तं 'गायत्रं', तत् 'एव', अस्मिन् महाव्रते 'कुर्य्यात्'। गायत्र्या ब्रह्मत्वं पूर्वमे-

वोक्तम्। अस्य चाक्नो ब्रह्मत्वं तत्प्राप्तिहेतुत्वादवगन्तव्यम्। तस्माद्गायत्रप्रउगरूपेण * 'ब्रह्मणा', 'तत्' महाव्रतं, 'ब्रह्मरूपं प्राप्नोति ॥

दाशतयीनां † गायत्रीच्छन्दस्कानां बह्वनां विद्यमानत्वात् तद्विशेषं दर्शयति। (४)"तदु माधुच्छन्दसं"(४) इति। तदपि गायत्रीच्छन्दस्कं प्रउगं मधुच्छन्दोनाम्न ऋषेः सम्बन्धि द्रष्टव्यम्। तेन ऋषिणा दृष्टं वायवा याहीत्यादिकं यत् मन्त्रजातं तदित्यर्थः ॥

ऋषेर्नाम निर्वक्ति। (५)"मधु ह स्म वा ऋषिभ्यो मधुच्छन्दाश्छन्दति तन्मधुच्छन्दसो मधुच्छन्दस्त्वम्"(५) इति। योऽयं 'मधुच्छन्दोनामक ऋषिः सोऽयमितरेभ्य ऋषिभ्यो 'मधु छन्दति' मधुरं भोग्यं सम्पादयितुमिच्छति। 'ह स्म वा' इति निपातत्रयसमूह ऐतिह्यार्थः। यस्मादयं मध्विच्छति तस्मादस्य तन्नाम सम्पन्नं ॥

ऋषिसम्बन्धेन शस्त्रं प्रशस्य फलसम्बन्धेनापि प्रशंसति। (६)"अथो अन्नं वै मधु सर्वं वै मधु सर्वे वै कामा मधु तद्यन्माधुच्छन्दसं शंसति सर्वेषां कामानामवरुध्यै"(६) इति। मादकवाची ‡ 'मधु'शब्दस्तन्निष्ठं प्रियं तल्लक्षयति। अन्नस्य प्रियत्वं प्रसिद्धं। तद्वद्वस्त्रादेः सर्वस्यापि भोग्यस्य प्रियत्वं प्रसिद्धम्। यस्मात् प्रियत्वेन 'सर्वे', अपि 'कामाः', मधुरूपाः,

---

* तद्गायत्ररूपेणेति ख, घ० च।

† दाशतय्यामिति क०, ग० च।

‡ सात्त्विकवाचीति क०, ग० च।

तस्मात् कारणात् मधुत्वसामान्यात् 'माधुच्छन्दसं शंसति', इति 'यत्', अस्ति 'तत्', सर्वकामप्राप्त्यै सम्पद्यते ॥

माधुच्छन्दसवेदनं प्रशंसति। (७)"सर्वान् कामानवरुन्धे य एवं वेद"(७) इति ॥

पुनः प्रकारान्तरेण शस्त्रं प्रशंसति। (८)"तद्वैकाहिकं रूपसमृद्धं बहु वा एतस्मिन्नहनि किञ्च किञ्च वारणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत् प्रतिष्ठाया-मन्ततः प्रतितिष्ठन्ति"(८) इति। 'तदु' तदपि यथोक्तं गायत्रं प्रउगम्, 'ऐकाहिकम्' एकाहे प्रकृतिभूतेऽग्निष्टोमे निष्पन्नं, तदेव विश्वजिद्द्वारेणास्मिन् महाव्रते प्राप्तम्। अत ऐकाहिकत्वादेतत् 'रूपसमृद्धं', प्रकृतिरूपे ह्येकाहे कृत्स्नस्यानुष्ठेयस्य प्रत्यक्षवचन-प्रापितत्वादविस्मरणेन सर्वमनुष्ठातुं शक्यं सेयं रूपसमृद्धिः। न च किमनेनैकाहिकवचनेनेति शङ्कनीयं। तस्यानिष्टशम-नार्थत्वात् 'एतस्मिन्' महाव्रताख्ये, 'अहनि', 'वारणं' शिष्टैर्निवा-रणीयं, वर्जनीयं किमपि बहुविधं दासीनृत्यबहुभूतमैथुनब्रह्म-चारिपुंश्चलीसम्प्रवादादिकं, 'क्रियते'। अतस्तस्य सर्वस्य शान्त्यर्थ-मेव रूपसमृद्धस्यैकाहिकस्य प्रउगस्य शंसनम्। एकाहस्य तु सर्व-विकृतिप्रतिष्ठापकत्वाच्छान्तिहेतुत्वमुपपन्नम्। अतो यजमाना अपि 'अन्ततः' संवत्सरसत्रस्यावसानभागे उपान्त्येऽस्मिन्नहनि, 'तत्' तेन शस्त्रपाठेन, प्रतिष्ठारूपाया अनिष्टशान्त्यामेव 'प्रति-तिष्ठन्ति' प्रतिष्ठिता भवन्ति ॥

अस्य शस्त्रस्य प्रतिष्ठाहेतुत्ववेदनं तत्पूर्वकानुष्ठानं च प्रशंसति (९)"प्रतितिष्ठति य एवं वेद येषां चैवं विद्वानेतद्धो-

ता शंसति"(८) इति। 'येषां' सत्रिणामर्थं, 'एवं' उक्तप्रकारेण, शस्त्रमहिमानं 'विद्वान् होता', तत् 'एतत्', शस्त्रं, 'शंसति'। तेऽपि सत्रिणः प्रतितिष्ठन्तीति द्रष्टव्यम् ॥ २ ॥

---

(१)वायवा याहि दर्शतेमे सोमा अरं कृता इत्येतद्वा अहरहर्यजमानाय च देवेभ्यश्च(१) (२)अर हास्मा एतद्वहर्भवति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति(२) (३)इन्द्रवायू इमे सुता आ यातमुपनिष्कृतमिति यद्वै निष्कृतं तत् संस्कृतमाह(३) (४)अस्येन्द्रवायू संस्कृतं गच्छतो य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति(४) (५)मित्रं हुवे पूतदक्षं धियं घृताचीं साधन्तेति वाग्वै धीर्घृताची(५) (६)वाचमेवास्मिंस्तद्दधाति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति(६) (७)अश्विना यज्वरीरिष इत्यन्नं वा इषोऽन्नाद्यस्यावरुद्ध्यै(७) (८)आ यातं रुद्रवर्त्तनी इत्याह(८) (९)अस्याश्विनौ यज्ञं गच्छतो य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति(८) (९)इन्द्रायाहि चित्रभानविन्द्रायाहि धियेषित इन्द्रायाहि तूतुजान इत्यायाह्यायाहीति शंसति(९) (१०)आहास्येन्द्रो यज्ञं गच्छति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति(१०) (११)ओमासश्चर्षणीधृतः विश्वेदेवास आगतेति(११)(१२) आहाय

विश्वे देवाः स्वं गच्छन्ति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति(१२) (१३)दाश्वांसो दाशुषः सुतमिति यदाह ददुषो ददुषः सुतमित्येव तदाह(१३) (१४)ददति ह्यस्मैतं कामं देवा यत्काम एतच्छंसति(१४) (१५) य एव वेद येषां चैवं विद्वानेतद्धोता शंसति(१५) (१६)पावका नः सरस्वती यज्ञं वष्टु धियावसुरिति वाग्वै धियावसुः(१६) (१७)वाचमेवास्मिंस्तद्दधाति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति १७) (१८)यज्ञं वष्ट्विति यदाह यज्ञं वहत्वित्येव तदाह(१८) (१९)ताः पराग्वचनेनैकविंशतिर्भवन्त्येकविंशोऽयं पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशस्तमिममात्मानमेकविंशं संस्कुरुते(१९) (२०)तास्तिः प्रथमया त्रिरुत्तमया पञ्चविंशतिर्भवन्ति पञ्चविंश आत्मा पञ्चविंशः प्रजापतिर्दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशस्तमिममात्मानं पञ्चविंशं संस्कुरुतेऽथो पञ्चविंश वा एतदहः पञ्चविंश एतस्याह्नः स्तोमस्तत्समेन समं प्रतिपद्यते तस्माद् द्वे एव पञ्चविंशतिर्भवन्ति भवन्ति(२०) ॥ ४ ॥

इति ऐतरेयप्रथमारण्यके प्रथमोऽध्यायः ॥

---

अस्मिन् प्रउगशस्त्रे ये सप्त तृचास्तेषां मध्ये प्रथमतृचस्य प्रथमार्द्धे योऽयमरमितिशब्दस्तस्य तात्पर्यं दर्शयति। (१)"वायवा याहि दर्शतेमे सोमा अरङ्कृता* इत्येतद् वा अहररं यजमानाय च देवेभ्यश्च"(१) इति। 'दर्शत' दर्शनीय, हे 'वायो', अस्मिन् कर्मण्यागच्छ। 'इमे' ऐन्द्रवायवादिग्रहगताः, 'सोमाः', 'अरं' अलं, सम्पूर्णा यथा भवन्ति तथा, 'कृताः' सम्पादिताः, 'इति' एवं, मन्त्रेऽभिधीयते। यस्मात् 'एतत्' महाव्रताख्यम् 'अहः', 'यजमानाय च देवेभ्यश्च', 'अरं' सोमम्पातुमलं। तस्मायुक्तो मन्त्रेऽरमिति शब्दः॥

सम्पूर्त्तिवेदनतत्पूर्वकानुष्ठाने पूर्ववत् प्रशंसति। (२)"अरं हास्मा एतदहर्भवति य एवं वेद येषाञ्चैवं विद्वानेतद्धोता शंसति"(२) इति॥

द्वितीयस्य तृचस्यान्तिमायामृचि मध्यमपादे निष्कृतशब्दं व्याचष्टे। (३)"इन्द्रवायू इमे सुता आ यातमुपनिष्कृतमिति† यद्वै निष्कृतं तत् संस्कृतमाह"(३) इति। हे 'इन्द्रवायू', 'इमे' सोमाः, भवदर्थमभि'षुताः', तस्मात् 'उपनिष्कृतम्', इमं सोमं प्रति, युवामागच्छतम् 'इति' अस्मिन् पादे, 'निष्कृत" इति 'यत्' पदं, अस्ति 'तत्' पदं, 'संस्कृतं' इत्यमुमर्थं' 'आह'॥

वेदनानुष्ठाने प्रशंसति। (४)"अस्येन्द्रवायू संस्कृतं गच्छतो य एवं वेद येषाञ्चैवं विद्वानेतद्धोता शंसति"(४) इति। 'अस्य'

---

* ऋग्वेदे म०१, सू०२, ऋ०१।

† ऋग्वेदे म०१, सू०२, ऋ०४-६।

एवमभिज्ञस्य, सम्बन्धिनं संस्कारयुक्तं सोमं 'इन्द्रवायू', आभिमुख्येन खलु प्राप्नुतः ॥

तृतीयतृचस्य प्रथमायामृचि तृतीयपादं व्याचष्टे । (५)"मित्रं हुवे पूतदक्षमिधियं घृताचीं साधन्तेति*वाग्वै धीर्घृताची"(५)इति । 'पूतेषु शुद्धेषु, 'दक्षं' कुशलं, 'मित्रं,' 'हुवे' आह्वयामि । कीदृशं मित्रं, 'धियं घृताची" साधयन्तं, 'धियं' ध्यानयोग्यं, 'घृताचीं' क्षरणोपेतं द्रव्यमाज्योदकादिकं, प्रापयन्तीं मन्त्ररूपां वाचं सम्पादयन्तीं । साधयन्तौ इति द्विवचनं वा । वरुणञ्चेति द्वितीयपादे वरुणस्यापि प्रकृतत्वेनोभयोर्विशेषणत्वात्, 'इति' एतस्मिन् तृतीयपादे, 'धीर्घृताची', इत्यनेन पदद्वयेन 'वाग्,' एव विवक्षिता ॥

वेदनं शंसनञ्च प्रशंसति । (६)"वाचमेवास्मिंस्तद्दधाति य एवं वेद येषाञ्चैवं विद्वानेतद्धोता शंसति"(६) इति । 'तत्' तेन वेदनेन, शंसनेन, च ॥

चतुर्थस्य तृचस्य प्रथमपादं व्याचष्टे । (७)"अश्विना यज्वरीरिषो† इत्यन्नं वा इषोऽन्नाद्यस्यावरुद्ध्यै"(७) इति । हे 'अश्विनौ,' 'यज्वरीः' यागनिष्पादिकाः, 'इषः' हविर्लक्षणानि अन्नानि, स्वीकुरुतमित्यध्याहारः । यद्वा ऋचोऽन्तिमेन च तस्य तमितिपदेन सम्बन्धः । भक्षयतमिति तस्यार्थः । अत्र यत् 'इषः' इति पदं तस्यान्नमेवार्थः । अतोऽन्नप्राप्त्यर्थमिदं भवति ॥

एतस्य तृचस्यान्तिमपादो निगदव्याख्यान इत्येतद्दर्शयति ।

---

* ऋग्वेदे १, सू० २, ऋ० ७ ।

† ऋग्वेदे म० १, सू० ३, ऋ० १ ।

(८)"आ यातं रुद्रवर्त्तनी* इत्याह"(८)इति। अयं मन्त्र आ यातमित्यादिपादं पठति†। तत्राश्विनोरागमनं स्पष्टमेव प्रतीयत इत्यभिप्रायः। रुद्रस्येव वर्त्तनः मार्गौ ययोरश्विनोस्तौ 'रुद्रवर्त्तनौ', यथा रुद्रस्य जगदीश्वरस्य स्वतन्त्रस्य मार्गौ न क्वापि प्रतिबध्यते तद्वदनयोरपि। तादृशौ हे अश्विनौ इह अस्मिन् कर्मण्यागच्छतं॥

वेदनशंसने प्रशंसति। (९)"अस्याश्विनौ यज्ञं गच्छतो य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति"(९) इति॥

पञ्चमस्य तृचस्य तिसृष्वृक्षु प्रथमपादानान्तात्पर्य्यं दर्शयति। (१०)"इन्द्रायाहि चित्रभानविन्द्रायाहि धियेषित इन्द्रायाहि तूतुजानः‡ इत्यायाह्यायाहीति शंसति"(१०) इति। हे 'चित्रभानो' विचित्ररश्मियुक्त, 'इन्द्र', त्वमस्मिन् कर्मणि 'आयाहि',। तथा हे 'इन्द्र', 'धिया' स्वबुद्ध्या, 'इषितः' प्रेरितः सन्, अनुग्रहपूर्वकम् 'आयाहि'। तथा हे 'इन्द्र', 'तूतुजानः' शत्रून् हिंसन्, 'आयाहि'। 'इति' एतेषु त्रिषु पादेषु, पुनः पुनः 'आयाहीति', पठन्नेव होता 'शंसति'। तेन इन्द्रस्त्वरया समागच्छतीत्यभिप्रायः॥

वेदनशंसने प्रशंसति (११)"आ हास्येन्द्रो यज्ञं गच्छति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति"(११) इति। 'आगच्छति ह' इत्यन्वयः। सर्वथैवागच्छतीत्यर्थः। पूर्वस्मिन्नश्विनोर्वाक्येऽप्यागच्छती हेत्येवं योजनीयं॥

---

* ऋग्वेदे म०१, सू०३, ऋ०३।

† अत्रायातमित्यादिपादं पठन्तीति क०, ग० च।

‡ ऋग्वेदे म०१, सू०३, ऋ०४-५-६।

षष्ठस्य तृचस्य प्रथमार्द्धं स्पष्टार्थत्वाभिप्रायेण पठति। (१२)"ओमासश्चर्षणीधृतो विश्वेदेवास आ गतेति" *(१२) इति। हे 'विश्वेदेवाः', अस्मिन् कर्मण्यागच्छत। कीदृशाः, अवन्ति रक्षन्तीति 'ओमासः', चर्षणयो मनुष्या यजमाना-स्तान्धारयन्ति पोषयन्तीति 'चर्षणीधृतः'॥

वेदनशंसने प्रशंसति। (१३)"आ हास्य विश्वेदेवा हवं गच्छन्ति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति"(१३) इति। हूयत अत्र इति 'हवः' यज्ञः॥

द्वितीयार्द्धं व्याचष्टे। (१४)"दाश्वांसो दाशुषः सुतमिति† यदाह ददुषो ददुषः सुतमित्येव तदाह"(१४) इति। कीदृशा विश्वेदेवाः, 'सुतं' अभिषुतं सोमं, 'दाशुषः' दत्तवतः यजमानस्य, 'दाश्वांसः' फलं दत्तवन्तः, 'इति' एतस्मिन्, श्रुतिः 'यदाह', 'दाशुषः', इति 'यत्' पदं, 'तत्' तेन पदेन, 'ददुषो ददुषः', 'इति' अमुमेवार्थम्, 'आह'। दाशृदान इत्यस्माद्धातोस्तच्छब्द-निष्पत्तिः। एकवचनस्य यजमानजातिविषयत्वाद्वीप्साऽर्थोऽ-पि लभ्यते॥

दाश्वांस इति पदेन सूचितं फलं दर्शयति। (१५)"ददति हास्मै तं कामं देवा यत्काम एतच्छंसति"(१५) इति॥

वेदनशंसने प्रशंसति। (१६)"य एवं वेद येषां चैवं विद्वा-नेतद्धोता शंसति"(१६) इति। ददति हास्मा इति फलमत्रा-प्यनुवर्त्तते॥

---

* ऋग्वेदे म०१, सू०३, ऋ०७।

† ऋग्वेदे म०१, सू०३, ऋ०७।

सप्तमस्य तृचस्य तृतीयपादे धियावसुशब्दं व्याचष्टे(१७)। "पावका नः सरस्वती यज्ञं वष्टु धियावसुरिति* वाग्वै धियावसुः"(१७) इति। या 'सरस्वती', देवी सा 'नः' अस्माकं, 'पावका' शुद्धिहेतुः सती, 'यज्ञं', अस्मदीयं 'वष्टु' वहतु। कीदृशी सरस्वती, 'धियावसुः' बुद्ध्या सर्वानाच्छादयति, बुद्धिप्रदेत्यर्थः। पावकेत्यादिस्तृचस्य प्रथमः पादः, यज्ञमित्यादिस्तृतीयः, तस्मिन् धियावसुरितिशब्देन देवतान्तरन्नाभिधीयते, किन्तु वागेव प्रथमपादोक्ता सरस्वत्येव॥

वेदनशंसने प्रशंसति। (१८)"वाचमेवास्मिंस्तद्दधाति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति" (१८) इति। 'तत्' तेन वेदनेन शंसनेन च॥

तस्मिन्नेव तृतीयपादे वष्टिवति पदं व्याचष्टे। (१९)"यज्ञं वष्टिवति यदाह यज्ञं वहत्वित्येव तदाह"(१९) इति॥

तृचसप्तकस्थितासृक्सङ्ख्यां प्रशंसति। (२०)"ताः पराग्वचनेनैकविंशतिर्भवन्त्येकविंशोऽयं पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशस्तमिममात्मानमेकविंशं संस्कुरुते"(२०) इति। 'आत्मा' मध्यदेहः। स्पष्टमन्यत्॥

आवृत्तिविधिपूर्वकं तत्सहितां सङ्ख्यां प्रशंसति। (२१) "तास्त्रिः प्रथमया त्रिरुत्तमया पञ्चविंशतिर्भवन्ति पञ्चविंश आत्मा पञ्चविंशः प्रजापतिर्दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशस्तमिममात्मानं पञ्चविंशं संस्कुरुते

---

* ऋग्वेदे म०१, सू०३, ऋ०१०।

अथो पञ्चविंशं वा एतदहः पञ्चविंश एतस्याह्नः स्तोमस्तत्स-मेन समं प्रतिपद्यते तस्माद्वै एव पञ्चविंशतिर्भवन्ति भव-न्ति"(२१) इति। 'आत्मा' पुरुषो यजमानः, 'प्रजापतिः' स्रष्टा चतुर्मुखः, एतावुभावपि हस्ताङ्गुल्यादिपञ्चविंशत्यवयवोपेतौ। अन्यत् सर्वमग्निं नर इत्याज्यशस्त्रविधिशेषार्थवद्व्याख्येयं। द्विर-भ्यासोऽध्यायपरिसमाप्त्यर्थः॥ ४ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरे-यारण्यके प्रथमोऽध्यायः॥

---

## अथ द्वितीयोऽध्यायः।



(१)आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ(१) (२)ऐकाहिकौ रूपसमृद्धौ बह्व वा एतस्मिन्नहनि किञ्च किञ्च वारुणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्ततामेव तत् प्रतिष्ठाया-मन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति(२) (३)इन्द्र नेदीय एदिहि प्रसूति-राशचीभिर्यै त उक्थिन इत्युक्थं वा एतदहरुक्थ-वद्रूपसमृद्धमेतस्याह्नो रूपं(३) (४) प्रैतु ब्रह्मणस्पतिरच्छा वीरमिति वीरवद्रूपसमृद्धमेतस्याह्नो रूपं(४) (५)उत्तिष्ठ ब्रह्मणस्पते सुवीर्य्यमिति वीर्य्यवद्रूपसमृद्धमेतस्याह्नो रूपं (५) (६)प्र नूनं ब्रह्मणस्पतिः मन्त्रं वदत्युक्थ्यमित्युक्थं वा एतदहरुक्थवद्रूपसमृद्धमेतस्याह्नो रूपं(६) (७)अग्नि-र्नेता स वृत्रहेति वार्त्रघ्नमिन्द्ररूपमैन्द्रमेतदहरेतस्याह्नो रूपं(७) (८)त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं वृषा वृषत्वे-भिर्महित्वेति वृषण्वद्वा इन्द्रस्य रूपमैन्द्रमेतदहरेत-स्याह्नो रूपं(८)(९)पिन्वन्त्यपोऽत्यं न मिहे विनयन्ति वाजि-नमिति वाजिमद्वा इन्द्रस्य रूपमैन्द्रमेतदहरेतस्याह्नो

रूपं ९) (१०)अथो उत्सं दुहन्ति स्तनयन्तमक्षितमितिस्तनयद्वा इन्द्रस्य रूपमैन्द्रमेतदहरेतस्याह्नो रूपं(१०)(११)प्र व इन्द्राय वृहत इति यद्वै वृहत्तन्महन्महद्रूपसमृद्धमेतस्याह्नो रूपं(११) (१२)वृहदिन्द्राय गायतेति यद्वै वृहत्तन्महन्महद्रूपसमृद्धमेतस्याह्नो रूपं(१२) (१३)नकिः सुदासो रथं पर्य्यास नरीरमदिति पर्य्यस्तवद्रान्तिमद्रूपसमृद्धमेतस्याह्नो रूपं(१३) (१४)सर्वान् प्रगाथाञ्छंसति सर्वेषामन्हामाप्त्यै सर्वेषामुक्थानां सर्वेषां पृष्ठानां सर्वेषां शस्त्राणां सर्वेषां प्रउगाणां सर्वेषां सवनानां(१४) ॥ १ ॥

ऐतरेयारण्यकभाष्यम् ।

प्रथमेऽध्याये प्रातःसवनगतं आज्यप्रउगशस्त्रद्वयं निरूपितं द्वितीये माध्यन्दिनसवनगतं मरुत्वतीयादि निरूप्यते । तस्य मरुत्वतीयस्यादौ पठनीयतृचं विधत्ते । (१)"आ त्वा रथं यथोतये* इदं वसो सुतमन्धः†इति मरुत्वतीयस्य प्रतिपदनुचरौ"(१) इति । 'आ त्वा' इतितृची मरुत्वतीयशस्त्रस्य 'प्रतिपत्' प्रारम्भरूपः । 'इदं वसो' इत्ययं तृचः 'अनुचरः' प्रतिपदमनुचरति, अनन्तरं पठनीय इत्यर्थः ॥

तावेतौ तृचौ प्रशंसति । (२)"ऐकाहिकौ रूपसमृद्धौ बहु वा एतस्मिन्नहनि किञ्च किञ्च वारणं क्रियते शान्त्या एव शान्तिर्वै

---

* ऋग्वेदे म०८, सू०६८, ऋ०१ ।

† ऋग्वेदे म०८, सू०२, ऋ०१ ।

प्रतिष्ठैकाहः शान्त्यामेव तत् प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद येषाञ्चैवं विद्वानेतद्धोता शंसति"(२) इति । एकाहे प्रकृतिभूते अग्निष्टोमे समुत्पन्नावेतौ तृचौ 'ऐकाहिकौ' । रूपसमृद्ध्यादिकं माधुच्छन्दसप्रउगशेषार्थवादवद्व्याख्येयं ॥

अनुरूपस्यानन्तरवर्तिनि* प्रगाथे यदुक्थिन इति पदं तत् प्रशंसति । (३)"इन्द्र नेदीय एदिहि† प्रमूतिराशचीभिर्ये त उक्थिनः‡ इत्युक्थं वा एतदहरुक्थवद्रूपसमृद्धमेतस्याह्नो रूपं"(२) इति । इन्द्रेत्यादिः प्रगाथस्तस्मिन् प्रगाथे प्रथमायामृचि प्रथमः पादः । हे 'इन्द्र', 'नेदीयः' 'प्रत्यासन्नतमम्, इदं कर्म प्रति, आगच्छैव । 'एदिहि' इत्यत्र 'एच्छब्द एवकारार्थः । 'प्रमूतिः' इत्यादिको द्वितीयस्यामृचि तृतीयः पादः । हे 'इन्द्र', 'शचीभिः' शक्तिभिः सह, कर्मण्यागतेन त्वया 'प्रमूतिः' अनुज्ञा देया । 'ये' होत्रादयः, त्वयानुज्ञाताः, 'ते', अस्मिन् कर्मणि 'उक्थिनः' शस्त्रिणः, 'इति' एतस्मिन् पादे, यत् 'उक्थिनः' इति पदन्तद्युक्तं । तस्मात् 'एतत्' महाव्रताख्यं, 'अहः', 'उक्थं वै' शस्त्रात्मकमेव । तदेव कथमिति तदुच्यते । 'एतस्य' महाव्रताख्यस्य, 'अह्नः', 'स्वरूपं, 'उक्थवत्' शस्त्रोपेतं । यद्यपि कर्मान्तरमप्युक्थवदेव तथाप्येतत् 'रूपसमृद्धं', प्रशस्तैः शस्त्रैरुपेतत्वात् । तस्मादुक्थिन इति पदं युक्तं ॥

---

* अनन्तरभाविनीति क०, ग० च ।

† ऋग्वेदे म०८, सू०५३, ऋ०५ ।

‡ ऋग्वेदे म०८, सू०५३ ऋ०६ ।

प्रगाथान्तरगतं वीरमिति पदं प्रशंसति। (४)"प्रैतु ब्रह्मणस्पतिरच्छा वीरमिति * वीरवद्रूपसमृद्धमेतस्याह्नो रूपं"(४) इति। प्रैत्वित्यादिः प्रगाथस्य प्रथमायामृचि प्रथमः पादः। अच्छा वीरमिति तृतीयः पादः। 'ब्रह्मणः' वेदस्य, 'पतिः' पालकः, एतन्नामको देवः 'वीरं' शीघ्रफलप्रदत्वेनात्यन्तशूरम्, एतत् कर्म 'अच्छा' प्राप्तुं, 'प्रैतु' प्रकर्षेण गच्छतु। एतत्पाठेनैवास्य 'अह्नो रूपं', 'वीरवत्' वीरपदयुक्तं सत्, 'रूपेण 'समृद्धं' भवति॥

प्रगाथान्तरे सुवीर्यमिति पदं प्रशंसति। (५)"उत्तिष्ठ ब्रह्मणस्पते सुवीर्यमिति † वीर्यवद्रूपसमृद्धमेतस्याह्नो रूपं"(५) इति। 'उत्तिष्ठेत्यादिः प्रगाथस्य प्रथमायामृचि प्रथमः पादः। हे 'ब्रह्मणस्पते', 'उत्तिष्ठ' इह युक्तो भव। तस्मिन्नेव प्रगाथे द्वितीयस्यामृचि तृतीयपादे 'सुवीर्यमिति पदं विद्यते, तच्च यजमानविशेषणं। शोभनवीर्यापेतस्य फलस्य प्रतिपादनात् 'अह्नो रूपं', वीर्यपदोपेतत्वात् 'रूपसमृद्ध'॥

प्रगाथान्तरे उक्थमिति पदं प्रशंसति। (६)"प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ‡ इत्युक्थं वा एतदहरुक्थवद्रूपसमृद्धमेतस्याह्नो रूपं"(६) इति। 'प्र नूनं' इतिप्रगाथस्य प्रथमायामृचि पूर्वार्द्धं। 'ब्रह्मणस्पतिः' देवः, 'नूनं' अवश्यं, 'मन्त्रं', प्रकर्षेण 'वदति'। कीदृशं मन्त्रं, 'उक्थ्यं' प्रशस्यं, उत्तिष्ठत्यभिवृद्धिं

---

* ऋग्वेदे म०१, सू०४०, ऋ०३,।

† ऋग्वेदे म०१, सू०४०, ऋ०१-२।

‡ ऋग्वेदे म०१, सू०४०, ऋ०५।

गच्छति कर्म अनेन इत्युकथं शस्त्रं तदर्हति यो मन्त्रः सोऽयं 'उक्थ्यः'। 'उकथं वा एतत्' इति पूर्ववद्व्याख्येयं ॥

अथ कस्याञ्चिद्धाय्यायामृचि वृत्रहेति पदं प्रशंसति। (७)"अग्निर्नेता स वृत्रहेति * वार्त्रघ्नमिन्द्ररूपमैन्द्रमेतदहरेतस्याह्नो रूपं"(७) इति। 'अग्निर्नेता' इत्यृचः प्रक्रमः। 'स वृत्रहा' इति तृतीयपादस्य प्रक्रमः। अयं 'अग्निः,' 'नेता' कर्मणः प्रवर्त्तकः, 'सः', च 'वृत्रहा' शत्रुघाती। यद्यप्येतत्पदमग्नेर्विशेषणं तथापि वृत्रघातित्वमिन्द्रधर्म इति 'इन्द्ररूपं', सम्पद्यते, इन्द्रदेवताकञ्च 'एतदहः'। तस्माद् वृत्रहेतिपदेन 'एतस्य' इन्द्रस्य महाव्रताख्यस्य, 'अह्नो रूपं', सम्पद्यते ॥

धाय्यान्तरे वृषण्शब्दं प्रशंसति। (८)"त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं वृषा वृषत्वेभिर्महित्वेति † वृषण्वद्वा इन्द्रस्य रूपमैन्द्रमेतदहरेतस्याह्नो रूपं"(८) इति। 'त्वं सोम' इत्यृचः प्रथमः पादः। 'त्वं वृषा वृषत्वेभिः' इति तृतीयः पादः। हे 'सोम', 'त्वं', 'क्रतुभिः' एतैः कर्मभिः, 'सुक्रतुर्भूः' शोभनकर्मा भव। तथा 'त्वं,' 'वृषत्वेभिः' वर्षकत्वैः, कामाभिवर्षणैः, 'वृषा' वर्षिता सन्, 'महित्वा' महिमवान् भव। अस्यामृचि वृषेति पदं विद्यते। 'इन्द्रस्य रूपं', अपि 'वृषण्वद्वै' वृषशब्दोपेतमेव, तस्य शब्दस्येन्द्रवाचकत्वात्। 'ऐन्द्रं', इत्यादि पूर्ववत् ॥

धाय्यान्तरे वाजिनमिति पदं प्रशंसति। (९)"पिन्वन्त्यपोऽत्यं

---

* ऋग्वेदे म०३, सू०२०, ऋ०४।

† ऋग्वेदे म०१, सू०९१, ऋ०२।

न मिहे विनयन्ति वाजिनमिति * वाजिमद्वा इन्द्रस्य रूपमैन्द्रमेतदहरेतस्याह्नो रूपं"(९) इति। 'पिन्वन्त्यपः' इति तस्या ऋचः प्रक्रमः। 'अत्यं न मिहे' इति तृतीयः पादः। 'अपः' उदकानि, मरुतो देवताः 'पिन्वन्ति' सिञ्चन्ति, 'मिहे' जलसेचननिमित्तं, 'वाजिनं' मेघं, देवताविशेषेण प्रेरयन्तीति वाजशब्दो अन्नवाची। अन्नं वै वाज इति श्रुतेः। तद्धेतुत्वान्मेघवाची, तस्य प्रेर्यस्य मेघस्य दृष्टान्तः, अत्यन्नेति। अत्यशब्दोऽश्ववाची। अश्वोऽसि हयोऽस्यत्योऽसि नरोऽसीत्यश्वमेधगताद्यभिमन्त्रणमन्त्रे तत्परत्वेन प्रयोगात्। तदीयब्राह्मणे च तथैव व्याख्यातं। अत्योऽसीत्याह तस्मादश्वः सर्वान् पशूनत्येति इति। 'न'शब्द उपमार्थः। यथालोकेऽश्वारूढोऽश्वं प्रेरयति तद्वदित्यर्थः। अस्मिन् पादे वाजिशब्दो विद्यते। 'इन्द्रस्य रूपं', अपि 'वाजिमद्वै' वाजियुक्तमेव। हरितवर्णैरश्वैरुपेतत्वात्। तथा च श्रूयते। अस्मभ्यन्तद्धर्यश्व प्रयन्धीति। 'ऐन्द्रं', इत्यादि पूर्ववत्॥

तस्या ऋचश्चतुर्थपादे स्तनयन्तमिति पदं प्रशंसति। (१०)"अथो उत्सन्दुहन्ति स्तनयन्तमक्षितमिति† स्तनयद्वा इन्द्रस्य रूपमैन्द्रमेतदहरेतस्याह्नो रूपं"(१०) इति। वाजिमत्त्वप्रशंसया सह समुच्चयार्थः 'अथो'शब्दः। अस्मिन् मन्त्रे प्रतिपाद्या मरुतो देवाः। 'स्तनयन्तं' गर्जनयुक्तं, 'अक्षितं' क्षयरहितं, 'उत्सं' जलप्रवाहं, 'दुहन्ति' सम्पादयन्ति। अत्र स्तनयन्तमिति पदं विद्यते।

* ऋग्वेदे म०१, सू०६४, ऋ०६।

† ऋग्वेदे म०१, सू०६४, ऋ०६।

'इन्द्रस्य रूपं', अपि 'स्तनयद्वै' मेघगर्जनयोपेतमेव, तस्य वृष्टि-स्वामित्वात्। 'ऐन्द्र", इत्यादि पूर्ववत्॥

इत्थमन्वाख्याभिधा ऋचः प्रशस्यानन्तरं पठनीये प्रगाथे बृहत्पदं प्रशंसति। (११)"प्र व इन्द्राय बृहत इति * यद्वै बृहत्तन्महन्महद्वद्रूपसमृद्धमेतस्याह्नो रूपं"(११) इति। 'प्र व' इत्यादिः प्रथमः पादः। तस्य द्वितीयपादगतेन 'मरुतो ब्रह्मार्चत' इति मरुच्छब्देनान्वयः कर्तव्यः। हे 'मरुतः', 'वः' युष्मदर्थं, 'बृहते' प्रौढाय, 'इन्द्राय', 'ब्रह्म' परिवृढं कर्म, 'प्रार्चत' प्रकर्षेण सम्पादयत। अत्र प्रथमपादे 'यत्', एव 'बृहत्', इति पदमस्ति, 'तन्महत्', इत्यमुमर्थमाचष्टे। 'एतस्य' महाव्रतस्य, 'अह्नो रूपं', 'महत्' 'वै', अत्यन्तं प्रौढमेव, प्रयोगस्य बहुत्वात्। अतः 'स्वरूपेण 'समृद्ध"॥

अनन्तरपाठेऽत्र प्रगाथे बृहत्पदं पूर्ववत् प्रशंसति। (१२)"बृहदिन्द्राय गायतेति † यद्वै बृहत्तन्महन्महद्वद्रूपसमृद्धमेतस्याह्नो रूपं"(१२) इति। हे सामगा ऋत्विजः, इन्द्रार्थं 'बृहत्' नामकं प्रौढं वा साम 'गायत'। 'यद्वै बृहत्', इत्यादि पूर्ववत्॥

अनन्तरपाठेऽत्र प्रगाथे द्वितीयपादे शब्दद्वयं प्रशंसति। (१३)"नकिः सुदासो रथम्पर्यास न रीरमदिति ‡ पर्यस्तवद्रान्तिमद्रूपसमृद्धमेतस्याह्नो रूपं"(१३) इति। शोभनं फलदानं यस्येन्द्रस्यास्ति सोयमिन्द्रः सुदाः, तस्य 'सुदासः', 'रथं', 'नकिः'

---

* ऋग्वेदे म०८, सू०८९, ऋ०३।

† ऋग्वेदे म०८, सू०८९, ऋ०१।

‡ ऋग्वेदे म०७, सू०३२, ऋ०१०।

'पर्यास' नैव पर्यस्तवान्, शत्रुः कोऽपि स्वार्थं न चालितवान्। तथा 'न रीरमत्' तेन रथेन रमणमपि शत्रुर्न कृतवान्। किंत्विन्द्र एव स्वार्थं पर्यस्यति स्वयमेव रमते च। अत्र पर्यासेति रीरमदिति च पदद्वयस्य श्रुतत्वात् 'एतस्याह्नो रूपं', 'पर्यस्तवत्' लोकान्तरगमनाय परितश्चलनवत्, 'रान्तिमत्' रमणयुक्तञ्च। अतो 'रूपेण 'समृद्ध'' ॥

धाय्याभ्यः पुरस्तादुपरिष्टाच्च ये प्रगाथा उदाहृतास्तान् मिलित्वा प्रशंसति। (१०)"सर्वान् प्रगाथाञ्छंसति सर्वेषामह्नामाप्त्यै सर्वेषामुक्थानां सर्वेषां पृष्ठानां सर्वेषां शस्त्राणां सर्वेषां प्रउगाणां सर्वेषां सवनानाम्"(१४) इति। अशेषप्रगाथशंसनेन 'सर्वेषां' अहरादीनां, प्राप्तिः सम्पद्यते। अहानि संवत्सरसत्रगतानि। उक्थानि यज्ञायज्ञीयसाम्न ऊर्ध्वंभावीन्युक्थ्यक्रतुनिष्पादकानि स्तोत्राणि। पृष्ठानि माध्यन्दिनसवनगतानि रथन्तरबृहदादिसामसाध्यानि स्तोत्राणि। शस्त्राण्याज्यादीनि। यद्यपि शस्त्रान्तर्भूतमेव प्रउगं तथापि ब्राह्मणा आगताः परिव्राजका अभ्यागता इति न्यायेन वैशिष्ट्यविवक्षया प्रउगाणां पृथङ्निर्देशः। सवनानि प्रसिद्धानि। एतेषां 'सर्वेषां' प्राप्त्यर्थं सर्वप्रगाथशंसनं। यस्मिन् ऋग्द्वयसमूहे प्रग्रथनेन तृचः सम्पद्यते, सोऽयं प्रगाथः ॥ ५ ॥

---

(१)असत्सु मे जरितः साभिवेगः सत्यध्वृतमिति शंसति सत्यं वा एतदहः सत्यवद्रूपसमृद्धमेतस्याह्नो रूप(१) (२)तदु वासुक्रं ब्रह्म वै वसुक्रो ब्रह्मैतदहर्ब्रह्मणैव तद् ब्रह्म प्रतिपद्यते(२) (३)तदाहुरथ कस्माद्वासुक्रेणैतन् मरुत्वतीयं प्रतिपद्यत इति न ह वा एतदन्यो वसुक्रान् मरुत्वतीयमुदयच्छन्न विव्याचेति तस्माद्वासुक्रेणैवैतन् मरुत्वतीयं प्रतिपद्यते(३) (४)तदनिरुक्तं प्राजापत्यं शंसत्यनिरुक्तो वै प्रजापतिः प्रजापतेराप्त्यै(४) (५)सक्कदिन्द्रवन्निरा ह तेनैन्द्राद्रूपान्न प्रच्यवते(५) (६)पिबा सोममभियमुग्रतर्द इति शंसति(६)(७)ऊर्वं गव्यं महि गृणान इन्द्रेति महद्वद्रूपसमृद्धमेतस्याह्नो रूपं(७) (८)तदु भारद्वाजं भरद्वाजो ह वा ऋषीणामनूचानतमो दीर्घजीवितमस्तपस्वितम आस स एतेन सूक्तेन पाप्मानमपाहत तद्यद्भारद्वाजं शंसति पाप्मनोपहत्या अनूचानो दीर्घजीवी तपस्व्यसानीति तस्माद्भारद्वाजं शंसति(८) (९)कया शुभा सवयसः सनीळा इति शंसति(९)(१०)आ शासते प्रतिहर्य्यन्त्युक्थेत्युक्थं वा एतदहरुक्थवद्रूपसमृद्धमेतस्याह्नो रूपं(१०) (११)तदु कयाशुभीयमेतद्वै सञ्ज्ञानं सन्तनि सूक्तं यत्कयाशुभीयमेतेन ह वा इन्द्रोऽगस्त्यो मरुतस्ते समजानत तद्यत् कयाशुभीयं शंसति सञ्ज्ञात्या एव(११)

(१२)तद्वायुष्यं तद्योऽस्य प्रियः स्यात् कुर्य्यादेवास्य कयाशुभीयं(१२) (१३)मरुत्वाꣳ इन्द्र वृषभो रणायेति शंसति(१३) (१४)इन्द्र वृषभ इति वृषण्वद्वा इन्द्रस्य रूपमैन्द्रमेतदहरेतस्याह्नो रूपं(१४) (१५)तदु वैश्वामित्रं विश्वस्य ह वै मित्रं विश्वामित्र आस(१५) (१६)विश्वं हास्मै मित्रं भवति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति (१६) (१७)जनिष्ठा उग्रः सहसेतुरायेति निविद्धानमैकाहिकं रूपसमृद्धं बहु वा एतस्मिन्नहनि किञ्च किञ्च वारुणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत् प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति(१७) (१८)ताः पराग्वचनेन सप्तनवतिर्भवन्ति सा या नवतिस्तिस्रस्तास्त्रिंशिन्यो विराजोऽथ याः सप्तातियन्ति यैवैषा प्रशंसा साप्तस्य तस्या एव(१८) (१९)तास्त्रिः प्रथमया त्रिरुत्तमयैकशतं भवन्ति(१९) (२०)पञ्चाङ्गुलयश्चतुष्पर्वा द्वे कपसी दोश्चात्स्वांसफलकं च सा पञ्चविंशतिः पञ्चविंशानीतराणि ह्यङ्गानि तच्छतमात्मैकशततमः(२०) (२१)यच्छतं तदायुरिन्द्रियं वीर्य्यन्तेजो यजमान एकशततम आयुषीन्द्रिये वीर्ये तेजसि प्रतिष्ठितः(२१) (२२)तास्त्रिष्टुभमभिसम्पद्यन्ते त्रैष्टुभो हि मध्यन्दिनः(२२) ॥ ६ ॥

एतस्य महाव्रतगतस्य मरुत्वतीयस्य चतुर्विंशाख्यमहः प्रकृतिः। अत एव पञ्चमारण्यके वक्ष्यते। चतुर्विंशान् मरुत्वतीयस्यातान इति। तत्र यावदतिदिष्टमात्वा रथमित्यादिकं नकिः सुदास इत्येतदन्तं तत्सर्वं व्याख्यातं। अथ नूतनं किञ्चित्सूक्तं विधत्ते। (१)"असत्सुमे जरितः साभिवेगः सत्यध्वृतमिति * शंसति सत्यं वा एतदहः सत्यवद्रूपसमृद्धमेतस्याह्नो रूपम्"(१) इति। असत्सुम इत्यादिकं चतुर्विंशत्यृचं सूक्तं। तस्य प्रथमः पादोऽभिवेग इत्यन्तः प्रतीकप्रदर्शनार्थं पठितः। तदीयायां प्रथमायामृचि सत्यध्वृतमिति पदं विद्यते। तस्य च पदस्य तत्रत्येन पदेन प्र हन्तास्मीत्यनेन सम्बन्धः। ध्वृतिधातोर्वर्णव्यत्ययेन ध्वृतमिति सम्पद्यते। तथासति सत्यद्रोहिणं हनिष्यामि इति वाक्यार्थः। तस्य हननेन सत्यं प्रतिष्ठितं भवति। तच्चात्र युक्तं। यस्मात् 'एतत्' महाव्रताख्यम्, 'अहः', सत्यं वै' सत्यमेव, † तस्मात् 'एतस्याह्नो रूपं', 'सत्यवत्' 'सत्येन युक्तं, 'रूपसमृद्धं', भवति॥

तदेतत्सूक्तमृषिद्वारेण प्रशंसति। (२)"तदु वासुक्रं ब्रह्म वै वसुक्रो ब्रह्मैतदहर्ब्रह्मणैव तद् ब्रह्म प्रतिपद्यते"(२) इति। 'तदु' तदपि, असत्सुमे इत्यादि सूक्तं, 'वासुक्रं' वसुक्राख्येन महर्षिणा दृष्टं वासुक्रं। 'वसुक्रः' महर्षिः,। 'ब्रह्म वै' परब्रह्मस्वरूप एव, तदभिन्नत्वात्। 'एतत्' अपि महाव्रताख्यम्, 'अहः', 'ब्रह्मस्वरूपं', तत्प्राप्तिहेतुत्वात्। अतो ब्रह्मस्वरूपेण वासुक्रेण सूक्तेन, 'ब्रह्मस्वरूपमहः प्राप्नोति॥

---

* ऋग्वेदे म०१०, सू०२७, ऋ०१।　　† सत्यरूपमेवेति क०, ग० च।

पुनरपि प्रश्नोत्तराभ्यां प्रशंसति। (३)"तदाहुरथ कस्माद्वा-सुक्रेणैतन् मरुत्वतीयं प्रतिपद्यत इति न ह वा एतदन्यो वसुक्रान् मरुत्वतीयमुदयच्छन्न विव्याचेति तस्माद्वासुक्रेणैवैतन् मरुत्व-तीयं प्रतिपद्यते"(३) इति। 'तत्' तस्मिन् सूक्ते, जिज्ञासवः पृच्छन्ति, सन्ति वेदे बहूनि ऋष्यन्तरदृष्टानि सूक्तानि, 'अथ' एवं सति, तानि परित्यज्य 'कस्मात्' कारणात्, वसुक्रदृष्टेनैव सूक्तेन 'मरुत्वतीयशस्त्रं 'प्रतिपद्यते'। 'न ह वा', इत्यादि-कमभिज्ञानामुत्तरं। 'वसुक्रात्' महर्षेः, 'अन्यः' कश्चिदपि मह-र्षिः, 'एतत्' 'मरुत्वतीयाख्यं शस्त्रं' 'न', एव 'उदयच्छत्' दाशतय्याः सकाशान्नैवोद्धृतवान्। 'न' अपि 'विव्याच' अयं प्रथमस्तृचः अयञ्चानुचरः इत्यादिविवेकमप्यन्यो न ज्ञातवान्, 'तस्माद्वसुक्रेण', संहितायाः सकाशाच्छस्त्रमुद्धृत्य विवेचितत्वा-त्तदीयेनैव सूक्तेन शस्त्रप्राप्तिर्युक्ता॥

पुनरपि प्रजापतिसम्बन्धेन सूक्तं प्रशंसति। (४)"तदनिरुक्तं प्राजापत्यं शंसत्यनिरुक्तो वै प्रजापतिः प्रजापतेराप्त्यै"(४) इति। देवतावाचिपदं विस्पष्टं निष्कृष्य यत्रोच्यते तन्निरुक्तं, तद्विपरीतं 'अनिरुक्तं', 'तत्' सूक्तमसत्सुम इत्यादिकं, तादृशं। न हि तदी-यास्वृक्षु काचिदपि देवता नामग्रहणपूर्वकं विस्पष्टं प्रतीयते। तस्मादिदं सूक्तं प्रजापतिदेवताकमित्यवगत्य शंसेत्। 'प्रजाप-तिः' प्रजापालको जगदीश्वरः, स च 'अनिरुक्तः', ईश्वरस्य कर्मप्रापितदेहाभावेनेन्द्रादिवन्निष्कृष्य मूर्त्तिं वक्तुमशक्यत्वात्। तस्मादनिरुक्तं सूक्तं तथाविधप्रजापतिप्राप्त्यै सम्पद्यते॥

तस्मिन् सूक्ते द्वाविंशत्यामृचि इन्द्रायेतिपदं प्रशंसति।

(५)"सर्कादिन्द्रनिराह तेनैन्द्राद्रूपान्न प्रच्यवते"(५) इति। तस्मिन् पादे इन्द्राय सुन्वदित्येकवारं, 'इन्द्र', स्वनाम्ना निष्कृष्य ब्रूते। 'तेन' इन्द्रवचनेनैव, तत् सूक्तमिन्द्रसम्बन्धिनः स्वरूपादप्रच्युतं भवति। अतः पूर्व्वोक्तनीत्या * प्राजापत्यत्वादैन्द्रत्वं तच्छंसनेनो-हनीयं॥

सूक्तान्तरं विधत्ते। (६)"पिबा सोममभियमुग्रतर्द इति † शंसति"(६) इति। पिबा सोममित्येतत् पञ्चदशर्चं सूक्तं शंसेत्॥

तस्मिन् सूक्ते प्रथमायामृचि द्वितीयपादे महिशब्दं प्रशंसति। (७)"ऊर्वं गव्यं महि गृणान इन्द्रेति ‡ महद्वद्रूपसमृद्धमेतस्याह्नो रूपम्"(७) इति। हे 'इन्द्र', त्वं, 'ऊर्वं' उरु, प्रभूतं, 'गव्यं' पशुप्रदत्वेन गोभ्यो हितं, 'महि' महत्, पूज्यं यथा भवति तथा, 'गृणानः' कथयानः, अवतिष्ठसे। अत्र महिशब्दस्योक्तत्वात् 'एतस्याह्नो रूपं', 'महच्छब्दयुक्तं सत् 'रूपसमृद्धं' भवति॥

ऋषिसम्बन्धेन सूक्तं प्रशंसति। (८)"तदु भारद्वाजं भरद्वाजो ह वा ऋषीणामनूचानतमो दीर्घजीवितमस्तपस्वितम आस स एतेन सूक्तेन पाप्मानमपाहत तद्यद्भारद्वाजं शंसति पाप्मनो-ऽपहत्या अनूचानो दीर्घजीवी तपस्वसानीति तस्माद्भारद्वाजं शंसति"(८) इति। 'तदु' तदपि सूक्तं पिबा सोमेत्यादिकं, भरद्वाजेन दृष्टं। स च 'भारद्वाजः', सर्वेषां 'ऋषीणां', मध्ये

---

* पूर्वोक्तरीत्येति क०।

† ऋग्वेदे म०६, सू०१७, ऋ०१।

‡ ऋग्वेदे म०६, सू०१७, ऋ०१।

वेदशास्त्रपारङ्गतः, अतिशयेन चिरञ्जीवी, अतिशयेन तपस्वी च बभूव। 'सः' तादृशः भरद्वाजः, 'एतेन' पिबा सोममित्यादि-सूक्तेन, स्वकीयं पापं नाशितवान्। तस्मादेतच्छंसनं पापनाशाय भवति। 'तस्मात्', यः पुमाननूचानत्वादियुक्तो भवानीति कामयते स पुमान् 'भारद्वाजं', एतत् सूक्तं, शंसेत्॥

सूक्तान्तरं विधत्ते। (९)"कया शुभा सवयसः सनीळा इति * शंसति"(९) इति॥

कयेत्यादिकं पञ्चदशर्चं सूक्तं। तत्र चतुर्थ्यामृचि † तृतीयपादगतमुक्थशब्दं प्रशंसति। (१०)"आशासते प्रतिहर्यन्त्युक्थेति‡उक्थं वा एतदहरुक्थवद्रूपसमृद्धमेतस्याह्नो रूपम्"(१०) इति। 'आशासते' फलं कामयमानाय यजमानाय, 'उक्था' शस्त्राणि, 'प्रतिहर्यन्ति' अपेक्षितं कामं प्रतिपादयन्ति। अत्रो-क्थेतिपदस्य विद्यमानत्वात् 'एतदहः', 'उक्थस्वरूपमेव 'एत-स्याह्नो रूपं', उक्थयुक्तत्वात् 'रूपसमृद्ध' भवति॥

नामधेयमुपजीव्य सूक्तं प्रशंसति। (११)"तदु कया-शुभीयमेतद्वै सञ्ज्ञानं सन्तनि सूक्तं यत् कयाशुभीयमेतेन ह वा इन्द्रोऽगस्त्यो मरुतस्ते समजानत तद्यत् कयाशुभीयं शंसति सञ्ज्ञात्या एव"(११)इति। 'तदु' तदपि कयेत्यादिकं सूक्तं, 'कया शुभीयनामकं, कयाशुभेतिपदद्वयस्य तत्र विद्यमानत्वात्। तत्र 'यत्', एतत् 'कयशुभीयं', 'सूक्तम्', अस्ति 'एतत्', एव 'सञ्ज्ञानं'

---

* ऋग्वेदे म०१, सू०१६५, ऋ०१।

† तस्मिन् सूक्ते चतुर्थ्यामृचीति क०, ग० च।

‡ ऋग्वेदे म०१, सू०१६५, ऋ०४।

समीचीनज्ञानहेतु, 'सन्तनि' सम्यग्विस्तृतञ्च। 'एतेन' एव सूक्तेन, 'इन्द्रादयो ये सन्ति ते सर्वेऽपि 'समजानत' सम्यक् ज्ञानवन्तोऽभूवन्। तस्मात् 'कयाशुभीयं शंसति', इति 'यत्', अस्ति 'तत्', सम्यक् ज्ञानार्थमेव सम्पद्यते॥

आयुर्हेतुत्वेन पुनः प्रशंसति। (१२)"तद्वायुष्यन्तद्योऽस्य प्रियः स्यात् कुर्य्यादेवास्य कयाशुभीयं"(१२) इति। 'तदु' तदेव सूक्तम्, 'आयुषः कारणं। तथासति 'यः' यजमानः, 'अस्य', होतुः, 'प्रियः स्यात्', अस्य यजमानस्यार्थे 'कयाशुभीयम्', अवश्यं 'कुर्यात्', ॥

सूक्तान्तरं विधत्ते। (१३)"मरुत्वाँ इन्द्र वृषभो रणायेति* शंसति"(१३) इति। 'मरुत्वानित्यादिकं पञ्चदशर्चं सूक्तं' शंसेत्॥

अत्र वृषभशब्दं प्रशंसति। (१४)"इन्द्र वृषभ इति वृषण्वद्वा इन्द्रस्य रूपमैन्द्रमेतदहरेतस्याह्नो रूपम्"(१४) इति। हे 'इन्द्र', त्वं 'वृषभः' कामाभिवर्षणसमर्थः, 'इति' एवं, सूक्ते श्रूयते। 'इन्द्रस्य रूपं', 'वृषण्वद्वै' कामाभिवर्षणोपेतमेव। 'ऐन्द्रमेतत्' इत्यादि पूर्ववत्॥

ऋषिसम्बन्धेन प्रशंसति। (१५)"तदु वैश्वामित्रं विश्वस्य ह वै मित्रं विश्वामित्र आस"(१५) इति। 'तदु' तत् सूक्तं, विश्वामित्रेण दृष्टं, 'विश्वस्य' सर्वस्य जगतः, 'मित्रम्' इत्यनयैव व्युत्पत्त्या मुनिः 'विश्वामित्रनामकः 'आस'। उत्तरत्राप्येतन्नामधेयमवेतिर्वक्ष्यति। यदस्येदं विश्वं मित्रमासीद्यदिदं किञ्च तस्माद्विश्वामित्रः। ईदृशेन दृष्टत्वात् प्रशस्तमिदमित्यर्थः †॥

---

* ऋग्वेदे म०३, सू४७, ऋ०१।

† उत्तरत्रावधिः प्रशस्तमित्यर्थः, एतत्पर्य्यन्तः पाठः ख० घ० पुस्तकयोर्नास्ति।

वेदनशंसने प्रशंसति *। (१६)"विश्वं हास्मै मित्रं भवति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति"(१६) इति। पूर्ववद्व्याख्येयं॥

सूक्तान्तरं विधत्ते। (१७)"जनिष्ठा उग्रः सहसेतुरायेति† निविद्धानमैकाहिकं रूपसमृद्धं बहु वा एतस्मिन्नहनि किञ्च किञ्च वारुणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत् प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति"(१७) इति। 'जनिष्ठा' इत्यादिकमेकादशर्चं सूक्तं,। अस्मिन् सूक्ते पञ्चाम्टचां शंसनं कृत्वा तत ऊर्ध्वम् इन्द्रो मरुत्वानित्यादीनि निवित्पदानि सूक्तमध्ये धीयन्ते स्थाप्यन्ते। तस्मादेतत् 'निविद्धानं'। तदेतदेकाहे मूलप्रकृतिरूपेऽग्निष्टोमे समुत्पन्नमिति 'ऐकाहिकं'। रूपसमृद्धमित्यादिकं पूर्ववद्व्याख्येयं। आ त्वा रथमित्यारभ्य जनिष्ठा उग्र इत्येतदन्तं मरुत्वतीयं शस्त्रं पञ्चमारण्यके सङ्गृह्य प्रदर्शितं। चतुर्विंशान्मरुत्वतीयस्यातानोऽसत्सु मे जरितः साभिवेगः पिबा सोममभियमुग्रतर्दः कया शुभा सवयसः सनीला मरुत्वां इन्द्र वृषभो रणाय जनिष्ठा उग्रः सहसेतुरायेति मरुत्वतीयमिति। आ त्वा रथमित्यारभ्यासत्सुमे जरितरित्यतः प्राचीन ऋक्समूहो मूलप्रकृतावुत्पन्नः। स च चतुर्विंशाहे चोदकप्राप्तः। तस्मादपि चतुर्विंशाहादस्मिन् महाव्रते पुनश्चोदकप्राप्तः। असत्सु म इत्यादिकमत्रैव विशेषविहितं। एतत् सर्वं मरुत्वतीयं शस्त्रं॥

---

* एतत्पाठः ख०, घ० चिह्नितपुस्तकयोर्नास्ति।

† ऋग्वेदे म०१०, सू०७३, ऋ०१।

नानासूक्तगताखृच्चवस्थितां सप्ताधिकनवतिसङ्ख्यां प्रशंसति*। (१८)"ताः पराग्वचनेन सप्तनवतिर्भवन्ति सा या नवतिस्तिस्रस्तास्त्रिंशिन्यो विराजोऽथ याः सप्तातियन्ति यैवैषा प्रशंसा साम्नस्तस्या एव"(१८)इति। अत्र स्तोत्रियानुरूपयोः षड्चः। षट्सु प्रगाथेषु निष्पन्ना अष्टादशर्चः। धाय्यास्तिस्र ऋचः। असत्सु इति सूक्ते चतुर्विंशतिः। पिबा सोममित्यत्र पञ्चदश। कया शुभेत्यत्रापि पञ्चदश। मरुत्वाँ इन्द्रेत्यत्र पञ्च। जनिष्ठा उग्र इत्यत्रैकादश। 'ताः' सर्वाः, मिलित्वा आवृत्तिरहितेन पाठेन 'सप्ताधिकाः 'नवतिर्भवन्ति'। तत्र या ऋचः 'नवतिसङ्ख्याकास्त्रेधाविभक्ताः सत्यः प्रत्येकं त्रिंशत्सङ्ख्याकाः 'विराजः', भवन्ति। त्रिंशदक्षरा विराडिति श्रुतेः। 'अथ' नवतिसङ्ख्याया ऊर्ध्वं, 'याः' ऋचः, 'सप्तसङ्ख्याकाः, 'अतियन्ति' अतिरिच्यन्ते। एवं सति 'साम्नस्य' सप्तत्वस्यातिरेकनिमित्तायाः प्रशस्तिः, 'एषा', 'तस्या एव' नवतेरेव, 'प्रशंसा', सम्पद्यते। सप्ताधिकनवतिरित्येवं व्यवह्रियमाणत्वात्॥

आवृत्तिविधानपूर्वकं कृत्स्नसङ्ख्यां प्रशंसति। (१९)"तास्त्रिः प्रथमया त्रिरुत्तमयैकशतं भवन्ति इति"(१९)। त्रिरावृत्तया 'प्रथमया', त्रिरावृत्तया च 'उत्तमया', सह 'ताः' पूर्वोक्ता ऋचः, एकाधिकशतसङ्ख्याकाः सम्पद्यन्ते॥

उक्तस्य प्राशस्त्यप्रसिद्धये पुरुषावयवसङ्ख्यासाम्यं दर्श-

---

* एतस्मिन् स्थले विद्यमानामष्टादशानामृचां सङ्ख्यां प्रशंसतीति घ० पुस्तकधृतपुस्तकान्तरपाठः। क० ग० पुस्तकद्वयेप्यय पाठोऽस्ति। केवलमष्टदशानां स्थाने षष्ठानामिति पाठः।

यति। (२०) "पञ्चाङ्गुलयश्चतुष्पर्वा द्वे कक्षसी दोश्चाक्षश्चांसफलकं च सा पञ्चविंशतिः पञ्चविंशानीतराणि ह्यङ्गानि तच्छतमात्मैकशततमः" (२०) इति। एकस्मिन् हस्ते 'पञ्चसङ्ख्याकाः' 'अङ्गुलयः', एकस्यामङ्गुलौ चत्वारि पर्वाणि। 'पर्व'शब्दो भागवाची। अग्रभागो मध्यभागो मूलभागस्तन्मूलभागश्चेति चत्वारो भागाः। यद्यप्यङ्गुष्ठे भागत्रयमेवोपलभ्यते * तथापीतरसाम्याय भागचतुष्टयं कृत्वा गणनीयं। एवं सत्यङ्गुलिगतपर्वसङ्ख्या विंशतिः सम्पद्यते। 'कक्ष'शब्देन कक्षस्य पार्श्वद्वयं विवक्षितम्। ततः 'कक्षे' द्विसङ्ख्यासम्पत्तिः। 'दोः' बाहुरेकः। 'अक्षः' चक्षुरिन्द्रियमेकं। 'अंसफलकं', एकम्। एवं दक्षिणभागे 'पञ्चविंशतिः', सम्पद्यते। एवं वामबाहुगतान्यङ्गान्यपि 'पञ्चविंशतिः'। मिलित्वा पञ्चाशत्सङ्ख्या सम्पन्ना। अनेनैव न्यायेन नाभेरधस्तादुभयोः पादयोरपि पञ्चाशत्सङ्ख्योन्नेया। दक्षिणपादे पूर्ववदङ्गुलिपर्वसङ्ख्या विंशतिः। ऊरू जङ्घे द्वे सन्धयस्त्रय इत्येवं 'पञ्चविंशतिः'। एवं वामपादेऽपि द्रष्टव्यम्। ततो हस्तयोः पादयोश्च मिलित्वा 'तत्' सर्वमङ्गजातं, 'शतं', सम्पद्यते। 'आत्मा' मध्यदेहः, स च 'एकशतसङ्ख्यापूरकः॥

पुनरप्यायुरादिरूपेण शतसङ्ख्यामेव प्रशंसति।(२१) 'यच्छतं तदायुरिन्द्रियं वीर्यन्तेजो यजमान एकशततम आयुषीन्द्रिये वीर्ये तेजसि प्रतिष्ठितः" (२१) इति। तत्र या 'शतसङ्ख्या सेयम् 'आयुरादिरूपा। आयुषः शतसंवत्सरपरिमितत्वात्। आयुषि स्थिते सति 'इन्द्रियं' चक्षुरादिकं प्रवर्त्तते। 'वीर्य'

* उपलभ्यते इति क०, ग० च।

बलं, 'तेजः' कान्तिः, इत्येतत् सर्वं सुस्थितं भवति । तां शत-सङ्ख्यामपेक्ष्य 'यजमानः', 'एकशतसङ्ख्यापूरकः सन्, 'आयु-रादिषु प्रतितिष्ठती भवति ॥

जनिष्ठा उग्र इत्यादिषु ऋक्षु स्थितं त्रिष्टुप्छन्दः प्रशंसति । (२२)"तास्त्रिष्टुभमभिसम्पद्यन्ते त्रैष्टुभो हि मध्यन्दिनः"(२२) इति । 'ताः' शस्त्रगता ऋचः, अन्तिमसूक्तगतं 'त्रिष्टुबाख्यं छन्द आभिमुख्येन प्राप्नुवन्ति । मध्यन्दिनसवनस्य यथोक्तशस्त्रो-पेतस्य त्रिष्टुप्सम्बन्धित्वात् त्रैष्टुभं माध्यन्दिनं सवनमित्यादि-श्रुत्यन्तरप्रसिद्धिद्योतनार्थः 'हि' शब्दः ॥ २ ॥

(१)तदाहुः किं प्रेङ्खस्य प्रेङ्खत्वमित्ययं वै प्रेङ्खो योऽयं पवत एव ह्येषु लोकेषु प्रेङ्खत इति तत् प्रेङ्खस्य प्रेङ्खत्वं(१) (२)एकं फलकं स्यादित्याहुरेकधा ह्येवायं वायुः पवतेऽस्य रूपेणेति(२) (३)तत्तन्नादृत्यं(३) (४)त्रीणि फलकानि स्युरि-त्याहुस्त्रयो वा इमे त्रिवृतो लोका एषां रूपेणेति(४) (५)तत्तन्नादृत्यं(५) (६)द्वे एव स्यातां द्वौ वा इमौ लोका-वद्धातमाविव दृश्येते ये उ एने अन्तरेणाकाशः सोऽन्त-रिक्षलोकस्तस्माद् द्वे एव स्यातां(६) (७)औदुम्बरे स्याता-मूर्ग्वा अन्नाद्यमुदुम्बर ऊर्जोऽन्नाद्यस्यावरुध्यै(७) (८)मध्यत उद्धृते स्यातां मध्यतो वै प्रजा अन्नन्धिनोति मध्यत एव तदन्नाद्यस्य यजमानं दधाति(८) (९)उभय्यो रज्जवो भवन्ति दक्षिणाश्च सव्याश्च दक्षिणा वा एकेषां पशूनां

रज्जवः सव्या एकेषां तद्यदुभय्यो रज्जवो भवन्त्युभयेषां पशूनामाप्त्यै(९) (१०)दार्भ्यः स्युर्दर्भा वा ओषधीनामप-हतपाप्मा तस्माद्दार्भ्यः स्युः(१०) ॥ ३ ॥

ऐतरेयारण्यकभाष्यम् ।

माध्यन्दिनसवने मरुत्वतीयं शस्त्रं निरूपितम्। अथ निष्केवल्यशस्त्रं निरूपणीयं । तस्य च प्रेङ्खमारुह्य शंसनीयत्वा-दादौ प्रेङ्खं विधातुं प्रश्नोत्तराभ्यां तन्निर्वचनं दर्शयति। (१)"तदाहुः किं प्रेङ्खस्य प्रेङ्खत्वमित्ययं वै प्रेङ्खो योऽयं पवत एष ह्येषु लोकेषु प्रेङ्खत इति तत् प्रेङ्खस्य प्रेङ्खत्वम्"(१) इति। 'तत्' तस्मिन्निष्केवल्यशंसनार्थे प्रेङ्खे, केचन जिज्ञासवः पृच्छन्ति। लोके 'प्रेङ्ख'शब्देन दोलाभिधीयते, तस्य 'प्रेङ्खस्य', 'प्रेङ्ख' इत्येत-न्नाम कथं सम्पन्नम् 'इति'। 'अयं वै' इत्यादिकमभिज्ञानामुत्त-रम्। 'यः' 'अयं' वायुः, अन्तरिक्षे 'पवते' सञ्चरति, अयमेव प्रेङ्खशब्दवाच्यः। यस्मात् 'एषः' वायुः, 'एषु' पृथिव्यादिषु, 'लोकेषु',प्रकर्षेण चलति तस्माद्वायुवदन्तरिक्षे चलन्त्या दोलायाः 'प्रकर्षेण 'इङ्खते' चलतीतिव्युत्पत्त्या 'प्रेङ्ख'नामसम्पन्नम् ॥

निर्वचनेन प्रेङ्खं प्रशस्य तन्निष्पादके फलके पूर्वपक्षत्वेन परकीयं मतमुपन्यस्यति। (२)"एकं फलकं स्यादित्याहुरेकधा ह्येवायं वायुः पवतेऽस्य रूपेणेति"(२) इति। अन्तरिक्षे वायो-रेकेनैव प्रकारेण सञ्चारात् 'अस्य' वायोः, 'स्वरूपेण', प्रेङ्खो निष्पादनीय इत्यभिप्रेत्य केचित् 'एकं', एव 'फलकं', अत्र भवे-दिति वदन्ति।

पूर्वपक्षं निराचष्टे। (३)"तत्तन्नादृत्य"(३) इति। तस्मिन् प्रैङ्खे 'तत्' एकफलकमतं, 'न', एवादरणीयं॥

पुनरपि पूर्वपक्षत्वेन मतान्तरमुपन्यस्यति। (४)"त्रीणि फलकानि स्युरित्याहुस्त्रयो वा इमे त्रिवृतो लोका एषां रूपेणे-ति"(४) इति। पृथिव्यन्तरिक्षद्यौरित्येवमेते 'त्रयः', प्रसिद्धाः 'लोकाः', ते च 'त्रिवृतः' उपर्यधोमध्यभावेन त्रेधा वर्त्तन्ते। 'एषां' पृथिव्यादीनां, 'रूपेण', निष्पादयितुं 'त्रीणि फलकानि', भवेयुः 'इति' एवं, अन्ये पूर्वपक्षिणः 'आहुः'॥

एतमपि पक्षं निराचष्टे। (५)"तत्तन्नादृत्य"(५) इति। पूर्ववद्व्याख्येयम्॥

सिद्धान्तत्वेन स्वमतं दर्शयति। (६)"द्वे एव स्यातां द्वौ वा इमौ लोकावद्धातमाविव दृश्येते य उ एने अन्तरेणाकाशः सोऽन्तरिक्षलोकस्तस्माद्द्वे एव स्यातां"(६) इति। प्रैङ्खार्थं द्वे एव फलके सम्पादनीये न त्वेकं नापि त्रीणि। 'द्वे एव' पृथिवी द्यौश्चेति, 'इमौ लोकौ', 'अद्धातमाविव' अस्माकमतिशयेन प्रत्यक्षाविव, 'दृश्येते'। भूलोकवर्त्तिनां मनुष्यादीनां द्युलोकवर्त्तिनां सूर्यचन्द्रादीनां च दृश्यमानत्वात्। 'यः', तु द्वयोरेतयोर्मध्ये 'आकाशः', प्राणिदर्शनरहितः 'सोऽन्तरिक्षलोकः', इत्युच्यते। 'तस्मात्' अन्तरिक्षलोकस्य निष्प्रयोजनत्वात्, इतरलोकद्वयानुसारेण 'द्वे एव', फलके, भवेतां॥

तत्फलकनिष्पादनार्थं वृक्षविशेषं विधत्ते। (७)"औदुम्बरे स्यातामूर्ग्वा अन्नाद्यमुदुम्बर ऊर्जोऽन्नाद्यस्यावरुध्यै"(७) इति। 'ऊर्क्'शब्दो रसवाची। उदुम्बरस्योर्ग्रूपत्वं, तत्-

फलेषु माधुर्यरसत्वस्य विद्यमानत्वात्। तेषाञ्च पक्वफलानां भक्ष्यत्वेन अपक्वफलानामुपदंशत्वेन अत्तुं योग्यं 'अन्नाद्यं', 'उदुम्बरः'। अतो रसस्यात्तुं योग्यस्य अन्नस्य च प्राप्त्यै ते फलके 'औदुम्बरे', भवेतां॥

तयोः फलकयोरन्नसाधनतां विधत्ते। (८)"मध्यत उद्गृते स्यातां मध्यतो वै प्रजा अन्नं धिनोति मध्यत एव तदन्नाद्यस्य यजमानन्दधाति"(८) इति। ते फलके यथा भूमिं न स्पृशतः, यथा चोपरितनं वीवधनामकं तिर्य्यक्काष्ठं न स्पृशतः, तथैव भूमिवीवधयोर्मध्यदेशे 'उद्गृते' ऊर्ध्वधारणं प्राप्ते, भवेतां। भुज्यमानम् 'अन्नं', मध्यदेश एव 'प्रजाः', प्रीणयति। 'तत्' तेनोद्धरणेन, 'अन्नाद्यस्य' भोज्यस्य, मध्ये 'एव', 'यजमानं', स्थापयति॥

प्रेङ्खधारणाय रज्जुद्वयं विधत्ते। (९)"उभय्यो रज्जवो भवन्ति दक्षिणाश्च सव्याश्च दक्षिणा वा एकेषां पशूनां रज्जवः सव्या एकेषां तद्यदुभय्यो रज्जवो भवन्त्युभयेषां पशूनामाप्त्यै"(९) इति। दक्षिणहस्तेन निर्मिता 'रज्जवः', दक्षिणावृतः * वामहस्तेन निर्मिताः सव्यावृतः। एवमत्रोभयविधा 'रज्जवः', भवेयुः। लोकेऽपि केचित्पशवः दक्षिणावृद्भिर्बध्यन्ति, केचित् सव्यावृद्भिः। तदुभयविधपशुप्राप्त्यर्थं द्विविधा रज्जवो भवेयुः॥

तासां रज्जूनां कारणद्रव्यं विधत्ते। (१०)"दार्भ्यः स्युर्दर्भो वा ओषधीनामपहतपाप्मा तस्मात् दार्भ्यः स्युः"(१०) इति। 'ओषधीनां' तृणविशेषाणां, मध्ये दर्भस्य शुद्धिहेतुत्वात्पापराहित्यं।

* प्रदक्षिणावृत इति क०, ग० च।

पवित्रं वै दर्भा इति श्रुत्यन्तरात्। 'तस्मात्', रज्जवो दर्भेण निष्पादनीयाः। एतत्सर्वं पञ्चमे सङ्गृहीतं। रज्जूभ्यामूर्ध्वमुदयति दक्षिणतो दक्षिणयोत्तरतः सव्यया दार्भ्ये त्रिगुणे स्यातामिति। यद्यपि दक्षिणोत्तरभागयोर्द्वे एव रज्जू तथाप्येकैकस्यां त्रिगुणत्वात् षट्सङ्ख्याकानवयवानभिप्रेत्य 'रज्जवः', इति बहुवचनम्॥ ३॥

(१)अरत्निमात्र उपरि भूमेः प्रेङ्खः स्यादित्याहुरेतावता वै स्वर्गा लोकाः सम्मिता इति तत्तन्नादृत्यं(१) (२)प्रादेशमात्रे स्यादित्याहुरेतावता वै प्राणाः सम्मिता इति तत्तन्नादृत्यं(२) (३)मुष्टिमात्रे स्यादेतावता वै सर्वमन्नाद्यं क्रियत एतावता सर्वमन्नाद्यमभिपन्नं तस्मान् मुष्टिमात्र एव स्यात्(३) (४)पुरस्तात् प्रत्यञ्चं प्रेङ्खमधिरोहेदित्याहुरेतस्य रूपेण य एष तपति पुरस्ताद्वेयष इमांल्लोकान् प्रत्यङ्ङधिरोहतीति तत्तन्नादृत्यं(४) (५)तिर्यञ्चमधिरोहेदित्याहुस्तिर्यञ्चं वा अश्वमधिरोहन्ति तेनो सर्वान् कामानवाप्नवामेति तत्तन्नादृत्यम्(५) (६)अन्वञ्चमधिरोहेदित्याहुरनूचीं वै नावमधिरोहन्ति नौर्वैषा स्वर्गयाणी यत् प्रेङ्ख इति तस्मादन्वञ्चमेवाधिरोहेत्(६) (७)चुबुकेनोपस्पृशेच्चुबुको हैवं वृक्षमधिरोहति स उ वयसामन्नादतम इति तस्माच्चुबुकेनोपस्पृशेत्(७) (८)बाहु-

(४)"पुरस्तात् प्रत्यञ्चं प्रेङ्खमधिरोहेदित्याहुरेतस्य रूपेण य एष तपति पुरस्ताद्धेष इमान् लोकान् प्रत्यङ्ङधिरोहतीति तत्तन्नादृत्यम्"(४) इति। होता स्वयं पूर्वस्यान्दिश्यवस्थाय 'प्रत्यञ्चं' पश्चिमदिश्यवस्थितं, 'प्रेङ्ख', 'अधिरोहेदित्याहुः'। तत्रे-यमुपपत्तिः,। 'यः' आदित्यः, अस्ति, सः 'एषः', 'एतस्य रूपेण', 'पुरस्तात्', अवस्थाय, पश्चिमारोहरूपेण 'तपति'। उदयादूर्ध्वं आमध्याह्नं पश्चिमाभिमुखस्यादित्यस्योर्ध्वदर्शनादयमेवार्थः प्रसिद्धवाचकेन 'हि'शब्देन उत्तरवाक्ये स्पष्टीकृतः। तस्मात् 'पुरस्तात्', अवस्थायाधिरोहेदिति सोऽयं पूर्वपक्षो 'न', आद-रणीयः॥

पुनरप्यन्यं पूर्वपक्षमुपन्यस्य दूषयति। (५)"तिर्यञ्चमधिरो-हेदित्याहुस्तिर्यञ्चं वा अश्वमधिरोहन्ति तेनो सर्वान् कामान-वाप्नवामेति तत्तन्नादृत्यम्"(५) इति। पूर्वपश्चिमयोरायतनस्य प्रेङ्खस्य उत्तरदक्षिणविस्तारस्तिर्यक्त्वं। तस्यान्यतरस्यां दिश्य-वस्थाय तिर्यक्त्वेनावस्थितं प्रेङ्ख', 'अधिरोहेत्', 'इति', अन्ये 'आहुः'। तत्रेयमुपपत्तिः। अश्वस्य पार्श्वेऽवस्थाय 'तिर्यञ्चं', तं 'अश्वं', जनाः 'अधिरोहन्ति' 'तेन' एव तिर्यगधिरोहणेन, 'सर्वकामप्राप्तिरिति तेषामभिप्रायः। अयमपिपक्षः 'न', आदरणीयः॥

सिद्धान्तिनां मतं दर्शयति। (६)"अन्वञ्चमधिरोहेदित्याहुरनूचीं वै नावमधिरोहन्ति नौर्वैषा स्वर्ग्याणी यत् प्रेङ्ख इति तस्मा-दन्वञ्चमेवाधिरोहेत्(६)" इति। प्रागग्रस्य प्रेङ्खस्य पश्चिमदिश्य-वस्थाय प्रागभिमुख्येनारोहणं 'अन्वगारोहणं, तदेव कुर्यात्,

'इति', सिद्धान्तिनः 'आहुः'। लोके नौर्यदा पश्चिमतीरेऽवस्थाय प्राचीनतीरं गच्छति, तदानीं जना अपि पश्चिमतीरेऽवस्थाय प्राङ्मुखा अधिरोहन्ति, तदिदं नावोऽन्वारोहणं। 'प्रेङ्ख इति', 'यत्', अस्ति एषा, 'स्वर्गप्रापिका 'नौर्वा' नौरेव। 'तस्मात्', अन्वगारोहणं युक्तमिति सिद्धं॥

तस्मिन्नधिरोहणे कञ्चिद्विशेषं विधत्ते। (७)"क्षुवुकेनोपस्पृशेच्छुको हैवं वृक्षमधिरोहति स उ वयसामन्नादतम इति तस्माच्छुवुकेनोपस्पृशेत्"(७) इति। 'छुवुक'शब्देन मुखस्याधारफलकमुच्यते, तेन, प्रेङ्खं 'उपस्पृशेत्'। लोके हि 'शुक'-नामकः पक्षी 'ह', 'एवं' छुवुकस्पर्शनपुरःसरमेव, 'वृक्ष', 'अधिरोहति'। 'स उ' स तु शुकः, पक्षिणां मध्ये अतिशयेन 'अन्नादः'। राजामात्यादयो विनोदार्थं शुकं रक्षन्तः क्षीरादिकं भोजयन्ति। 'तस्मात्', अन्नप्राप्त्यै 'छुवुकेनोपस्पृशेत्'॥

यथा छुवुकस्पर्शनं एवमरत्निस्पर्शनं विधत्ते। (८)"बाहुभ्यामधिरोहेदेवं श्येनो वयांस्यभिनिविशत एवं वृक्षं स उ वयसां वीर्यवत्तम इति तस्माद्बाहुभ्यामधिरोहेत्"(८) इति। 'बाहु'शब्देनात्र कूर्परमारभ्याग्रभागोऽरत्निशब्दवाच्यो विवक्षितः। तथाच पञ्चमे पठ्यते। यत्राङ्गे फलकेऽरत्नी प्रतिष्ठापयतीति। ताभ्यामरत्निभ्यामधिरोहणं कुर्यात्। अनेन प्रकारेण 'श्येनः' बलवान्पक्षी, 'वयांसि' अन्यान् पक्षिणः, 'अभिलक्ष्य तद्भर्त्सनार्थं तेषां दुर्बलानां पक्षिणां उपर्यरत्निभ्यामुपस्पृश्य उपविशति। किञ्चानेनैव प्रकारेणारत्निस्पर्शनपूर्वकं 'वृक्षं', अधिरोहति। 'सः' तु श्येनः, पक्षिणां मध्ये अतिशयेन शक्ति-

मान् । यस्मादेवं श्येनसादृश्यं भवति 'तस्मात्', अरत्नौ प्रतिष्ठापयेत् ॥

अरत्निस्थापनादूर्ध्वं प्रेङ्खमारूढवतो होतुरेकेन पादेन भूमिस्पर्शनं विधत्ते। (९)"अस्यै पादं नोच्छिन्द्यान्नेदस्यै प्रतिष्ठाया उच्छिद्या इति"(९) इति। अस्या भूमेः सकाशात् स्वकीयं दक्षिणं सव्यं वा 'पादं', एकमुच्छिन्नं 'न', कुर्यात्, किन्तु भूमौ पादं प्रतिष्ठापयेत्। 'नेत्', इत्ययं निपातसमूहः परिभूयार्थे वर्त्तते। यद्यहं पादं भूमेर्वियुक्तं कुर्यान्तदानीं 'प्रतिष्ठायाः' अस्याः भूमेः, सकाशादहमेवोच्छिन्नो भूयासमित्यभिप्रेत्य स्वकीयं भयं द्योतयन् भीतिपरिहाराय भूमिं स्पृष्ट्वैव तिष्ठेत् ॥

प्रेङ्खं होतुरुद्गातुश्चारोहणस्थानव्यवस्थां विधाय प्रशंसति। (१०)"प्रेङ्खं होताधिरोहत्यौदुम्बरीमासन्दीमुद्गाता वृषा वै प्रेङ्खो योषासन्दी तन्मिथुनं मिथुनमेव तदुक्थमुखे करोति प्रजात्यै"(१०) इति। मञ्चकवच्चतुष्पदान्विता 'आसन्दी'। होत्रा समारूढः 'प्रेङ्खः', पुल्लिङ्गशब्देनाभिधानात् 'वृषा' रेतःसेचनसमर्थः पुमान्। 'आसन्दी', तु स्त्रीलिङ्गनिर्देशात् 'योषा', तदुभयं मिलित्वा 'मिथुनं', सम्पद्यते। 'तत्' तेनोभयारोहणेन, 'उक्थमुखे' निष्केवल्याख्यस्य शस्त्रस्य प्रारम्भे, 'मिथुनमेव', सम्पादयति। तच्च 'प्रजोत्पत्त्यै भवति ॥

एतद्वेदनं प्रशंसति। (११)"प्रजायते प्रजया पशुभिर्य एवं वेद"(११) इति ॥

प्रकारान्तरेणोभयं प्रशंसति। (१२)"अथान्नं वै प्रेङ्खः श्रीरासन्द्यन्नं चैव तच्छ्रियं चान्वधिरोहते"(१२) इति। पूर्वोक्त-

मिथुनरूपत्वसमुच्चयार्थः 'अथ'शब्दः। प्रेङ्खस्यौदुम्बरत्वादन्नरूपत्वं। तच्च फलकविधाने प्रतिपादितं। 'श्रियं', प्राप्ता राजादय उच्चासनमधिरोहन्ति। अतः 'अन्न',एव 'प्रेङ्खः','श्रीः,' 'आसन्दी', तदुभयस्थानश्रीरूपं एतावुभावनुक्रमेण अधिरोहतः, तदेतदुभयं यजुर्वेदेप्याम्नातं। आसन्दीमुद्गाता रोहति साम्राज्यमेवाधिगच्छति प्रेङ्खं होता नाकस्यैव पृष्ठं रोहतीति॥

इतरेषामासनानि विधत्ते। (१३)"बृसीर्होत्रकाः समधिरोहन्ति सब्रह्मकाः"(१३)इति। तृणविशेषवंशदलादिनिर्मिता आसनविशेषाः बृस्यः कूर्चशब्दाभिधेयाः। अत एव पञ्चमे वक्ष्यते। कूर्चान् होत्रकाः समारोहन्ति ब्रह्मा चेति। प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाग्नीध्रोऽच्छावाकश्चैते 'होत्रकाः', ते च ब्रह्मणा सहिताः 'बृसीः', 'अधिरोहेयुः॥

तदधिरोहणं प्रशंसति। (१४)"समुत्सृप्य वा ओषधिवनस्पतयः फलं गृह्णन्ति तद्यदेतस्मिन्नहनि सर्वशः समधिरोहन्तीषमेव तदूर्जमन्नाद्यमधिरोहन्त्यूर्जोऽन्नाद्यस्यावरुध्यै"(१४) इति। 'ओषधयो ब्रीहियवाद्याः, 'वनस्पतयः पनसोदुम्बराद्याः, ते च सर्वे 'समुत्सृप्य' सम्यगुन्नता भूत्वा, पश्चात् फलन्ति। तथासति यदि 'एतस्मिन्' महाव्रतनामके 'अह्नि' 'सर्वशः' सर्वे ब्रह्मादयः, आसनान्यधिरोहेयुः 'तत्' तेनाधिरोहणेन, 'इषं' अन्नम्, 'ऊर्जं', तद्रसं, 'अन्नाद्य'' भक्षणयोग्यं प्रशस्तान्नञ्च, अधिरूढा भवन्ति। तस्मात् चीरादिरसस्य शाल्यन्नस्य च प्राप्त्यै तदधिरोहणं सम्पद्यते॥

यद्यप्यवरोहणस्य नायङ्कालस्तथाप्यारोहणप्रसङ्गाद्बुद्धिस्थम-

वरोहणं विधातुं कञ्चित् पूर्वपक्षमुपन्यस्य दूषयति। (१५)"वषट्कृत्यावरोहेदित्याहुस्तत्तन्नादृत्यमकृता वै साऽपचितिर्यामपश्यते करोति"(१५)इति। होता 'वषट्'शब्दमुच्चार्य अनन्तरमेव प्रेङ्खात् 'अवरोहेत्', 'इति', केचित् 'आहुः', 'तत्' मतं, 'न', आदरणीयं। कुतः भक्ष्यस्यापचित्यर्थं हि प्रेङ्खादवरोहणं। 'सा,' 'अपचितिः,'पूजनीये भक्षे समागत्य निरीक्षमाणे सति कर्त्तव्या। यद्यपि 'अपश्यते', भक्षाय, 'सापचितिः,' क्रियेत, तदानीमियम् 'अकृता', एव स्यात्। न हि वषट्कारानन्तर्यं भक्षागमनस्यावसरः। तस्यानुवषट्कारादूर्ध्वभावित्वात्॥

पुनरप्यन्यं पक्षमुपन्यस्य दूषयति। (१६)"निगृह्य भक्षमवरोहेदित्याहुस्तत्तन्नादृत्यमकृता व सापचितिर्यामध्यृष्टाय करोति"(१६) इति। 'निगृह्य' नितरां हस्ते गृहीत्वा, पश्चादवरोहणमित्येतदपि मतं 'न', आदरणीयं। अवरोहणलक्षणोपचारकालस्यातिक्रान्तत्वात्। 'अध्यृष्टाय' अधिकत्वेन समीपं प्राप्ताय, या 'अपचितिः', 'सा', इयं कृतापि कालातिक्रमात् 'अकृता', एव भवेत्॥

सिद्धान्तं दर्शयति। (१७)"प्रतिख्याय भक्षमवरोहेदेषा वा अपचितिर्यां पश्यते करोति तस्मात् प्रतिख्यायैव भक्षमवरोहेत्"(१७) इति। 'प्रतिख्याय,' आगच्छन्तं 'भक्षं,' दृष्ट्वा, तदानीमेव तस्मिन् भक्षे पश्यति सति येयमवरोहणरूपा 'अपचितिः,' सा मुख्या पूजा। लोकेऽपि हि शिष्टा आचार्यादीनामागमनात् प्रागपि स्वासनान्नोत्तिष्ठन्ति। तेष्वागत्योपविष्टेषु पश्चादपि नोत्तिष्ठन्ति। किन्तर्हि यावता देशव्यवधानेन ते पश्यन्ति तावति

देशे तद्दृष्टिपातकाल एव सहसोत्तिष्ठन्ति। 'तस्माद्गच्चं प्रतिख्याय', 'अवरोहेत्', इत्येष सिद्धान्तः॥

तस्मिन्नवरोहे कञ्चिन्नियमं विधत्ते। (१८)"प्राङवरोहेत् प्राग्वै देवरेतस प्रजायते तस्मात् प्राङवरोहेदवरोहेत्"(१८)इति। पश्चिमदिशि समारूढो होता स्वयं 'प्राङ्मुखः सन् प्राच्यान्दिशि 'अवरोहेत्'। 'प्राग्वै' प्राच्यामेव दिशि, 'देवानामिन्द्रादीनां 'रेतः,' पुत्रादिरूपेणोत्पद्यते। देवलोकस्य पूर्वदिग्वर्त्तित्वात् 'तस्मात्' देवत्वाय 'प्राङ्', 'अवरोहेत्,' न तु प्रत्यङ्। अभ्यासोऽध्यायसमाप्त्यर्थः॥ ४॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयारण्यके द्वितीयोऽध्यायः॥

---

## अथ तृतीयोऽध्यायः ॥



(१) हिङ्कारेणैतदहः प्रतिपद्येतेत्याहुः(१) (२) ब्रह्म वै हिङ्कारो ब्रह्मैतदहर्ब्रह्मणैव तद् ब्रह्म प्रतिपद्यते य एवं वेद(२) (३)यदेव हिङ्कारेण प्रतिपद्यताऽ३इ वृषा वै हिङ्कारो योषदृङ्मिथुनं मिथुनमेव तदुक्थमुखे करोति प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद(३)(४)यदेव हिङ्कारेण प्रतिपद्यताऽ३इ यथा वा अभ्रिरेवं ब्रह्मणो हिङ्कारो यद्वै किञ्चाभ्रियाभितितृत्सत्यभ्येवैतत्तृणत्त्येवं(४) (५)यं कामं कामयते हिङ्कारेणाभ्येवैनं तृणत्ति य एवं वेद(५) (६)यदेव हिङ्कारेण प्रतिपद्यताऽ३इ वाचो वा एषा व्यावृत्तिर्दैव्यै च मानुष्यै च यद्धिङ्कारः स यद्धिङ्कृत्य प्रतिपद्यते वाचमेव तद्व्यावर्त्तयति दैवीञ्च मानुषीञ्च(६) ॥ १ ॥

ऐतरेयारण्यकभाष्यम् ।

पूर्वाध्याये निष्केवल्यशस्त्रशंसनार्थं प्रेङ्खाधिरोहणमुक्तं । अत्र तच्छंसनं विविच्यते। तत्रादौ हिमित्येतस्य शब्दस्योच्चारणं विधत्ते। (१)"हिङ्कारेणैतदहः प्रतिपद्येतेत्याहुः"(१) इति। 'अहः', शब्देनात्र तदीयं शस्त्रमुपलक्ष्यते। तच्च 'हिङ्कारेण' प्रारभेत 'इति' एवं, अभिज्ञाः 'आहुः'। यद्ययं हिङ्कारस्तोदके-

नव प्राप्तस्तर्ह्यर्थवादसम्बन्धार्थं तद्विध्यनुवाद इति द्रष्टव्यं। एवमन्यत्राप्यप्राप्तस्य विधिः प्राप्तस्य प्रशंसार्थमनुवादः॥

हिङ्कारवेदनं प्रशंसति। (२)"ब्रह्म वै हिङ्कारो ब्रह्मैतद्-ब्रह्मणैव तद्ब्रह्म प्रतिपद्यते य एवं वेद"(२) इति। हिङ्का-रस्याङ्गस्य ब्रह्मप्राप्तिहेतुत्वात् 'ब्रह्मत्वम्'। अतः 'ब्रह्मरूपेण, 'एव', हिङ्कारेण 'एतत्,' 'ब्रह्मरूपम्, 'अहः,' प्राप्नोति॥

पुनरपि हिङ्कारं प्रशंसति। (३)"यदेव हिङ्कारेण प्रति-पद्यता३इ वृषा वै हिङ्कारो योषा ऋक् तन् मिथुनं मिथुन-मेव तदुक्थमुखे करोति प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद"(३)इति। आकारः प्लुत इकारश्चेत्येतदुभयं प्रतिपद्यत इत्येकारस्य स्थानेविहितं। आदरातिशयद्योतनार्था प्लुतिः। 'हिङ्कारेण', शस्त्रं प्रारभ्यत इति यदस्ति, तत्र हिङ्कारस्य पुल्लि-ङ्गशब्देन निर्देशात् ऋचश्च स्त्रीलिङ्गशब्देन व्यवहारात् उभयं मिलित्वा 'मिथुनं', सम्पद्यते। 'मिथुनमेवेत्यादि पूर्ववद्व्या-ख्येयं॥

पुनः प्रकारान्तरेण प्रशंसति। (४)"यदेव हिङ्कारेण प्रति-पद्यता३इ यथा वा अभ्रिरेवं ब्रह्मणो हिङ्कारो यद्वै किञ्चा-भ्रियाभितित्सत्यभ्येवैतत्तृणत्येवम्"(४) इति। 'यदु' शब्द अपि-चेत्येतस्मिन् अर्थे वर्त्तते। स च पूर्वप्रशंसया समुच्चयार्थः। 'हिङ्कारेण', एव प्रारभ्यत इति यदस्ति तत्र 'यथा', एव लोके 'अभ्रिः' खननहेतुः काष्ठविशेषः, 'एवं,' ब्रह्मणः' वेदस्य, 'हि-ङ्कारः', वेदसारस्य निधिस्थानीयस्य खननहेतुः। एवं च सति लोके 'यत्', एव 'किञ्चित् कठिनं भूतलम्, 'अभ्रिया' खननस-

धनभूतया, 'अभितितृत्सति' सर्वतस्तद्दितुं खनितुमिच्छति। स पुमान् 'एतत्' कठिनभूतलम्, 'अभितृणत्ति' 'एव' सर्वथाखनत्येव। 'एवम्', अयं होता, वेदे दुर्लभं फलं लभत इत्यर्थः॥

हिङ्कारवेदनं प्रशंसति। (५)"यङ्कामं कामयते हिङ्कारेणाभ्येवैनं तृणत्ति य एवं वेद"(५) इति॥

पुनरपि प्रकारान्तरेण प्रशंसति। (६)"यद्वेव हिङ्कारेण प्रतिपद्यता३इ वाचो वा एषा व्यावृत्तिर्दैव्यै च मानुष्यै च यद्धिङ्कारः स यद्धिङ्कृत्य प्रतिपद्यते वाचमेव तद्व्यावर्त्तयति दैवीञ्च मानुषीञ्च"(६) इति। स्तोत्रशस्त्ररूपा * वैदिकी वाग् 'दैवी'। अशनाच्छादनादिविषया लौकिकी वाक् 'मानुषी'। एवं सति 'हिङ्कारः', इति 'यत्', अस्ति 'एषा', द्विविधायाः 'वाचः', परस्पर'व्यावृत्तिहेतुः। दैव्यां वाचि हिङ्कारः प्रयुज्यते न तु मानुष्यान्तदेतद्धिङ्कारस्य व्यावर्त्तकत्वं। अतः 'यद्धिङ्कृत्य', शस्त्रं प्रारभेत, तदानीमयं होता द्विविधामपि 'वाचं', परस्परव्यावृत्तां करोति॥ १॥

**(१)तदाहुः कैतस्याह्नः प्रतिपदिति मनश्च वाक् चेति ब्रूयात्(१) (२)सर्वं ऽन्यस्मिन् कामाः श्रिताः सर्वानन्या कामान्दुहे(२) (३)मनसि वै सर्वे कामाः श्रिता मनसा हि सर्वान् कामान्ध्यायति(३) (४)सर्वे ह्यस्मिन् कामाः श्रयन्ते य एवं वेद(४) (५)वाग्वै सर्वान् कामान्दुहे वाचा हि**

---

* स्तोत्रशस्त्रादिरूपेति क॰, ग॰ च।

सर्वान् कामान्वदति(५) (६) सर्वान् ह्यस्मै कामान्वाग्दुहे य एवं वेद(६) (७)तदाहुर्नैतदृचा न यजुषा न साम्ना प्रत्यक्षात् प्रतिपद्येत नर्चो न यजुषो न साम्न इयादिति(७) (८)तदेता एव व्याहृतीः पुरस्ताज्जपेत्(८) (९)भूर्भुवः स्वरित्येता वाव व्याहृतय इमे त्रयो वेदा भूरित्येव ऋग्वेदो भुव इति यजुर्वेदः स्वरिति सामवेदस्तन्नर्चा न यजुषा न साम्ना प्रत्यक्षात् प्रतिपद्यते नर्चो न यजुषो न साम्न एति(९) ॥ २ ॥

ऐतरेयारण्यकभाष्यम् ।

शस्त्रप्रारम्भकाले मनोवाचोरत्यन्तसाधनत्वमभिप्रेत्य प्रश्नोत्तराभ्यान्तदुभयं प्रशंसति। (१)"तदाहुः कैतस्याह्नः प्रतिपदिति मनश्च वाक् चेति ब्रूयात्"(१) इति। अहरुपलक्षितस्य 'एतस्य' शस्त्रस्य, 'का प्रतिपत्' किं प्रारम्भसाधनम्, 'इति' 'तदाहुः' तस्मिन् शस्त्रे जिज्ञासवः पृच्छन्ति। तत्र तदभिज्ञस्योत्तरं 'मनः', 'वाक् च', 'इति' एतदुभयं, प्रारम्भसाधनम् इति 'ब्रूयात्'। अप्रमत्तेन मनसा प्रथमं शस्त्रं पर्यालोच्य पश्चादप्रमत्तया वाचा शंसेदित्यर्थः। निष्केवल्यस्य बहुविधविप्रकीर्णमन्त्रसमुदायत्वाद्वाङ्मनसयोरत्र विशेषेणाप्रमत्तत्वाभिधानं॥

मनश्च वाक् चेत्यनयोरुभयोः पृथगुपयोगं दर्शयति। (२)"सर्वेऽन्यस्मिन् कामाः श्रिताः सर्वानन्या कामान्दुहे"(२)इति। तयोरुभयोर्मध्ये यदन्यत् मनःशब्दवाच्यं तस्मिन् 'सर्वे कामाः', 'श्रिताः'

प्राप्ताः। या तु 'अन्या' वागस्ति सा, 'सर्वान् कामान्', 'दुहे' दुग्धे सम्पादयति ॥

मनसः कामाधारत्वं विशदयति। (३)"मनसि वै सर्वे कामाः श्रिता मनसा हि सर्वान् कामान् ध्यायति"(३) इति। 'कामाः' अभिलाषा मनोवृत्तिविशेषाः, ते 'मनसि', 'व्यावस्थिताः'। अत एव सर्वे लोकाः काम्यमानान् पदार्थान् 'मनसा', ध्यायन्ति' ॥

एतद्वेदनं प्रशंसति। (४)"सर्वे हास्मिन् कामाः श्रयन्ते य एवं वेद"(४) इति ॥

वाचः कामसम्पादकत्वं विशदयति। (५)"वाग्वै सर्वान् कामान्दुहे वाचा हि सर्वान् कामान्वदति"(५) इति। 'वाक्', एव 'सर्वान्', अभिलषितान् पदार्थान् सम्पादयति। यस्मात् लोके ममैते पदार्थाः सन्त्विति दातृणामग्रे 'वाचा', याचते। ते च दातारः प्रयच्छन्ति। तदिदं वाचः कामसम्पादकत्वं ॥

वेदनं प्रशंसति। (६)"सर्वान् हास्मै कामान् वाग् दुहे य एवं वेद"(६) इति ॥

वाङ्मनसयोरप्रमत्तत्वं विधाय हिङ्कारादूर्ध्वं व्याहृतित्रयोच्चारणं विधातुं प्रस्तौति। (७)"तदाहुर्नैतदहरृचा न यजुषा न साम्ना प्रत्यच्चात् प्रतिपद्येत नर्चा न यजुषो न साम्न इयादिति"(७)इति। अयं कर्मविशेष ऋगादिभ्यः 'नेयात्' नापगच्छेत्, इत्यभिप्रेत्य तत् 'एतदहः', 'प्रत्यच्चात्' अव्यवधानात्, 'ऋगादिभिः 'न', प्रारभेत 'इति' एवं, 'तदाहुः' तस्मिन् शास्त्रे अभिज्ञाः कथयन्ति ॥

तदव्यवधानं वारयितुं व्यवधानहेतुं मन्त्रत्रयं विधत्ते।

(८)"तदेता एव व्याहृतीः पुरस्ताज्जपेत्"(८) इति। यस्माद्धिङ्कारस्य ऋगादीनाञ्च मध्ये व्यवधानमपेक्षितं, तस्मादृगादिभ्यः 'पुरस्तात्', 'एता एव' वक्ष्यमाणाः, 'व्याहृतीः', 'जपेत्' ॥

व्याहृतीनां स्वरूपं तत्प्रशंसाञ्च दर्शयति। (९)"भूर्भुवः स्वरित्येता वाव व्याहृतय इमे त्रयो वेदा भूरित्येव ऋग्वेदो भुव इति यजुर्वेदः स्वरिति सामवेदस्तन्नर्चा न यजुषा न साम्ना प्रत्यक्षात् प्रतिपद्यते नर्चो न यजुषो न साम्न एति"(९) इति। 'भूरित्यादिमन्त्रत्रयरूपा एव 'व्याहृतयः'। 'इमे' च मन्त्रा, वेदत्रयप्रतिनिधिरूपाः। अयमेवार्थो भूरित्यादिना स्पष्टीक्रियते। 'तत्' तथासति, व्याहृतीनां मध्ये प्रयोगादृगादिभिरव्यवधानात् प्रारम्भो 'न', भवति। तस्मादृगादिभ्यो नापगच्छति ॥ २ ॥

(१)तदिति प्रतिपद्यते तत्तदिति वा अन्नमन्नमेव तदभि प्रतिपद्यते(१) (२)एतां वाव प्रजापतिः प्रथमां वाचं व्याहरदेकाक्षरद्व्यक्षरान्ततेति तातेति तथैवैतत्कुमारः प्रथमवादी वाचं व्याहरत्येकाक्षरान्ततेति तातेति तथैव तत्तत्वत्या वाचा प्रतिपद्यते(२) (३)तदुक्तमृषिणा(३) (४)बृहस्पते प्रथमं वाचो अग्रमित्येतद्धेव प्रथमं वाचो अग्रं(४) (५)यत् प्रैरत नामधेयं दधाना इति वाचा हि नामधेयानि धीयन्ते(५)(६)यदेषां श्रेष्ठं यदरिप्रमासीदित्येतद्धेव श्रेष्ठमेतदरिप्रं(६) (७)प्रेणा तदेषां निहितं

गुहाविरिति इदमु ह गुहाध्यात्ममिमा देवता अद उ आविरधिदैवतमित्येतत्तदुक्तं भवति(७) ॥ ३ ॥

ऐतरेयारण्यकभाष्यम् ।

निष्केवल्यशस्त्रस्यादौ हिङ्कारं व्याहृतीश्च विधाय तदिदासेत्यस्य सूक्तस्य आदौ यस्तच्छब्दस्तमिमं प्रशंसति। (१)"तदिति प्रतिपद्यते तत् तदिति वा अन्नमन्नमेव तदभिप्रतिपद्यते"(१) इति। 'तदिति' अनेन शब्देन शस्त्रं प्रारभ्यते। लोके हि देशान्तरे कालान्तरे च यत् 'अन्नं', समीचीनं भुक्तं तत् सर्वं, 'अन्नं', पुनः पुनः 'तत् तत्', 'इति' एवं, अनुस्मर्यते। अतोऽत्रापि तच्छब्दोपक्रमेण 'अन्नमेव', अभिलक्ष्य प्रारब्धवान् भवति॥

प्रकारान्तरेण तच्छब्दं प्रशंसति। (२)"एतां वाव प्रजापतिः प्रथमां वाचं व्याहरदेकाक्षरद्व्यक्षरान्ततेति तातेति तथैवैतत्कुमारः प्रथमवादी वाचं व्याहरत्येकाक्षरद्व्यक्षरान्ततेति तातेति तयैव तत्तत्वत्या वाचा प्रतिपद्यते"(२) इति। पुरा किल 'प्रजापतिः' जगत् सृष्ट्वा 'एतां' एव तकारादिकां, 'प्रथमां वाचं', उक्तवान्। कीदृशीं वाचं। 'एकाक्षरद्व्यक्षरां' एकेन ह्रस्वेनाक्षरेणोपेता एकाक्षरा, द्वाभ्यां ह्रस्वदीर्घाभ्यामक्षराभ्यामुपेता द्व्यक्षरा, सैवोभयविधा उदाहृत्य प्रदर्श्यते। 'ततेति', एकाक्षरा, 'तातेति', द्व्यक्षरा। सः 'प्रजापतिः' जगदीश्वरः, प्रथमतः सृष्टं हिरण्यगर्भं पुत्रमभिलक्ष्य उपलालयन् तस्मिन् पितृत्ववाचकं यथोक्तशब्दद्वयं प्रयुक्तवान्। अत एवेदानीन्तना

अपि स्तनन्धयं पुत्रं पितृवाचकशब्देनोपलालयन्ति। यद्वा 'प्रजापतिः' हिरण्यगर्भः, प्रथमं भाषामभ्यस्यन् 'ततेति', वा 'तातेति', 'वाचं', 'व्याहरति'। एवं सूक्तादौ तच्छब्दं प्रयुञ्जानो होता ततशब्दोपेतया प्रजापतिप्रयुक्तया 'तयैव', ईषद्वैलक्षण्येऽपि तच्छब्दस्य ततशब्दोपक्रमसाम्यात्॥

यथोक्तस्य तच्छब्दस्य महिमानं प्रकाशयितुं काञ्चिदृचमुदाहरति। (२)"तदुक्तमृषिणा'(२)' इति। यत् पूर्वेण ब्राह्मणवाक्येन तच्छब्दमाहात्म्यमुदितं 'तत्', एव 'ऋषिणा' अतीन्द्रियार्थदर्शिना, मन्त्रेण, 'उक्तं' प्रकटीकृतं॥

स च मन्त्रविशेषो दाशतय्यामेवमाम्नातः। "वृहस्पते प्रथमं वाचो अग्रं यत् प्रैरत नामधेयं दधानाः। यदेषां श्रेष्ठं यदरिप्रमासीत् प्रेणा तदेषां निहितं गुहाविः" इति। तस्य च मन्त्रविशेषस्यायमर्थः। हे 'वृहस्पते', जातस्य पुत्रस्य 'नामधेयं दधानाः' पित्रादयः, विचार्य इतरस्याः 'वाचः', 'अग्रं' श्रेष्ठं, 'यत्' पदं, 'प्रथमं', 'प्रैरत' प्रयुक्तवन्तः, हे कुमार त्वं विष्णुशर्मा रुद्रशर्मासीत्येवमादि दक्षिणकर्णे पठन्ति। 'यत्' नाम, 'एषां' तदीयबन्धुभिर्व्यवक्रियमाणानां मध्ये, 'श्रेष्ठं' द्व्यक्षरं चतुरक्षरं वेत्यादिशास्त्रीयलक्षणोपेतम्, 'असीत्'। 'यत्' नाम, 'अरिप्रं' पापरहितं, लोकशास्त्रविरोधरहितम्, 'असीत्'। 'एषां' सम्भावितानां नाम्नां मध्ये, यन्नामधेयं 'यत्' यथाप्रोक्तं 'प्रेणा'प्रेम्णा, वृहस्पतिसम्बन्धिना स्नेहेन, 'निहितं' सम्पादितं। तच्च नाम कीदृशं। 'गुहा' गूढं, उपनयनात् प्राक् मातापितृभ्यां गोपितं। तथाचाश्वलायन आह। तन्मातापितरौ

विद्यातामोपनयनादिति। यथा मनुष्येषु तन्नाम गूढं तथा देवेषु 'आविः' प्रकटीकृतं*। देवा हि सर्वज्ञत्वात् गूढमपि जानन्ति॥

एतस्य मन्त्रस्य प्रथमपादमनूद्य व्याचष्टे। (४)"बृहस्पते प्रथमं वाचो अग्रमिति† एतद्धैव प्रथमं वाचो अग्र"(४) इति। प्राथमिकनामधेयस्य विचार्य निर्मितत्वादितरवागपेक्षया श्रेष्ठ-त्वद्योतनार्थो 'हि'शब्दः॥

द्वितीयपादमनूद्य व्याचष्टे। (५)"यत् प्रैरत नामधेयं दधाना इति‡ वाचा हि नामधेयानि धीयन्ते"(५) इति। यस्मान्नामधेयानां वाङ्निष्पाद्यत्वं तस्मादुच्चारणवाचिनः 'प्रैरत', इति शब्दस्य प्रयोगो युक्त इत्यर्थः॥

तृतीयपादमनूद्य व्याचष्टे। (६)"यदेषां श्रेष्ठं यदरिप्रमा-सीदिति § एतद्धैव श्रेष्ठमेतदरिप्रम्"(६) इति। विचार्य सम्पा-दितस्य नाम्नो लक्षणोपेतत्वं विरोधराहित्यञ्च प्रसिद्धं॥

चतुर्थपादमनूद्य व्याचष्टे। (७)"प्रेणा तदेषां निहितं गुहाविरिति ¶ इदमु ह गुहाध्यात्ममिमा देवता अद उ आविर-धिदैवतमित्येतत् तदुक्तं भवति"(७) इति। आत्मानं लोक-प्रसिद्धं देहेन्द्रियादिसङ्घातमधिकृत्य वर्त्तत इति 'अध्यात्मं'।

---

* देवेष्वाविः प्रकटमिति क०, ख०, ग० च।

† ऋग्वेदे म०१०, सू०७१, ऋ०१।

‡ ऋग्वेदे म०१०, सू०७१, ऋ०१।

§ ऋग्वेदे म०१०, सू०७१, ऋ०१।

¶ ऋग्वेदे म०१०, सू०७१, ऋ०१।

तस्मिन्देहादिसङ्घाते अवस्थिताः 'इमाः' अग्न्यादिदेवताः। अग्नि-र्वाग् भूत्वा मुखं प्राविशदित्यादिश्रुतेः। तासान्देवतानामस्मिंश्छरीरे गूढं यत् स्वरूपं 'इदमु ह' इदमेवाच, 'गुहा' इत्युच्यते। शरीरमध्ये गूढा देवा एवैतन्नाम जानन्ति न मनुष्या इति 'गुहा' शब्दस्य तात्पर्यं। दैवतानि स्वर्गलोकनिवासीन्यधिकृत्य वर्त्तत इति 'अधिदैवतं'। स्वर्गलोकनिवासिषु देवेषु प्रसिद्धं यन्नाम 'अद उ आविः' एतदेव प्रकट ; इत्युच्यते। 'इत्येतत्' अभिप्रायद्वयं, 'तत्' तेन चतुर्थपादेन, 'उक्तं भवति'। अस्मिन् मन्त्रे प्राथमिकनाम्नः प्राशस्त्यं प्रतीयते। प्राथमिकञ्च तद्यत् स्वरूपं तन्नामादाविव तद्दिदासेतिसूक्तादावपि तकारः प्रयुक्तः। तस्मात् सूक्तं प्रशस्तमित्यर्थः॥ २॥

(१)तद्दिदास भुवनेषु ज्येष्ठमिति प्रतिपद्यत एतद्वाव भुवनेषु ज्येष्ठं(१) (२)यतो जज्ञ उग्रस्त्वेषनृम्ण इत्यतो ह्येष जात उग्रस्त्वेषनृम्णः(२) (३)सद्यो जज्ञानो निरिणाति शत्रूनिति सद्यो ह्येष जातः पाप्मानमपाहत(३) (४)अनु यं विश्वे मदन्त्यूमा इति भूतानि वै विश्व ऊमास्त एनमनु मदन्त्युदगादुदगादिति(४) (५)वावृधानः शवसा भूर्योजा इत्येष वै वावृधानः शवसा भूर्योजाः(५) (६)शत्रूर्दासाय भियसन्दधातीति सर्वं ह्येतस्माद्भीभाय(६) (७)अव्यनच्च व्यनच्च सस्नीति यच्च प्राणि यच्चाप्राणकमित्येव तदाह(७) (८)सन्ते नवन्त प्रभृता मदेष्विति तव सर्वं

वश इत्येव तदाह(८) (९)त्वे क्रतुमपि वृञ्जन्ति विश्व इति त्वयीमानि सर्वाणि भूतानि सर्वाणि मनांसि सर्वे क्रतवोऽपि वृजन्तीत्येव तदाह(९) (१०)द्वियदेते त्रिर्भवन्त्यूमा इति द्वौ वै सन्तौ मिथुनौ प्रजायेते प्रजात्यै(१०) (११)प्रजायते प्रजया पशुभिर्य एवं वेद(११) (१२)स्वादोः स्वादीयः स्वादुना सृजा समिति मिथुनं वै स्वादु प्रजा स्वादु मिथुनेनैव तत् प्रजां संसृजति(१२) (१३)अदः सु मधु मधुना भियोधीरिति मिथुनं वै मधु प्रजा मधु मिथुनेनैव तत् प्रजामभि युध्यति(१३) (१४)तदुक्तमृषिणा स्वां यत्तनूं तन्वामैरयतेत्यस्यां शारीर्यामिमाञ्छन्दोमयीमित्येव तदाह(१४) (१५)अथो तनूरेव तन्वो अस्तु भेषजमित्यस्यै शारीर्या इयं छन्दोमयीत्येव तदाह(१५) (१६)तस्यै यान्यष्टावक्षराणि सा गायत्री यान्येकादश सा त्रिष्टुब् यानि द्वादश सा जगत्यथ यानि दश सा विराड् दशिन्येषु त्रिषु छन्दःसु प्रतिष्ठिता(१६) (१७)पुरुष इति त्र्यक्षरं स उ विराजि(१७) (१८)एतानि वाव सर्वाणि छन्दांसि यान्येतानि विराट्चतुर्थान्येवमु हैवैवं विदुष एतदहः सर्वैश्छन्दोभिः प्रतिपन्नं भवति (१८)॥ ४ ॥

इत्थं महता प्रबन्धेन सूक्तादिस्तच्छब्दः प्रशस्तः। अथ सूक्तादौ यस्तृचो राजननाम्ना स्तोत्रियः। राजनस्तोत्रियेण प्रतिपद्यत इति पञ्चमे वक्ष्यमाणत्वात् तमिमं तृचं क्रमेण व्याचिख्यासुरादौ प्रथमाया ऋचः प्रथमपादं तदिदासेत्यादिनानुवदति। सेयमृक् दाशतय्यामेवमाम्नाता। "तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः। सद्यो जज्ञानो निरिणाति शत्रूननु यं विश्वे मदन्त्यूमाः" इति। 'भुवनेषु' पृथिव्यादिषु मध्ये, 'तदित्' सर्ववेदप्रसिद्धं तदेव जगत्कारणं ब्रह्म, 'ज्येष्ठमास' अतिशयेन वृद्धं बभूव, कारणत्वेन जगतः पूर्वं विद्यमानत्वात्। 'यतः' यस्मात् कारणरूपाद्ब्रह्मणः, 'त्वेषनृम्णः' प्रदीप्तबलः, 'उग्रः' तीव्रः, अग्निः 'जज्ञे' समुत्पन्नः। सोऽग्निः 'जज्ञानः' उत्पन्न एव सन्, 'सद्यः' तदानीमेव, 'शत्रून्', 'निरिणाति' 'निराकरोति'। अवन्तीति 'ऊमाः' रक्षकाः, 'विश्वे' सर्वे देवादयः प्राणिनः, 'यं' अग्निं, 'अनुमदन्ति' अग्निं हृष्यन्तमनु स्वयमपि हृष्यन्ति। सोऽग्निर्जात इति पूर्वत्रान्वयः॥

अस्या ऋचः प्रथमं पादमनूद्य व्याचष्टे। (१)"तदिदास भुवनेषु ज्येष्ठमिति * प्रतिपद्यत एतद्वाव भुवनेषु ज्येष्ठम्"(१) इति। 'तदित्यादिना शस्त्रं प्रारभेत। 'तच्छब्दोक्तस्य परब्रह्मण आदित्यमण्डलोपाधिकत्वेन दृश्यमानत्वात् 'एतद्वाव' इत्युक्तं॥

द्वितीयपादार्थस्य हिशब्देन प्रसिद्धतां दर्शयति। (२)"यतो

* ऋग्वेदे म०१०, सू०१२०, ऋ०१।

जन्न उग्रस्त्वेषनृम्ण इति* अतो ह्येष जात उग्रस्त्वेषनृम्णः"(२) इति॥

तृतीयपादे शत्रून्निरिणातीतिपदद्वयस्य पापविनाशपरत्वं दर्शयति। (३)"सद्यो जज्ञानो निरिणाति शत्रूनिति† सद्यो ह्येष जातः पाप्मानमपाहत(३) इति॥

चतुर्थपादे विश्व ऊमा इत्यनेन पदद्वयेन सर्वप्राणिविवक्षां दर्शयति। (४)"अनु यं विश्वे मदन्त्यूमा इति‡ भूतानि वै विश्व ऊमास्त एनमनुमदन्त्युदगादुदगादिति"(४) इति। ब्रह्मण उपाधिभूत आदित्यो दिव्युदितवान्। अग्निश्च भूमावुदितवान्। अतः सर्वव्यवहारसिद्धिरित्येवं प्राणिनां हर्षः॥

द्वितीयामृचं संहितायामेवमामनन्ति। "वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसन्दधाति। अव्यनच्च व्यनच्च सस्नि सन्ते नवन्त प्रभृता मदेषु" इति। अयमादित्यमण्डलस्थः परमेश्वरो वह्न्युपाधिको वा 'शवसा' बलेन, 'वावृधानः' अतिशयेन वर्द्धमानः, 'भूर्योजाः' प्रभूततेजोयुक्तः, भवति। स च 'शत्रुः' शातयिता सन्, 'दासाय' उपक्षयाय, वैरिणः 'भियसं' भीतिं, 'दधाति' सम्पादयति। विशेषेण अनिति चेष्टत इति 'व्यनत्' प्राणोपेतं जङ्गमं, 'अव्यनत्' प्राणरहितं स्थावरं, तदुभयमपि 'सस्नि' सूर्योदये तवोदये सति, 'प्रभृता' सन्ध्यावन्दनार्थं प्रकर्ष-

* ऋग्वेदे म०१०, सू०१२०, ऋ०१।

† ऋग्वेदे म०१०, सू०१२०, ऋ०१।

‡ ऋग्वेदे म०१०, सू०१२०, ऋ०१।

णोद्युक्तानि प्राणिजातानि, 'मदेषु' सत्सु मदनिमित्तभूतेषु, 'सन्नवन्त' सम्यक् स्तुवन्ति। इत्येतस्या ऋचोऽर्थः॥

तत्र प्रथमपादे प्रतिपाद्ये मण्डले दृश्यमान आदित्य इत्येतद्दर्शयति। (५)"वावृधानः शवसा भूर्योजा इति* एष वै वावृधानः शवसा भूर्योजा"(५) इति॥

द्वितीयपादे सर्वं जगदेतस्यादित्यमण्डलवर्त्तिनोऽन्तर्यामिणो भीतं बभूवेत्यमुमर्थं दर्शयति। (६)"शत्रुर्दासाय भियसन्दधातीति सर्वं ह्येतस्माद्बिभाय"(६) इति।

तृतीयपादे अव्यनच्च व्यनच्चेति पदयोः स्थावरजङ्गमविवक्षां दर्शयति। (७)"अव्यनच्च व्यनच्च सस्नीति† यच्च प्राणि यच्चाप्राणकमित्येव तदाह"(७) इति॥

चतुर्थपादे सर्वस्य जगतः सूर्याधीनत्वलक्षणमभिप्रायं दर्शयति। (८)"सन्ति नवन्त प्रभृता मदेष्विति‡ तव सर्वं वश इत्येव तदाह"(८)इति॥

तृतीयामृचं संहितायामेवमामनन्ति। "त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः। स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः" इति। अस्या अयमर्थः। हे सूर्य 'विश्वे' सर्वे प्राणिनः, 'क्रतुमपि' क्रियमाणं कर्मापि, 'त्वे' त्वयि, 'वृञ्जन्ति' समर्पयन्ति। न केवलं कर्म किन्तु सर्वे प्राणिनस्तेषां च सर्वाणि मनांसि त्वय्येव समर्प-

minds are members

* ऋग्वेदे म०१०, सू०१२०, ऋ०१।

† ऋग्वेदे म०१०, सू१२०, ऋ०१।

‡ ऋग्वेदे म०१०, सू१२०, ऋ०१।

यन्त इति अपिशब्दस्यार्थः। किञ्च 'यत्', यौ स्त्रीपुरुषौ, 'द्विः' पूर्वं द्विसङ्ख्योपेतौ भूत्वा, पश्चात् 'एते', पुत्रेण सहिताः त्रि-सङ्ख्याकाः, 'ऊमाः' परस्परं रक्षकाः, 'भवन्ति'। हे सूर्य 'स्वादोः स्वादीयः' प्रीतिविषयान्मृष्टान्नधनादेरपि अत्यन्तं प्रियमपत्यम्, 'स्वादुना' परस्परप्रीतिहेतुना मातापितृरूपेण मिथुनेन, 'संसृज' संयोजय। स्वादीय इत्यनेन यदपत्यमुक्तन्तदेव 'अदः'शब्देन परामृश्यते। तच्च पुनरूपमपत्यं स्नुषया सह मिथुनं भूत्वा 'सुष्टु 'मधु' प्रियं, भवति। तादृशं 'मधु', 'मधुना' पौत्ररूपेण प्रियेण, संयोज्य 'अभियोधीः' सर्वतः सम्पादय। धातूनामनेकार्थत्वाद्युधिधातुरत्र सम्पादने वर्त्तते॥

एतस्या ऋचः प्रथमपादमनूद्य व्याचष्टे। (९)"त्वे क्रतुमपि वृञ्जन्ति विश्व इति* त्वयीमानि सर्वाणि भूतानि सर्वाणि मनांसि सर्वे क्रतवोऽपि वृञ्जन्तीत्येव तदाह(९)" इति। अत्र 'क्रतु'-शब्दः प्राणिनां मनसामित्रीपलक्षकत्वेन व्याख्यातः॥

द्वितीयपादमनूद्य व्याचष्टे। (१०)"द्विर्यदेते त्रिर्भवन्त्यूमा इति† द्वौ वै सन्तौ मिथुनौ प्रजायेते प्रजात्यै"(१०) इति॥

वेदनं प्रशंसति। (११)"प्रजायते प्रजया पशुभिर्य एवं वेद"(११) इति॥

तृतीयपादमनूद्य व्याचष्टे। (१२)"स्वादोः स्वादीयः स्वादुना सृजा समिति‡ मिथुनं वै स्वादु प्रजा स्वादु मिथुनेनैव तत् प्रजां संसृजति"(१२) इति॥

---

* ऋग्वेदे म०१०, सू०,१२०, ऋ०२।

† ऋग्वेदे म०१०, सू०१२०, ऋ०३।

‡ ऋग्वेदे म०१०, सू०१२०, ऋ०३।

चतुर्थपादमनूद्य व्याचष्टे । (१३)"अदः सु मधु मधुनाऽभियोधीरिति * मिथुनं वै मधु प्रजा मधु मिथुनेनैव तत् प्रजामभियुध्यति"(१३) इति ॥

इत्थं सूक्तान्तर्गतं स्तोत्रीयं तृचं व्याख्याय तदीयेऽर्थे संवादाय शाखान्तरगतमृक्पादमुदाहृत्य व्याचष्टे । (१४)"तदुक्तमृषिणा स्वां यत्तनूं तन्वामैरयतेति अस्यां शारीर्यामिमां छन्दोमयीमित्येव तदाह"(१४) इति । स्वादोः स्वादीयः स्वादुना सृजा समितिपादद्वयेन मातापितृजन्यं शरीरं प्रकृतशस्त्रोपयुक्तं प्रतिपादितं यदस्ति 'तत्,' एव 'ऋषिणा', स्वां यदित्यादिना मन्त्रभागेन 'उक्तं' प्रकटीकृतं । यद्वा तदिदासेत्यादिकस्य कृत्स्नस्य शस्त्रस्य तात्पर्यं यदस्ति 'तत्', सर्वं 'ऋषिणा', मन्त्रपादेन सङ्गृह्य 'उक्तम्'। स च पाद एवं योजनीयः। 'यत्' यस्मात् कारणात्, पूर्वोक्तं तृचं प्रतिपाद्य आदित्योपाधिक ईश्वरः सः 'स्वां तनूं' यजमानरूपं शरीरं, 'तन्वां' तदीयमातापितृरूपे शरीरे, 'ऐरयत' प्रेरितवान्। तस्मात् स्वादोः स्वादीय इत्यादिकमुपपन्नं। अथवा 'तन्वां' यजमानशरीरे, स 'प्रजापतिः', 'स्वान्तनूं' तदिदासेत्यादिकां वेदरूपान्तनूं, यजमानसंस्कारकत्वेन यस्मात् सम्पादितवान् तस्मादिदं निष्केवल्यशस्त्रं प्रशस्तं। तदेतत् द्वितीयं व्याख्यानम् अस्यामित्यादिना ब्राह्मणेन स्पष्टीक्रियते। 'अस्यां' दृश्यमानायां, 'शारीर्यां' यजमानशरीरसम्बन्धिन्यां आकृतौ, 'इमां' तदिदासेत्यादिकां

* ऋग्वेदे म०१०, सू०१२०, ऋ०३ ।

'छन्दोमयीं' वेदरूपान्तनूं, संस्कारकत्वेन सम्पादितवान् 'इति' एतन्मन्त्रवाक्यं, ब्रूते। शस्त्रस्य शिरःपक्षादिकल्पनाया वक्ष्यमाणत्वाच्छन्दोमयशरीरत्वं युक्तं॥

पुनरपि शस्त्रस्तुत्यर्थं अन्यं मन्त्रपादमुदाहृत्य व्याचष्टे। (१५)"अथो तनूरेव तन्वो अस्तु भेषजमिति अस्यै शारीर्यां इयं छन्दोमयीत्येव तदाह"(१५) इति। 'अथो'शब्दः पूर्वोदाहरणेन समुच्चयार्थः। न केवलमृषिणा पूर्वेणैव ऋषिणा तदुक्तं, किन्तु 'तनूरेव' इत्यादिनाप्यृषिणा तदुक्तं, मन्त्रपादश्चैवं योजनीयः। 'तनूरेव' तद्दिदासेत्यादिका, 'छन्दोमयी', 'तन्वः' यजमानशरीरस्य, 'भेषजं' पापव्याधिनिवर्त्तनमौषधं, 'अस्तु'। अत्र 'तन्वस्तनूः' इत्येतयोः षष्ठीप्रथमान्तयोरर्थौ ब्राह्मणेन स्पष्टीकृतः॥

इत्थं मन्त्रद्वयोदाहरणेन शस्त्रं प्रशस्य बहुविधच्छन्दोऽन्तर्भावेनापि प्रशंसति। (१६)"तस्यै यान्यष्टावक्षराणि सा गायत्री यान्येकादश सा त्रिष्टुब् यानि द्वादश सा जगत्यथ यानि दश सा विराड् दशस्वेषु त्रिषुच्छन्दःसु प्रतिष्ठिता"(१६) इति। तद्दिदासभुवनेष्वित्यादिका तस्या ऋचः प्रथमपादो दशाक्षरः। 'तस्यै' तस्या ऋचः, सम्बन्धीनि 'यान्यष्टौ', प्रथमपादाक्षराणि', सन्ति 'सा', इयमष्टाक्षररूपा 'गायत्री', सम्पद्यते। 'यानि' तृतीयपादे 'एकादशाक्षराणि', आम्नातानि, 'सा', इयमेकादशाक्षरा 'त्रिष्टुप्', सम्पद्यते। प्रथमपादे यदवशिष्टमक्षरद्वयन्तत्तु द्वितीये चतुर्थे वा दशाक्षरयुक्ते पादे योजनीयं। तथासति 'यानि द्वादशाक्षराणि', 'सा जगती', सम्पद्यते। 'अथ', प्रथमे द्वितीये चतुर्थे वा पादे 'यानि', आम्नातानि, 'दशाक्षराणि', 'सा', 'विराट्'-

च्छन्दोरूपा। एवमेषा 'दशिनी' दशाक्षरोपेता स्वतःसिद्धा विराट्, 'एषु' उक्तरीत्या सम्पादितेषु गायत्रीत्रिष्टुप्जगती-रूपेषु, 'त्रिषु छन्दःसु', 'प्रति ष्ठिता' पर्यवसिता॥

अथैतस्यां प्रथमायामृचि अक्षरत्रयप्रक्षेपं विधत्ते। (१७)"पुरुष इति त्र्यक्षरं स उ विराजि(१७)" इति। यदेतत् 'पुरुष इति' 'अक्षरत्रयस्वरूपं पदं तदेतस्यामृचि प्रक्षेपणीयमित्यध्याहारः। 'स उ' सोऽपि अक्षरसङ्घः, 'विराजि' तृतीयपादव्यतिरिक्ते विराट्च्छन्दोयुक्ते दशाक्षरोपेते सर्वत्र, प्रक्षेपणीयः। तत्प्रकारश्च पञ्चमे भिधास्यते। प्रथमायां च पुरुषाक्षराण्युपदधाति, पादेष्वे-कैकमवसाने तृतीयवर्जमिति। पुनरपि स खलु विहरत्यपि निदर्शनायोदाहरिष्याम इति प्रतिज्ञाय तदिदास भुवनेषु ज्येष्ठं पुरुष इत्युदाहृतं॥

पूर्वं गायत्र्यादिच्छन्दोऽन्तर्भावेन प्रशंसा कृता। इदानीं सर्वच्छन्दोऽन्तर्भावेन प्रशंसति। (१८)"एतानि वाव सर्वाणि-च्छन्दांसि यान्येतानि विराट्चतुर्थान्येवमुहैवैवं विदुष एतदहः सर्वैश्छन्दोभिः प्रतिपन्नं भवति(१८)"-इति। विराट् छन्दश्चतुः सङ्ख्यापूरकं एषां * गायत्रीत्रिष्टुब्जगतीनां तानि 'विराट्-चतुर्थानि'। ईदृशानि 'यानि एतानि' चत्वारि सन्ति, तानि 'एतानि वाव', अवशिष्टच्छन्दोरूपाणि। गायत्र्यादीनां स्तवनि-ष्पादकत्वेन मुख्यत्वात् सर्वच्छन्दोरूपत्वोपचारः। 'एवमुहैव' यथोक्तेनैव प्रकारेण, विराजि गायत्र्यादीनां त्रयाणामन्तर्भावः।

---

* आसां इति पाठः साधुः।

विराट्संहितानां चतुर्णां सर्वच्छन्दोरूपत्वोपचारः। इत्येवं 'विदुषः' यजमानस्य, 'एतत्' महाव्रताख्यं 'अहः', 'सर्वैश्छन्दोभिः', प्रतिपादितं 'भवति' ॥ १२ ॥

(१)ता नदेन विहरति पुरुषो वै नदस्तस्मात्पुरुषो वदन्सर्वः सन्नदतीव(१) (२)नदं व ओदतीनामिती३ आपो वा ओदत्यो या दिव्यास्ता हीदं सर्वमुन्दन्त्यापो वा ओदत्यो या मुख्यास्ता हीदं सर्वमन्नाद्यमुन्दन्ति(२) (३)नदं यो युवतीनामिती३ आपो वाव योयुवत्यो या अन्तरिक्ष्यास्ता हि पोप्रूयन्त इवापो वाव योयुवत्यो याः स्वेदन्ते ता हि सरीसृप्यन्त इव(३) (४)पतिं वो अघ्न्यानामिती३ आपो वा अघ्न्या या अग्नेर्धूमाज्जायन्त आपो वा अघ्न्या याः शिश्नात्प्रसृज्यन्ते(४) (५)धेनूनामिषुध्यसीती३ आपो वाव धेनवस्ताहीदं सर्वं धिन्वन्तीषुध्यसीति यदाह पनीयसीत्येव तदाह(५) (६)त्रिष्टुभञ्चानुष्टुभं च विहरति वृषा वै त्रिष्टुब् योषानुष्टुप् तन्मिथुनं तस्मादपि पुरुषो जायां वित्त्वा कृत्स्नतरमिवात्मानं मन्यते(६) (७)तास्त्रिः प्रथमया पञ्चविंशतिर्भवन्ति पञ्चविंश आत्मा पञ्चविंशः प्रजापतिः दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशस्तमिममात्मानं पञ्चविंशं संस्कुरुतेऽथो पञ्चविंशं वा एतदहः पञ्चविंश एत

स्याङ्क: स्तोमस्तत्समेन समं प्रतिपद्यते तस्माद् द्वे एव पञ्चविंशतिर्भवन्ति(७) ॥ १३ ॥

ऐतरेयारण्यकभाष्यम्।

अथ शस्त्रस्य विहरणं विधत्ते। (१)"ता नदेन विहरति पुरुषो वै नदस्तस्मात् पुरुषो वदन्सर्वः सन्नदतीव"(१) इति। 'ताः' शस्त्रगतास्तदिदासेत्यादिका ऋचः, 'नदेन' नदलिङ्गकेन मन्त्रेण, 'विहरति' व्यतिषजति, मिश्रयेदित्यर्थः। 'नदः' ध्वन्यतिशयः, स च 'पुरुषस्वरूप एव। यस्मादेतत् 'तस्मात्', लोके 'सर्वः पुरुषः,' भाषमाणः, सम्यग्ध्वनिं करोति 'इव', दृश्यते। गम्भीरो हि पुरुषस्य ध्वनिः॥

नदलिङ्गकस्य मन्त्रः संहितायामेवमाम्नातः। "नदं व ओदतीनां नदं यो युवतीनां। पतिं वो अघ्न्यानां धेनूनामिषुध्यसि" इति। एतन्मिश्रणप्रकारस्य पञ्चमे स्पष्टमभिधास्यते। नदं व ओदतीनामित्येतयैतानि व्यतिषजति पादैः पादान् बृहतीकारमिति। तथा तत्रैवोदाहृत्यापि प्रदर्शितं। तदिदासभुवनेषुज्येष्ठं नदं व ओदतीनां यतो जज्ञ उग्रस्त्वेष नृम्णोरु नदं यो युवतीनां३ सद्यो जज्ञानो निरिणाति शत्रून् पतिं वो अघ्न्यानां। अनु यं विश्वे मदन्त्यूमाषो धेनूनामिषुध्यसो३मिति। नदलिङ्गकस्य मन्त्रस्यायमर्थः। हे आपः 'ओदतीनां' तृतीयसवने ऋजीषमुदन्तीनां क्लेदयन्तीनां, 'वः' युष्माकं, 'नदं' नन्दितारं स्तोतारं यजमानं, रक्षतेतिशेषः। तथा 'यो युवतीनां' ऋजीषे पुनः पुनः पयो मिश्रयन्तीनां, युष्माकं 'नदं',

रक्षतेति पूर्ववत्। 'अघ्न्यानां' अहन्तव्यानां, 'वः' युष्माकं, 'पतिं' पालकं यजमानं, रक्षत। हे इन्द्र त्वं 'धेनूनां' धेनुवत् प्रीणयन्तीनामपां, 'इषुध्यसि' ईश्वरोऽसि। इषुध ऐश्वर्ये इति धातुः॥

अस्या ऋचः प्रथमपादं व्याचष्टे। (२)"नदं व ओदतीनामितीं३ * आपो वा ओदत्यो या दिव्यास्ता हीदं सर्वमुन्दत्यापो वा 'ओदत्यो या मुख्यास्ताहीदं सर्वमन्नाद्यमुदन्ति"(२)इति। अस्मिन् पादे 'ओदत्यं' इतिशब्देनाप एव विवक्षिताः। यस्मात् 'या' 'आपः', 'दिव्या' दिविभवा वृष्टिद्वारेणागताः, 'ताः', आपः 'सर्वमिदं' भूतलं, 'उन्दन्ति' क्लेदयन्ति। तथा मुखेभवा 'मुख्याः' आस्योदकरूपाः 'याः' आपः, 'ताः', 'सर्वमन्नाद्यं' शुष्कमपि पृथुकशष्कुल्यादिकं सर्वं खाद्यं, द्रवीकुर्वन्ति। तस्मात् 'ओदत्यः', इत्युच्यन्ते। 'इति'शब्दस्योपरि योऽयं सानुनासिकः प्लुतः सोयं पादप्रतीकग्रहणे अत्यतमादरार्थः॥

द्वितीयं पादमाचष्टे। (३)"नदं यो युवतीनामितीं३†" आपो वाव योयुवत्यो या अन्तरिक्ष्यास्ता हि पोप्लूयन्त इवापो वाव योयुवत्यो याः स्वेदन्ते ता हि सरीसृप्यन्त इव"(३) इति। 'योयुवत्यः' इति शब्देन 'आपः', एवोच्यन्ते। अन्तरिक्षे भवाः 'अन्तरिक्ष्याः', 'ता हि', 'पोप्लूयन्त इव' पुनः पुनरिदमाप्लावयन्तीव, दृश्यन्ते, तथा 'या आपः',। 'स्वेदन्ते' शरीरस्वेदेनोत्पद्यन्ते, 'ताः', 'सरीसृप्यन्त इव' पुनः पुनः स्रवन्तीव, दृश्यन्ते। तस्मात् पुनः पुनर्मिश्रणात् 'योयुवत्यः', इत्युच्यन्ते॥

---

* ऋग्वेदे म०८, सू०६९, ऋ०२।

† ऋग्वेदे म०८, सू०६९, ऋ०२।

तृतीयपादं व्याचष्टे । (४)"पतिं वो अघ्न्यानामितीं२* आपो वा अघ्न्या या अग्नेर्धूमाज्जायन्त आपो वा अघ्न्या याः शिश्नात् प्रसृज्यन्ते"(४) इति । 'अग्नेः', उत्पन्नो यो धूमः स एव मेघाकारो भूत्वा वृष्टिरूपेण 'आपः', जनयन्ति । यद्वा धूमो अग्निश्चेत्येतदुभयं मेघनिष्पादकं । अत एव कैश्चिदुक्तं । धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघ इति । तस्मान् मेघादुत्पन्ना 'आपः', ओषधिवनस्पतिरूपेण परिणताः सत्यो न केनापि हननीयाः किन्तु सर्वेणापि वर्द्धनीयाः । एवं तथा 'शिश्नात्', उत्पन्ना रेतोरूपाः 'आपः', पुत्रादिरूपेण परिणताः सत्यो न हन्तव्याः ॥

चतुर्थपादं व्याचष्टे । (५)"धेनूनामिषुध्यसीतीं२ † आपो वाव धेनवस्ता हीदं सर्वं धिन्वन्तीषुध्यसीति यदाह पतीयसीत्येव तदाह"(५) इति । यथा 'धेनवः', क्षीरप्रदानेन प्रीणयन्ति, एवं 'आपः', अप्योषधिवनस्पत्यादिकं प्रीणयन्ति । अतो धेनुसाम्याद्धेनुत्वं । 'इषुध्यसि'शब्दो यदभिधेयं ब्रूते, तत् 'पतीयसि' 'इति' अस्य 'एव' शब्दस्य अभिधेयं ब्रूते । पतिवत् स्वामिवदाचरतीत्यर्थः ॥

नदं वः इत्यादिकामृचं व्याख्यायास्या ऋचस्त्वदिदासेत्यनया सह व्यतिषङ्गं पूर्वत्र विहितं प्रशंसति । (६)"त्रिष्टुभं चानुष्टुभं च विहरति वृषा वै त्रिष्टुब् योषानुष्टप् तन्मिथुनं तस्मादपि पुरुषो जायां वित्त्वा कृत्स्नतरमिवात्मानं मन्यते"(६) इति । तदि-

*ऋग्वेदे म०८, सू०६९, ऋ०२ ।

† ऋग्वेदे म०८, सू०६९, ऋ०२ ।

दासेत्यस्यामृचि तृतीयपादस्यैकादशाक्षरत्वादितरेष्वपि पादेषु पुरुष इत्यक्षरप्रक्षेपेण तथात्वादियं 'त्रिष्टुप्', नदं व इत्यादिका 'अनुष्टुप्', तदुभयोर्विहरणं नाम स्त्रीपुरुषवत् परस्परं व्यतिषङ्गः। तत्र त्रिष्टुभः प्रवृद्धत्वात् 'वृषत्वं सेचनसमर्थपुरुषत्वं, अनुष्टुभो न्यूनत्वात् 'योषित्त्वं', 'तत्' उभयं, मिलित्वा, 'मिथुनं', सम्पद्यते। यस्मान्मेलनेन मिथुनत्वं प्रशस्तं 'तस्मात्', लोकेऽपि 'पुरुषः' ब्रह्मचारी, विवाहेन 'जायां', लब्ध्वा अतिशयेन सम्पूर्णो जातोऽस्मि इत्येवं परितुष्यति ॥

प्रथमाया ऋच आवृत्तिविधिपूर्वकं सङ्ख्यां प्रशंसति। (७)"तास्त्रिः प्रथमया पञ्चविंशतिर्भवन्ति पञ्चविंश आत्मा पञ्चविंशः प्रजापतिर्दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशस्तमिममात्मानं पञ्चविंशं संस्कुरुते अथो पञ्चविंशं वा एतदहः पञ्चविंश एतस्याह्नः स्तोमस्तत्समेन समं प्रतिपद्यते तस्मात् द्वे एव पञ्चविंशतिर्भवन्ति"(७) इति। तदिदासेत्यादिकं नवर्चं * सूक्तं, तां सुत इति सूक्तं षडृचं, भूय इद्वावृध इति सूक्तं पञ्चर्चं,† नृणामुत्वेत्येकस्तृचः, ‡ इत्येताः सर्वास्त्रयोविंशतिर्भवन्ति। तत्र प्रथमायास्त्रिरावृत्तौ सत्यां पञ्चविंशतिः सम्पद्यन्ते। 'आत्मा' यजमानः सावयवोपेतः, यथा यजमानः। अथाधिदैवतं 'प्रजापतिः' चतुर्मुखोऽपि पञ्चविंशावयवोपेतः। 'दशहस्त्या' इत्यादि पूर्ववद्व्याख्येयं ॥ ३ ॥

---

* ऋग्वेदे म०१०, सू०१२०, ऋ०१।

† ऋग्वेदे म०६, सू०३०, ऋ०१।

‡ ऋग्वेदे म०३, सू०५१, ऋ०४।

(१)तदिति प्रतिपद्यते तत्तदिति वा अन्नमन्नमेव तदभि प्रतिपद्यत एतां वाव प्रजापतिः प्रथमां वाचं व्याहरदेकाक्षरद्व्यक्षरान्ततेति तातेति तथैवैतत् कुमारः प्रथमवादी वाचं व्याहर इत्येकाक्षरद्व्यक्षरान्ततेति तातेति तथैव तत्तनवत्या वाचा प्रतिपद्यते तदुक्तमृषिणा बृहस्पते प्रथमं वाचो अग्रमित्येतद्धैव प्रथमं वाचो अग्रं यत् प्रैरत नामधेयं दधाना इति वाचा हि नामधेयानि धीयन्ते यदेषां श्रेष्ठं यदरिप्रमासीदित्येतद्धैव श्रेष्ठमेतदरिप्रं प्रेणा तदेषां निहितं गुहाविरितीदमुह गद्दाध्यात्ममिमा देवता अद उ आविरधिदैवतमित्येतत्तदुक्तं भवति(१) ॥ ४ ॥

ऐतरेयारण्यकभाष्यम् ।

तदिति प्रतिपद्यत इत्ययं खण्डः पूर्वन्तच्छब्दव्याख्यानार्थं पूर्वं पठितोऽपि पुनः कृत्स्नशस्त्रप्रशंसार्थं पठ्यते ।(१)"तदिति प्रतिपद्यते तत् तदिति वा अन्नमन्नमेव तदभि प्रतिपद्यत एतां वाव प्रजापतिः प्रथमां वाचं व्याहरदेकाक्षरद्व्यक्षरान्ततेति तातेति तथैवैतत् कुमारः प्रथमवादी वाचं व्याहरत्येकाक्षरद्व्यक्षरान्ततेति तातेति तथैव ततृततवत्या वाचा प्रतिपद्यते, तदुक्तमृषिणा बृहस्पते प्रथमं वाचो अग्रमित्येतद्धैव प्रथमं वाचो अग्रं यत् प्रैरत नामधेयं दधाना इति वाचा हि नामधेयानि धीयन्ते यदेषां श्रेष्ठं यदरिप्रमासीदित्येतद्धैव श्रेष्ठमेतदरिप्रं

प्रेणा तदेषां निहितं गुहाविरितीदमुह गुहाध्यात्ममिमा देवता अदउ आविरधिदैवतमित्येतत् तदुक्तं भवति"(१) इति। अक्षरार्थः पूर्वमेव व्याख्यातः ॥ ४ ॥

(१)तदिदास भुवनेषु ज्येष्ठमिति प्रतिपद्यते यद्वै ज्येष्ठं तन्महन् महद्वद्रूपसमृद्धमेतस्याह्नो रूपं(१) (२)तां सु ते कीर्त्तिं मघवन् महित्वेति महद्वद्रूपसमृद्धमेतस्याह्नो रूपं(२) (३)भूय इद्वावृधे वीर्यायेति वीर्यवद्रूपसमृद्धमेतस्याह्नो रूपं (३) (४)नृणामुत्वा नृतमङ्गोभिरुक्थैरित्युक्थं वा एतदहः उक्थवद्रूपसमृद्धमेतस्याह्नो रूपं(४) (५)न्यूनाक्षरे प्रथमे पदे विहरति न्यूने वै रेतः सिच्यते न्यूने प्राणान्न्यूनेऽन्नाद्यं प्रतिष्ठित मेतेषां कामानामवरुध्या एतान् कामानवरुन्धे य एवं वेद(५) (६)द्वे दशाक्षरे भवत उभयोरन्नाद्ययोरुपाप्त्यै यच्च पदद्यच्चापादकमिति (६) (७)अष्टादशाष्टादशाक्षराणि भवन्ति यानि दश नव प्राणाः आत्मैव दशमः सात्मनः संस्कृतिरष्टावष्टा उद्यन्तं अश्नुते यद्यत् कामयते य एवं वेद(७) ॥ ५ ॥

ऐतरेयारण्यकभाष्यम्।

सूक्तसमष्टिरूपस्य शस्त्रस्य सामान्येन प्रशंसामभिधाय पुनर्विशेषाकारेण प्रशंसाभिधीयते । तत्र प्रथमसूक्तं प्रशंसति।

(१)"तदिदास भुवनेषु ज्येष्ठमिति * प्रतिपद्यते यद्वै ज्येष्ठं तन्महन्महद्वद्रूपसमृद्धमेतस्याह्नो रूपं" (१)इति। 'प्रतिपद्यते' शस्त्रं प्रारभते, 'यद्वै ज्येष्ठं' अतिशयेन ज्येष्ठं, तादृशं जगत्कारणं यदेवास्ति 'तत्', प्रौढत्वात् महच्छब्देनाभिधीयते। तथासति 'एतस्याह्नः', स्वरूपं, 'महद्वत्' 'महत्' ब्रह्म, यथा सत्स्वरूपं तद्वत्, सत्स्वरूपेण समृद्धं भवति ॥

द्वितीयं सूक्तं प्रशंसति। (२)"तां सु ते कीर्तिं मघवन्महित्वेति महद्वद्रूपसमृद्धमेतस्याह्नो रूपं"(२) इति। हे 'मघवन्' इन्द्र, 'ते' तव, 'तां' वृत्रवधादिरूपां कीर्त्तिं, 'सुष्टु 'महित्वा' महतीं कृत्वा, वर्त्तामह इति शेषः। पूर्वत्र ज्येष्ठपदद्वारा महच्छब्दः सम्पादितः। अत्र तु साक्षादेव महच्छब्द आम्नात इत्येतावानेव विशेषः ॥

तृतीयं सूक्तं प्रशंसति। (३)"भूय इद्वावृधे वीर्य्यायेति † वीर्य्यवद्रूपसमृद्धमेतस्याह्नो रूपम्"(३)इति। 'भूय इत्' पुनरपि, अयमिन्द्रो 'वीर्याय' शौर्यार्थं, 'वावृधे' वृद्धिं प्राप्तवान्। अत्र वीर्यशब्दस्य श्रुतत्वात् 'अह्नः' रूपस्य वीर्यवत्त्वं ॥

अथ तृचं प्रशंसति। (४)"नृणामु त्वा नृतमङ्गीर्भिरुक्थैरिति ‡ उक्थं वा एतदहरुक्थवद्रूपसमृद्धमेतस्याह्नो रूपं"(४) इति। उत्तिष्ठति उत्कर्षं प्राप्नोत्येभिरिति 'उक्थानि शस्त्राणि, तद्रूपाभिः 'गीर्भिः', हे इन्द्र 'नृणामु' सर्वेषामपि पुरुषाणां मध्ये,

---

* ऋग्वेदे म०१०, सू०१२०. ऋ०१।

† ऋग्वेदे म०६, सू०३०, ऋ०१।

‡ ऋग्वेदे म०३, सू०५१, ऋ०४।

'इतमं' पुरुषश्रेष्ठं, त्वामृत्विजो अर्चयन्तीति द्रष्टव्यं। 'एतत्' महाव्रताख्यं, 'अहः', 'उक्थं वै' उत्कर्षहेतुत्वादुक्थस्वरूपमेव। 'उक्थवत्' इत्यादि पूर्ववत् ॥

सूक्तानि प्रशस्य व्यतिषक्तयोः पादयोरक्षरन्यूनतां प्रशंसति। (५)"न्यूनाक्षरे प्रथमे पदे विहरति न्यूने वै रेतः सिच्यते न्यूने प्राणान्न्यूनेऽन्नाद्यं प्रतिष्ठितमेतेषां कामानामवरुध्या एतान् कामानवरुन्धे य एवं वेद"(५) इति। तदिदासेत्ययं प्रथमः पादो दशाक्षरत्वादेकेनाक्षरेण त्रिष्टुभो न्यूनः। नदं व इत्ययं पादः सप्ताक्षरत्वादेकेनाक्षरेणानुष्टुप्पादान्न्यूनः। तदिदं न्यूनं पादद्वयं परस्परं व्यतिषक्तं भवति। 'न्यूने वै' इत्यादिकं पूर्वमेव व्याख्यातं ॥

तदिदासेत्यस्यामृचि प्रथमद्वितीयपादगतामक्षरसङ्ख्यां प्रशंसति। (६)"द्वे दशाक्षरे भवत उभयोरन्नाद्ययोरुपाप्त्यै यच्च पद्वद्यच्चापादकमिति"(६) इति। तदिदास यतो जज्ञ इत्येते 'द्वे', पदे, ऋचो द्वौ पादौ, प्रत्येकं 'दशाक्षरयुक्तेन पादेन ते विराड्रूपे 'भवतः'। दशाक्षरा वै विराड् विराड़न्नाद्यमिति श्रुत्यन्तरात् तयोः पादयोरन्नहेतुत्वं। अन्नं योग्यं समीचीनमसमीचीनञ्च द्विविधं। 'पद्वत्' पादयुक्तं गवाश्वमृगादिकं, व्याघ्रादिभिर्भक्ष्यं। 'अपादकं' पादहीनं मनुष्यैर्भक्ष्यं व्रीहियवादिकं, तदुभयप्राप्त्यै पादद्वयं सम्पद्यते। 'इति' शब्दः, स्थावरजङ्गमरूपान्नद्वयहेत्वर्थः ॥

तदिदास नदं व इत्यनयोर्व्यतिषक्तयोः पादयोरक्षरसङ्ख्यां प्रशंसति। (७)"अष्टादशाष्टादशाक्षराणि भवन्ति यानि दश

नव प्राणा आत्मैव दशमः सात्मनः संस्कृतिरष्टावष्टा उद्यन्तेऽश्नुते यद्यत् कामयते य एवं वेद"(७) इति। तदिदासेत्यादिकः पादः प्रक्षिप्तपुरुशब्देन सह एकादशाक्षरः। नदं व इत्यादिकः पादः सप्ताक्षरः। उभौ पादौ मिलित्वा पादद्वयात्मके तस्मिन्नर्द्धे 'अष्टादशाक्षराणि', सम्पद्यन्ते। वीप्सा तु सर्वेष्वपि त्रिष्टुप्पादेषु अनुष्टुप्पादस्य मेलनात् 'अष्टादशाष्टादशाक्षराणि भवन्ति'। तानि 'दश' सङ्ख्याकानि, तेषु मध्ये 'यानि','नव'-सङ्ख्याकानि तानि 'प्राणस्वरूपाणि। नव वै पुरुषे प्राणा इति श्रुत्यन्तरात्। शिरसि सप्त च्छिद्राणि अधोभागे द्वे छिद्रे तन्निष्ठत्वेन प्राणानां नवत्वं। अनेनैवाभिप्रायेण श्रुत्यन्तरं पठ्यते। सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चाविति। नवभ्योऽतिरिक्तं यत् दशमाक्षरं तज्जीवस्वरूपं। यथोक्तनवप्राणापेक्षया आत्मनो दशमत्वात्। अतो याहशोक्तिः 'सा', इयं 'आत्मनः','संस्कृतिः', अतिशयहेतुः। चतुर्विधेषु व्यतिषक्ताङ्गेषु प्रत्येकं दशाक्षरापनयने सति 'अष्टौ' अष्टाक्षराणि, 'उद्यन्ते' अवशिष्यन्ते। तानि 'एवं' उक्तप्रकारेण, 'यः वेद,' स पुमान् 'यद्यत्' फलं, 'कामयते', तत् प्राप्नोति ॥ ७ ॥ ५

(१)ता नदेन विहरति प्राणो वै नदस्तस्मात् प्राणो नदन् सर्वः सन्नदतीव(१) (२)नदं व ओदतीनामिती३ उष्णिगक्षरैर्भवत्यनुष्टुप् पादैरायुर्वा उष्णिग्वा गनुष्टु१ तदस्मिन्नायुश्च वाचं च दधाति(२) (३)तास्विः प्रथमया पञ्चविंशतिर्भवन्ति पञ्च विंश आत्मा पञ्चविंशः प्रजापतिः

दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू
आत्मैव पञ्चविंशस्तमिममात्मानं पञ्चविंशं संस्कुरुते अथो
पञ्चविंशं वा एतदहः पञ्चविंश एतस्याह्नः स्तोमस्तत्समेन
समं प्रतिपद्यते तस्माद्द्वे एव पञ्चविंशतिर्भवन्तीत्यध्यात्मं
पञ्चविंशः(३) (४)अथाधिदैवतं चक्षुः श्रोत्रं मनो वाक्
प्राणः ता एताः पञ्च देवता इमं विष्टाः पुरुषं पञ्चो-
हैवैता देवता अयं विष्टः पुरुषः सोऽत्रालोमभ्य आन-
खेभ्यः सर्वः साङ्ग आप्यते तस्मात् सर्वाणि भूतान्या
पिपीलिकाभ्य आप्तान्येव जायन्ते(४) (५)तदुक्तमृषिणा
(५) (६)सहस्रधा पञ्चदशान्युक्थेति पञ्च हि दशतो भव-
न्ति(६) (७)यावद्द्यावा पृथिवी तावदित्तदिति यावती वै
द्यावा पृथिवी तावानात्मा(७) (८)सहस्रधा महिमानः
सहस्रमित्युक्थान्येव तदनुमदति महयति(८) (९)यावद्
ब्रह्म विष्ठितं तावती वागिति यत्र ह क्व च ब्रह्म तद्वाग्यत्र
वा वाक् तद्वा ब्रह्मेत्येतत्तदुक्तं भवति(९) (१०)एषां वा
एषां सूक्तानां नवर्चं प्रथमन्नव वै प्राणाः प्राणानां क्लृप्त्यै(१०)
(११)षडृचं भवति षड्वा ऋतव ऋतूनामाप्त्यै(११)(१२)पञ्च-
पदा पङ्क्तिः पङ्क्तिर्वा अन्नमन्नाद्यस्यावरुध्यै(१२)(१३)तृचो
भवति त्रयो वा इमे त्रिवृतो लोका एषामेव लोकानाम-
भिजित्यै(१३) (१४)ता अभिसम्पद्यन्ते बृहतीं छन्दोमृतं

देवलोकमेष आत्मैवमुद्वैवैवं विदेतयैव सम्पदामृतमे-
वात्मानमभि सम्भवति सम्भवति (१४) ॥ ६ ॥

ऐतरेयारण्यकभाष्यम् ।

तदिदासेत्यादिसूक्तगतानामृचां नदं व इत्यादिकया सह यो व्यतिषङ्गः पूर्वं विहितस्तमेव विधिमनूद्य नदशब्दं व्याचष्टे। (१)"ता नदेन विहरति प्राणो वै नदस्तस्मात् प्राणो नदन् सर्वः सन्नदतीव"(१) इति। नदशब्दवान् मन्त्रो नद इत्युच्यते 'ताः' सूक्तगता ऋचः, 'नदशब्दोपेतेन मन्त्रेण सह 'विहरति' व्यतिषजति। तस्मिन् मन्त्रे यो नदशब्दः स प्राणमाचष्टे प्राणस्य नादोपेतत्वात्। यस्मादेवं 'तस्मात्', अखिलेषु देहेष्व-वस्थितः 'सर्वः', 'प्राणः', 'नदन्' नादं कुर्वन्, 'सन्', 'नदतीव' सुषुम्नाश्वासरूपेण* सम्यग्ध्वनिङ्करोत्येव ॥

नदशब्दोपेतस्य मन्त्रस्याक्षराणि पादांश्च प्रशंसति। (२)"नदं व ओदतीनामितीं२१† उष्णिगक्षरैर्भवत्यनुष्टुप्पादैरायुर्वा उष्णि-ग्वागनुष्टुप् तदस्मिन्नायुश्च वाचं च दधाति"(२)इति। 'नदं व' इत्यस्या ऋचश्चत्वारोपि पादाः प्रत्येकं सप्ताक्षराः तृतीये पादे अघ्न्या इत्यत्र यकारादिः पृथगक्षरत्वेन गणनीयः तथा सति अष्टाविंशत्यक्षरा 'उष्णिक्', सम्पद्यते। पादसङ्ख्यया त्वियं 'अनुष्टुप्'। चत्वारो ह्यत्र पादाः पठ्यन्ते उष्णिहस्तु त्रय एव पादाः एवं 'अक्षरैः', 'पादैः,' च च्छन्दोद्वयसम्पत्तिः। तयो-

* सुषुम्नादौ समाश्वासरूपेणेति क०।

† ऋग् दे म०८, सू०६९, ऋ०२।

ष्णिह आयुर्हेतुत्वात् अनुष्टुभो वाग्विषयत्वाच्च तदात्मकस्य तस्य पाठेन 'अस्मिन्' यजमाने, 'आयुर्वाचं च', सम्पादयति। अस्या-नद्वत्या ऋचः सूक्तत्रये तृचे च प्रत्यृचं व्यतिषङ्गे सति तयो-र्विंशतिवारमावृत्तिः सम्पद्यते। तदिदासेत्यनया प्रथमया सह व्यतिषिक्ताया नद्वत्यास्त्रिरावृत्तौ सत्यां मिलित्वा, पञ्चविंशति-सङ्ख्या सम्पद्यते॥

तामेतां नद्वत्यां सङ्ख्यासूत्रगच्चरसङ्ख्यावत् प्रशंसति। (३)"तास्त्रिः प्रथमया पञ्चविंशतिर्भवन्ति पञ्चविंश आत्मा पञ्च-विंशः प्रजापतिर्दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशस्तमिममात्मानं पञ्चविंशं संस्कुरुते अथो पञ्चविंशं वा एतदहः पञ्चविंश एतस्याह्नः स्तोमस्तत्समेन समं प्रतिपद्यते तस्माद्वै एव पञ्चविंशतिर्भवन्तीत्यध्यात्मं पञ्च-विंशः"(३) इति। पञ्चविंशतिर्भवन्तीत्यन्तं पूर्ववद्व्याख्येयं। 'अध्यात्म', अधिदैवतं, चेत्युभयथा सङ्ख्या प्रशस्यते। तत्र हस्तपादादिगणनया योयं पञ्चविंशत्यवयवसमूहोऽभिहितः सोयं 'अध्यात्मं', द्रष्टव्यः। आत्मानं यजमानस्य देहेन्द्रियादिसङ्घातम् अधिकृत्य वर्त्तत इति 'अध्यात्मं'॥

यद्यपि पञ्चविंशः प्रजापतिरित्युक्तत्वादधिदैवतप्रशंसापि कृतैव तथापि प्रकारान्तरेण पुनः प्रशंसति। (४)"अथाधिदैव-तञ्चक्षुः श्रोत्रं मनो वाक् प्राणस्ता एताः पञ्च देवता इमं विष्टाः पुरुषं पञ्चोहैवैता देवता अयं विष्टः पुरुषः सोऽचालोमभ्य आनखेभ्यः सर्वः साङ्ग आप्यते तस्मात् सर्वाणि भूतान्यापिपी-लिकाभ्य आत्मान्येव जायन्ते"(४) इति। 'अथ' मनुष्यशरी-

रगतपञ्चविंशतिसङ्ख्याप्रशंसानन्तरं। 'अधिदैवतं' देवताशरीरगता पञ्चविंशत्यन्तर्भूता पञ्चसङ्ख्या, प्रशस्यते तद्यथा 'चक्षुरादयः प्राणान्ताः एतच्छब्दाभिधेया या देवताः सन्ति' 'ता एता देवताः' 'पञ्चसङ्ख्याका' 'इमं' 'पुरुषं' मनुष्यदेहं, प्रविष्टाः तथा चोपरिष्टादाम्नास्यते। आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नित्यादिना। यथा देवताः पुरुषशरीरं प्रविष्टाः तथा 'अयं' 'पुरुषः', पञ्चापि 'एता देवताः', प्राविशदेव। अत्रान्योन्यप्रवेशो नाम तादात्म्यापत्तिः। सैव विस्पष्टीक्रियते। 'स पुरुषः' देवताभिः प्रविष्टः, स्वयं पञ्चदेवताः प्रविश्य 'अत्र' अस्मिञ्छरीरे, 'लोमपर्यन्तं 'नखपर्यन्तं' च 'सर्वः', अपि 'साङ्गः' सम्पूर्णावयव, 'आप्यते' प्राप्तो दृश्यते। यस्मादेवं चक्षुराद्यभिमानदेवतानां आदित्यादीनां देहस्य च परस्परतादात्म्यं 'तस्मात्', 'पिपीलिकापर्यन्तं 'सर्वं प्राणिनश्चक्षुरादीन्द्रियैस्तत्तद्गोलकैश्च सम्पूर्णा एव 'जायन्ते'। अनया देवतागतपञ्चसङ्ख्यारूपावयवप्रशंसया तदवयवविरूपा पञ्चविंशतिसङ्ख्या प्रशस्ता वेदितव्या॥

ब्राह्मणोक्तेर्थे सम्पादकं मन्त्रमुदाहरति। (५)"तदुक्तमृषिणा"(५) इति। चक्षुराद्यभिमानिदेवतानां तत्तदिन्द्रियद्वारा देहे प्रवेशाद्देहस्य च ताभिर्देवताभिस्तैरिन्द्रियैस्तादात्म्यापत्तेश्च पिपीलिकान्ताः सर्वे प्राणिनः सम्पूर्णा उत्पद्यन्त इति यद् ब्राह्मणेनोक्तं 'तत्', एव 'ऋषिणा,' सहस्रधेत्यादिना मन्त्रेणापि 'उक्तं'।

सोयं मन्त्रः संहितायामेवमाम्नायते। "सहस्रधा पञ्चदशान्यु-

क्‌था यावद्द्यावा पृथिवी तावदित्तत्। सहस्रधा महिमानः सहस्रं यावद्ब्रह्म विष्ठितं तावती वाक्"* इति। अस्य मन्त्रस्या-यमर्थः। 'सहस्रधा' सहस्रसङ्ख्याकेषु ब्रह्मादिपिपीलिकान्तेषु देहेषु, 'पञ्चदशसङ्ख्याकानि 'उक्‌था' उत्कृष्टान्यङ्गानि, विद्यन्त इति शेषः। चक्षुः श्रोत्रं, मनः, वाक्, प्राणः, इत्येतत् पञ्चकं तदाधारत्वेन मातापित्रोः सकाशादागतानि पृथि-व्यप्तेजोवाय्वाकाशरूपाणि भूतानि तानि मातृसम्बन्धीनि पितृसम्बन्धीनि च मिलित्वा दश सम्पद्यन्ते। चक्षुरादि-पञ्चकं चेत्येवं पञ्चदशाङ्गानि उत्कृष्टानि इत्थं प्राणिदेहेषु उत्पन्नेषु 'द्यावापृथिव्योर्यत्परिमाणं 'तावदित्' तत्परिमाण-कमेव। 'तत्', प्राणिदेहजातं, सम्पन्नं। 'सहस्रधा' सहस्रसङ्ख्याकेषु, 'सहस्रं महिमानः' सहस्रसङ्ख्याका महान्तो व्यवहारविशेषा, दृश्यन्ते। प्रतिविषयं प्रतिक्षणं दर्श-नश्रवणादिव्यवहाराणां निष्पत्तेः। 'ब्रह्म' जगत्कारणं सत्य-ज्ञानादि रूपं वस्तु, नानाविधप्राणिदेहरूपेण 'यावत्' अभिधेयं भूत्वा, विशेषेण स्थितं, 'तावती' तत्परिमाणा, 'वाग्', भवति, एकैकस्याभिधेयार्थस्य एकैकनामापेक्षणात्। अतएवान्यत्र श्रूयते सर्वाणि रूपाणि † विचित्य धीरः। नामानि कृत्वाभिवदन्-यदास्ते इति॥

तस्यैतस्याभिर्व्याख्यातस्य मन्त्रस्य प्रथमपादं व्याचष्टे। (६)"सहस्रधा पञ्चदशान्युक्‌थेति पञ्च हि दशतो भवन्ति"(६)

---

* ऋग्वेदे म०१०, सू०११४, ऋ०८

† विविच्य धीर इति क०।

इति। चक्षुरादीनि पञ्चसङ्ख्यातानि मातृपितृसम्बन्धिनो भूत-दशकात् सर्व्वाङ्गसम्पूर्णदेहरूपेण निष्पद्यन्ते॥

द्वितीयपादं व्याचष्टे। (७)"यावद् द्यावा पृथिवी ताव-दित्तदिति यावती वै द्यावा पृथिवी तावानात्मा"(७) इति। 'आत्मा' देहविशिष्टो जीवात्मा, द्यावापृथिव्योर्लोकयोर्जीवदेहैः पूर्णत्वादात्मनस्तत् समानपरिमाणत्वं द्रष्टव्यम्॥

तृतीयपादं व्याचष्टे। (८)"सहस्रधा महिमानः सहस्रमि-त्युक्थान्येव तदनुमदति महयति"(८) इति। यानि 'उक्थानि' उत्कृष्टाङ्गानि चक्षुरादीनि, सन्ति, तान्येव 'तत्' तेन महिम-शब्देन, 'अनुवदन्नयमृषिसन्तो 'मदति' हृष्यति। तथा महिम-शब्दप्रयोगात्तान्यङ्गानि 'महयति' पूजयति॥

चतुर्थपादं व्याचष्टे। (९)"यावत् ब्रह्म विष्ठितं तावती वा-गिति यत्र ह क्व च ब्रह्म तद्वाक् यत्र वा वाक् तद्वा ब्रह्मेत्येतत् तदुक्तं भवति"(९) इति। 'ब्रह्म' एवाभिधेयं जगत्, पदार्थरूपेण 'यत्र', 'यत्र', अस्ति, तत्र तत्राभिधायकं नाम तथा 'यत्र', 'यत्र', वाचकः शब्दस्तत्र तत्राभिधेयपदार्थरूपं 'ब्रह्म', 'इति' एवं, 'एतत्' अन्योन्यव्याप्तिरूपं, 'भवति,' तदेवमुदाहृतेन मन्त्रेण चक्षुरादिपञ्चकोपेतजगत्सृष्टिप्रशंसनात् चक्षुरादिगतपञ्चसङ्-ख्याद्वारेण पञ्चविंशतिसङ्ख्या नदं व इत्येतद्दृगावृत्तिरूपा प्रशस्ता भवतीति द्रष्टव्यम्॥

अथ तत्सूक्तगतास्वृक्सङ्ख्यां क्रमेण प्रशंसितुमाद्यसूक्त-गतां सङ्ख्यां प्रशंसति। (१०)"एषां वा एषां सूक्तानां नवर्चं प्रथमं नव वै प्राणाः प्राणानां क्लृप्त्यै"(१०) इति। त्रिविधानि

सूक्तानि शस्त्रार्थं नदं व इत्यादिकया व्यतिषक्तानि, केवलानि, चेति तत्राद्येन 'एषां' इत्यनेन पदेन व्यतिषक्तानि परामृश्यन्ते । ता नदेन विहरतीत्येवं व्यतिषक्तानामनन्तरमेव प्रक्ततत्वात् द्वितीयेन 'एषां' इत्यनेन व्यतिषक्तान्तर्भूतानि केवलानि परामृश्यन्ते । तानि च तदिदासेत्यादिव्याख्यानेन प्रक्तानि, तत्रैषाचरयोजना । 'एषां' व्यतिषक्तानां मध्ये, यानि केवलानि सन्ति,'एषां' केवलानां, मध्ये, यत् 'प्रथमं' वदिदासेति सूक्तं 'नवर्च', 'प्राणाः', च देहगतच्छिद्रवर्त्तित्वात् 'नवसङ्ख्याकाः, अतः प्राणसम्पादनार्थं तत् सूक्तं सम्पद्यते ॥

तां सु त इत्यादिद्वितीयसूक्तगताकसङ्ख्यां प्रशंसति। (११)"षडृचं भवति षड्वा ऋतव ऋतूनामाप्त्यै"(११)इति ।

भूय इदित्यादि तृतीयसूक्तगताक्सङ्ख्यां प्रशंसति। (१२)"पञ्चर्चं भवति पञ्चपदा पङ्क्तिः पङ्क्तिर्वा अन्नमन्नाद्यस्यावरुध्यै"(१२) इति। 'पङ्क्तिश्छन्दः पञ्चभिः पादैरुपेतम्। 'अन्नं,' च पङ्क्तिच्छन्दसा साध्यत्वात्, त्रेतेषु पङ्क्तिरूपे णोत्पन्नत्वाद् वा पङ्क्तिरूपम्। तस्मादियं पञ्चसङ्ख्याऽन्नप्राप्त्यै भवति ॥

नृणामुत्वित्यादिको यस्तृचस्तद्गताक्सङ्ख्यां प्रशंसति। (१३)"तृचो भवति त्रयो वा इमे त्रिवृतो लोका एषामेव लोकानामभिजित्यै"(१३) इति। 'त्रयो वा' इत्यादि पूर्वमेव व्याख्यातम् ॥

केवलानि सूक्तानि ऋग्गतसङ्ख्याद्वारा प्रशस्य व्यतिषक्तानि प्रकारान्तरेण प्रशंसति। (१४)"ता अभि सम्पद्यन्ते

बृहतीं छन्दोऽमृतं देवलोकमेष आत्मैवमुहैवैवं विदेतयैव सम्पदा- ऽमृतमेवात्मानमभि सम्भवति सम्भवति"(१४) इति। 'ताः' सूक्तगता ऋचः 'अभि' सर्वतः, 'बृहतीछन्दः 'सम्पद्यते। तद्यथा त्रिष्टुप्छन्दस्कास्वृत्तु एकैकः पाद एकादशाक्षरः सप्ता- क्षरेण नदं व इत्यादिमन्त्रगतेन पादेन संयुज्यते तदेतदष्टा- दशाक्षरात्मकं पादद्वयमेकमर्द्धं भवति। तादृशे द्वे अर्द्धे षड्- विंशदक्षरां 'बृहतीं', प्राप्नुतः एवं त्रयोविंशतिसङ्ख्या ऋचः सर्वा अपि नदं व इत्यादिसहिताः षट्चत्वारिंशद्बृहत्यो भवन्ति। तदिदं 'बृहतीच्छन्दः', 'अमृतं' विनाशरहितं 'देवलोकं', तत्- प्राप्तिहेतुत्वात् तादृशं छन्दः सम्पद्यत इति पूर्वत्रान्वयः। 'एषः' ईदृशो बृहतीसङ्घ 'आत्मा' पक्ष्याकारस्य शस्त्रस्य मध्यदेहः। पक्षपुच्छादिभागास्तूपरिष्टादभिधास्यन्ते। 'एवमुहैव' अनेनैव प्रकारेण, पक्ष्याकारस्य मध्यदेहः सम्पादित इति शेषः। यः पुमान 'एवं वित्' एवं वेत्ति ध्यायति, स पुमान् 'एतया सम्पदा' पक्षिमध्यदेहसम्पादनेन, 'अमृतमेवात्मानं' विनाशरहितं स्वरूपं, 'अभि सम्भवति'। एतज्ज्ञानसहितेन महाव्रतकर्मणा मनुष्य- वच्छीघ्रं विनाशरहितं देवजन्म प्राप्नोतीत्यर्थः। अभ्यासोऽध्याय- समाप्त्यर्थः॥ १६॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरे- यारण्यके तृतीयोऽध्यायः॥

---

## अथ चतुर्थोऽध्यायः।



(१)अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्व्वाणि सन्दधाति(१) (२)अथातो ग्रीवाश्चा आचक्षते यथाच्छन्दसमुष्णिह इति(२) (३)अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्व्वाणि सन्दधाति(३) (४)अथातः शिरस्तद्गायत्रीषु भवत्यग्रं वै छन्दसां गायत्र्यग्रमङ्गानां शिरस्तदर्कवतीषु भवत्यग्निर्वा अर्कस्ता नव भवन्ति कपालं वै शिरोऽशमीं शंसति त्वक्केशाइत्येव सा भवत्यथो स्तोमातिशंसनाया एव तौ त्रिवृद्धि स्तोमौ भवतो गायत्रं च छन्द एतयो वै स्तोमच्छन्दसोः प्रजातिमनुसर्व्वमिदं प्रजायते यदिदं किं च प्रजात्यै(४) (५)प्रजायते प्रजया पशुभिर्य एवं वेद(५) (६)अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्व्वाणि सन्दधाति(६) (७)अथातो विजवस्ता विराजो भवन्ति तस्मात् पुरुषः पुरुषमाह विवा असामु राजसि ग्रीवा वै धारयसीति स्तभमानं वा यद्वा दुताः सम्वाङ्क्तमाः सत्योन्नतमा प्रत्यच्यन्तेऽन्नं हि विराडन्नमुवीर्य्यं(७) (८)अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्व्वाणि सन्दधाति(८) ॥ १ ॥

ऐतरेयारण्यकभाष्यम्।

तृतीयेऽध्याये निष्केवल्यशस्त्रस्य पक्ष्याकारस्य मध्यदेहभागस्तृचोत्तरसूक्तत्रयनिष्पाद्योऽभिहितः*। अथ चतुर्थे ग्रीवादिभागा उच्यन्ते। तत्रादावात्मभागस्यावसाने पठनीयामृचं विधत्ते। (१)"अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्वाणि सन्दधाति"(१) इति। 'अथ' शस्त्रस्य मध्यदेहभागकथनानन्तरं, 'सूददोहाः', पठनीयः, सूदं सारं रसन्दोग्धीति 'सूददोहाः' कामधेनुः, इत्यर्थः। तद्वाचकोऽयं शब्दो यस्यामृचि "ता अस्य सूददोहसः" इत्येवंरूपायां वर्त्तते, सापि ऋक् 'सूददोहाः', तां सूददोहसमृचं पठेत्। येयमृक् 'सूददोहःशब्देनाभिधीयते। सेयमृक्† 'प्राणस्वरूपैव। यथा प्राणवायुः सूत्रात्मा सन् सर्वेषां शरीरावयवानां सन्धाता भवति, एवमियमृक् सर्वेषां शस्त्रभागानां मध्यदेहः, ग्रीवादीनां सन्धात्री। तस्मात् प्रत्यवयवं पठनीयत्वादस्य मध्यभागस्यान्ते तत्पाठो विवक्षितः॥

मध्यदेहभागं समाप्य ग्रीवाभागं विधत्ते। (२)"अथातो ग्रीवास्ता आचक्षते यथाच्छन्दसमुष्णिह इति"(२) इति। 'अथ' मध्यदेहकथनानन्तरं, यस्मात् 'ग्रीवाख्यो भागः पक्ष्याकारस्यापेक्षितः, 'अतः' कारणात्, ग्रीवारूपा ऋचः शंसेत्। 'ताः' ऋचः, शाखान्तराभिज्ञाः 'आचक्षते'। अत एव पञ्चमे शौनकेनोदाहृताः। ग्रीवा यस्येदमारज इत्यादिना। ताश्च तिस्र

* तृचोत्तरसूक्तावयवनिष्पाद्योऽभिहित इति क०, ग० च।

† सेयमिति क०, ग० च।

ऋचः 'यथाच्छन्दसं' अध्यापकप्रसिद्धवेदपाठमनतिक्रम्य, अक्षरगणनया तिस्रः 'उष्णिहः', सम्पद्यन्ते। न त्वत्र छन्दःपूरणायाक्षरान्तरप्रक्षेपं पुरुष इत्यादिवदपेक्षन्ते॥

ग्रीवाभागानन्तरमपि पूर्ववत् सूददोहसं विधत्ते। (३)"अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्वाणि सन्दधाति"(३) इति॥

ग्रीवाभागं समाप्य शिरोभागं विधत्ते। (४)"अथातः शिरस्तद्गायत्रीषु भवत्यग्रं वै छन्दसां गायत्र्यग्रमङ्गानां शिरस्तदर्कवतीषु भवत्यग्निर्वा अर्कस्ता नव भवन्ति नवकपालं वै शिरो दशमीं शंसति त्वक्केशा इत्येव सा भवत्यथो स्तोमातिशंसनाया एव तौ त्रिवृच्च स्तोमो भवतो गायत्रञ्च च्छन्द एतयोर्वै स्तोमच्छन्दसोः प्रजातिमनु सर्वमिदं प्रजायते यदिदं किञ्च प्रजात्यै"(४) इति। ग्रीवानन्तरं शिरसोऽपेक्षितत्वाच्छिरोभागं शंसेत्। स च शिरोभागो 'गायत्रीच्छन्दस्कास्वृक्षु द्रष्टव्यः। शिरोगायत्र्योरग्रत्वसाम्यात्। सिसृक्षोः प्रजापतेः प्रथमं मुखतो गायत्री समुत्पन्ना। पश्चाद्बाह्वादिभ्यस्त्रिष्टुबादय उत्पन्नाः। ततो गायत्र्या अग्रत्वम्। एतच्च स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवतान्वसृज्यन्त गायत्रीच्छन्द इत्यादि यजुर्ब्राह्मणे द्रष्टव्यम्। उत्पद्यमानस्य देहस्य शिरः प्रथमं योनेर्निर्गच्छतीति शिरसोऽप्यग्रत्वम्। गायत्रीणां बह्वीनां विद्यमानत्वात् 'अर्कवतीषु', इति विशिष्यते। इन्द्रमिद्गाथिन इत्यादिसूक्तं* दशर्चं' तत्रत्या ऋचः 'अर्कवत्यः। इन्द्रमर्केभिरर्किण इत्येवमर्कशब्दयुक्तत्वादर्च्यत इति व्युत्पत्त्यार्क-

* ऋग्वेदे म०१, सू०७, ऋ०१।

शब्देन 'अग्निः', उच्यते । अतोऽग्नियुक्तत्वेन प्रशस्तत्वादर्कवतीः शंसेत्। तासु इन्द्रमिद्गाथिन इत्यादिकानां च एकचर्षणीनामित्यन्तानां सङ्ख्या प्रथता नवेतिवाक्येन प्रशस्यते। नवसङ्ख्याकानि कपालानि चैकत्र संयोज्य प्रजापतिना मनुष्यशिरो निर्मितम्। एतच्च मृतपुरुषस्य शिरसि शोषेण त्वगादावपगते सति अस्थिगतो विभागो बुद्धिमद्भिरुन्नेतुं शक्यते। एतदेवाभिप्रेत्य तैत्तिरीयाश्चामनन्ति। तस्मान्नवधा* शिरो विष्यूतमिति। या तु इन्द्रं वो विश्वतस्परीति† 'दशमी', तच्छंसनेन शिरःकपालानामुपरि 'त्वक्', सम्पादिता भवति। तस्यां च त्वचि 'केशाः', सम्पादिता भवन्ति। अपि चेयं दशमी सामगानां सम्बन्धिनस्त्रिवृदाख्यस्तोमविशेषस्यातिशयेन 'शंसनार्थं' सम्पद्यते। सामगा हि शिरोभागं स्तुवन्त इन्द्रमिद्गाथिन इत्यादिषु नवस्वृक्षु आवृत्तिरहितं 'त्रिवृत्स्तोमं सम्पादयन्ति। न त्वत्र तेषां दशमी विद्यते। होता तु नवसङ्ख्याकास्ता अतिक्रम्य 'दशमीं', अपि 'शंसति', तदेतदतिशंसनम्। अत्र त्रिवृत्स्तोमराहित्यञ्च‡ यथा सामवेदेऽवगम्यते तथा तैत्तिरीयब्राह्मणेऽप्यवगम्यते। त्रिवृच्छिरो भवति त्रेधा विहितं हि शिरो लोमच्छवीरस्थि पराचा स्तुवन्ति इति। एवं सति योऽत्र सामगैः सम्पाद्यस्त्रिवृत्स्तोमः, यदपि ऋग्गतं गायत्रीच्छन्दः, 'तौ' एतौ द्वौ, प्रजोत्पत्तिहेतू सम्पद्येते। तयोश्च 'स्तोमच्छन्दसोः', प्रजोत्पादनं 'अनु', लोके यत्किञ्चित् 'इदं' प्राणिजातं,

---

* तस्मिन्नवधेति ।

† ऋग्वेदे म० १, सू० ७, ऋ० १० ।

‡ त्रिवृत्स्तोमेनावृत्तिराहित्यञ्चेति क० ग० च।

दृश्यते तत् 'इदं सर्वं', उत्पन्नं भवति। अतः शिरोभागशंसनं प्रजोत्पादनाय सम्पद्यते॥

एतद्वेदनं प्रशंसति। (५)"प्रजायते प्रजया पशुभिर्य एवं वेद"(५) इति॥

शिरोभागप्रशंसनानन्तरं पूर्ववत्ता अस्य इत्येतामृचं * विधत्ते। (६)"अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्वाणि सन्दधाति"(६) इति॥

शिरोभागं समाप्यानन्तरं पक्ष्याकारस्य पक्षमूलभागापेक्षणात्तद्भागशंसनं विधत्ते। (७)"अथातो विजवस्ता विराजो भवन्ति तस्मात् पुरुषः पुरुषमाह वि वा अस्मासु राजसि ग्रीवा वै धारयसीति स्तभमानं वा यद्वा द्रुताः सम्बाह्वतमाः सत्योऽन्नतमां प्रत्यच्यन्तेऽन्नं हि विराडन्नमु वीर्यम्"(७) इति। विशेषेण जवो वेगो यस्मिन् पक्षमूलभागे सम्पद्यते सोऽयं भागः 'विजवः'। यद्वा ग्रीवाया अधस्तना अस्थिविशेषाः 'विजवः', इत्यनेन उच्यन्ते। तद्भागत्वेन सम्पाद्यमानाः 'ताः' ऋचः, 'विराट्छन्दस्का 'भवन्ति'। ताश्च पञ्चमे शौनकेन शाखान्तरमाश्रित्य पठिताः। सुतस्ते सोम उप याहि इत्यादिना। यस्मात् ग्रीवाया अधोवर्त्तिपक्षमूलभागोऽस्थिभागो वा विराट्छन्दस्कमन्त्ररूपः, 'तस्मात्', लोके कश्चित् 'पुरुषः', इतरं 'पुरुषं' श्रुताध्ययनसम्पन्नं स्वामिनं वा, प्रत्येवं ब्रूते, 'अस्मासु', मध्ये त्वमेव 'विराजसि', इति। अथवा 'स्तभमानं' प्रणिपातादिविनयरहितम् उत्कन्धरं स्तब्धं पुरुषं प्रति, अन्यः पुरुष उपालम्भं कुर्वन्-

---

* ऋग्वेदे स०८, सू०६९. ऋ०२।

तद् ब्रूते, ग्रीवावयवानेव त्वं धारयसि नत्ववनतोऽसीति। यद्यप्यनेनैवौद्धत्यकथनेन स्तुतिर्न प्रतीयते तथापि ग्रीवाधारत्वाकारेणात्र स्तुतिर्द्रष्टव्या। इत्थं लौकिकोक्तिमुपजीव्य विराट्छन्दस्कानामृचां प्रशंसा कृता अथान्नहेतुत्वमुपजीव्य प्रशंसार्थं यद्वेति पक्षान्तरन्यासः। ग्रीवाया अधोभागरूपाः सुतस्ते सोम इत्यादिका ऋचः 'दुताः' प्राप्ताः। दुगताविन्यस्माद्धातोरुत्पन्नः शब्दः। 'सम्बाढ़तमाः' अतिशयेन परस्परं संश्लिष्टाः स्थिरत्वेन दृढाः, 'सत्यः', अतिशयेन 'अन्नरूपा विराजः 'प्रत्यच्यन्ते' प्राप्यन्ते। यस्मादन्नहेतुत्वेन 'विराडन्नं,' तच्च शक्तिहेतुत्वात् 'वीर्यं'। तस्माद्विराजः शंसेदित्यर्थः॥

ता अस्य सूददोहस इत्येतामृचं * विधत्ते। (८) "अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्वाणि सन्दधाति"(८) इति॥ १॥

(१)अथातो दक्षिणः पक्षः सोऽयं लोकः सोऽयमग्निः सा वाक्तद्रथन्तरं स वसिष्ठस्तच्छतं तानि षड् वीर्याणि भवन्ति सम्पात एव कामानामभ्यात्मेन प्रतिष्ठित्या अन्नाद्याय पङ्क्तिः(१) (२)अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्वाणि सन्दधाति(२) (३)अथात उत्तरः पक्षः सोऽसौ लोकः सोऽसावादित्यस्तन्मनस्तद्बृहत्स भरद्वाज-

* ऋग्वेद म० ८, सू० ६९, ऋ० ३।

स्तच्छतं तानि षड् वीर्याणि भवन्ति सम्प्रात एव कामाना-
मभ्याप्त्यै च प्रतिष्ठित्या अन्नाद्याय पङ्क्तिः(३) (४)ता ऊनाति-
रिक्तौ भवतो वृषा वै बृहद्योषा रथन्तरमतिरिक्तं वै पुंसो
न्यूनं स्त्रियै तस्मादूनातिरिक्तौ भवतः(४) (५)अथो एकेन
ह वै पक्षेण सुपर्णस्योत्तरः * पक्षोज्यायांस्तस्मादेकयर्चो-
त्तरः पक्षो भूयान् भवति(५) (६)अथ सूददोहाः प्राणो वै
सूददोहाः प्राणेन पर्वाणि सन्दधाति(६) (७)अथातः पुच्छं
ता एकविंशतिर्द्विपदा भवन्त्येकविंशतिर्ह्येमानि प्रत्यञ्चि
सुपर्णस्य पत्राणि भवन्ति(७) (८)अथो एकविंशो वै स्तो-
मानां प्रतिष्ठा प्रतिष्ठा पुच्छं वयसां(८) (९)द्वाविंशीं
शंसति प्रतिष्ठयोरेव तद्रूपं क्रियते तस्मात् सर्वाणि वयांसि
पुच्छेन प्रतितिष्ठन्ति पुच्छेनैव प्रतिष्ठायोत्पतन्ति प्रतिष्ठा
हि पुच्छं(९) (१०)स एष द्वाभ्यां दशिनीभ्यां विराड्-
भ्यामनयोर्द्वाविंश्योर्द्विपदयोरयं पुरुष प्रतिष्ठितस्तस्य
यत् सुपर्णरूपं तदस्य कामानामभ्याप्तत्या अथ यत् पुरुष-
रूपं तदस्य श्रियै यशसेऽन्नाद्यायापचित्यै(१०) (११)अथ
सूददोहाः अथ धाय्याथ सूददोहा वृषा वै सूददोहा
योषा धाय्या तदुभयतः सूददोहसा धाय्यां परि शंसति
तस्मात् द्वयो रेतः सिक्तं सदेकतामेवाप्नोति योषा-

* सुपर्ण श्रोत्तरत इति द० चिह्नितमूलपुस्तकधृतपाठः।

मेवाभ्यत आजाना हि योषातः प्रजाना तस्मादेनामत्र शंसति(११) ॥ २ ॥

ऐतरेयारण्यकभाष्यम् ।

पक्ष्याकारस्य शस्त्रस्य पक्षापेक्षत्वादादौ दक्षिणं पक्षं विधत्ते । (१)"अथातो दक्षिणः पक्षः सोऽयं लोकः सोऽयमग्निः सा वाक् तद्रथन्तरं स वसिष्ठस्तच्छतं तानि षड् वीर्याणि भवन्ति सम्पात एव कामानामभ्यासैत्र प्रतिष्ठित्या अन्नाद्याय पङ्क्तिः"(१) इति । योऽयं विधीयमानः 'दक्षिणः पक्षः', 'सोऽयं', भूर्लोकात्मकः, प्रथमभावित्वात् । उत्तरपक्षस्य द्युलोकत्वेन वक्ष्यमाणत्वाद् भूर्लोकस्याग्निना देवेन अधिष्ठितत्वादयं पक्षः 'अग्निस्वरूपश्च। अग्निर्वाग् भूत्वा मुखं प्राविशदिति श्रुतेः । अग्निसम्बन्धात् 'वाग्रूपश्च । वाग् वै रथन्तरमिति श्रुतेः, 'रथन्तरसामरूपश्च । रथन्तरमाजभारा वसिष्ठइति श्रुतेः, 'वसिष्ठरूपश्च । एतस्मिन् दक्षिणे पक्षे 'शतं', ऋचः, सम्पद्यन्ते । ताश्च पञ्चमे शौनकेनोदाहृताः । राथन्तरो दक्षिणः पक्षोऽभि त्वा पूर्वपीतय इति रथन्तरस्य स्तोत्रियानुरूपावित्यादिना । तत्र स्तोत्रिये तृचे तदनुरूपे च तृचान्तरे 'षट्'सङ्ख्याका ऋचः । इन्द्रस्य नु वीर्याणीति* सूक्तं पञ्चदशर्चं । त्वेह यत्पितर इत्यस्य † पञ्चविंशत्यृगात्मकस्य सूक्तस्यादौ पञ्चदशर्चः पठनीयाः । यस्तिग्मशृङ्ग इति ‡ सूक्तमेकादशर्चं । उग्रो जज्ञ इति सूक्तं § दशर्चं ।

---

* ऋग्वेदे म० १, सू० ३२, ऋ० १ । ‡ ऋग्वेदे म० ७, सू०१९, ऋ० १ ।

† ऋग्वेदे म० ७, सू० १८, ऋ० १ । § क ऋग्वेदे म०७, सू० २०, ऋ० १ ।

उदु ब्रह्माणीति* सूक्तं षड़ृचम्। आ ते मह इत्यादीनि† पञ्च सूक्तानि, तेषु प्रथम् आ ते मह इन्द्रेति सूक्तं षड़ृचं। न सोम इन्द्रेति द्वितीयं पञ्चर्चं‡। इन्द्र नर इति§ तृतीयमपि पञ्चर्चं। ब्रह्माण इन्द्रेत्येतच्चतुर्थमपि ¶ पञ्चर्चं अयं सोम इन्द्र तुभ्यं सुन्व इत्येतत् ‖ पञ्चममपि पञ्चर्चं आ न इन्द्रो दूरादिति** सूक्तमेकादशर्चं। तदेतत् 'सम्पात सूक्तमिति नाम्ना व्यवह्रियते। इत्थाहि सोम इत्येषा†† पङ्क्तिच्छन्दस्का ऋगेका। तस्याः पङ्क्तेः प्राचीनं सर्वमृचां 'शतं', सम्पद्यते। एतस्मिन् दक्षिणे पक्षे पूर्वोक्तभूलोकाग्निवाग्रथन्तरवसिष्ठशतसङ्ख्यारूपाणि यानि सन्ति तानि षट्सङ्ख्याकानि 'वीर्य्याणि भवन्ति'। आ न इन्द्र इत्यादिसूक्तगत ऋक्सङ्घः 'सम्पात एव' सम्यक् प्राप्तिहेतुरेव। अतोऽयं 'कामानां', अभितः प्राप्त्यर्थं भूलोके प्रतिष्ठार्थं, अन्नाद्यप्राप्त्यर्थं च तच्छतं सम्पद्यते। तच्छतस्य परा इत्थाहि सोम इत्यादिका पङ्क्तिः पठनीया॥

तत ऊर्ध्वन्ता अस्येत्येतामृचं‡‡ विधत्ते। (२) "अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्वाणि सन्दधाति"(२) इति॥

दक्षिणपक्षानन्तरं उत्तरपक्षस्य वक्तव्यत्वात्तमेतं विधत्ते।

---

* ऋग्वेदे म० ७, सू० २३, ऋ० १।

† ऋग्वेदे म० ७, सू० २५, ऋ० १।

‡ ऋग्वेदे म० ७, सू० २६, ऋ० १।

§ ऋग्वेदे म० ७, सू० २७, ऋ० १।

¶ ऋग्वेदे म० ७, सू० २८, ऋ० १।

‖ ऋग्वेदे म० ७, सू० २९, ऋ० १।

** ऋग्वेदे म० ४, सू० २० ऋ० १-२।

†† ऋग्वेदे म० १, सू० ८०, ऋ० १।

‡‡ ऋग्वेदे म० ८, सू० ६९, ऋ० ३।

(२)"अथात उत्तरः पक्षः सोऽसौ लोकः सोऽसावादित्य-स्तन्मनस्तद्बृहत्स भरद्वाजस्तच्छतं तानि षड् वीर्याणि भवन्ति सम्पात एव कामानामभ्यात्यै प्रतिष्ठित्या अन्नाद्याय पङ्क्तिः"(२) इति । यः 'उत्तरः पक्षः, सोऽसौ', द्युलोकस्वरूपः । भूलोकरूपाद्दक्षिणपक्षादुत्तरभावित्वात् । आदित्यस्य द्युलोकवासित्वात्तद्रूपस्य । यद्यपि मनसश्चन्द्रमा देवता, तथापि चन्द्रादित्ययोरभेदविवक्षितत्वादादित्यस्य वा 'मनोरूपत्वं, मनो वै बृहदिति श्रुतेः, 'बृहत्सामत्वं, भरद्वाजो बृहदाचक्र इति श्रुतेः, 'भरद्वाजरूपत्वं' । 'तत्' उत्तरपक्षस्वरूपं, ऋचां 'शतं', सम्पद्यते । तच्च शतं पञ्चमे त्वामिद्धीत्यादिना शौनक उदाजहार । त्वामिद्धि हवामहे * त्वं ह्येहि चेरवः† इत्यनयोस्तृचयो षडृचः । तमु ष्टुहीत्येतत् ‡ पञ्चदशर्चं सूक्तं । सुत इत्वमित्यादीनि त्रीणि सूक्तानि, तत्र सुत इत्वमित्येतत् § प्रथमं दशर्चं सूक्तं । वृषा मद इत्येतदपि ¶ दशर्चं द्वितीयं सूक्तं । या त ऊतिरिति ‖ नवर्चं तृतीयं सूक्तं । अभूरेक इत्यादीन्यष्टौ सूक्तानि, तेष्वभूरेक इति ** प्रथमं सूक्तं । अपूर्व्येति †† सूक्तं द्वितीयं । य ओजिष्ठ इति ‡‡ तृतीयं । सद्य त्व इति §§ चतुर्थं । कदा

---

* ऋग्वेदे म०६, सू०४६, ऋ०१ ।
† ऋग्वेदे म०८, सू०६१, ऋ०२ ।
‡ ऋग्वेदे म०६, सू०१८, ऋ०१ ।
§ ऋग्वेदे म०६, सू०२३, ऋ०१ ।
¶ ऋग्वेदे म०६, सू०२४, ऋ०१ ।
‖ ऋग्वेदे म०६, सू०२५, ऋ०१ ।
** ऋग्वेदे म०६, सू०३१, ऋ०१ ।
†† ऋग्वेदे म०६, सू०३२, ऋ०१ ।
‡‡ ऋग्वेदे म०६, सू०३३, ऋ०१ ।
§§ ऋग्वेदे म०६, सू०३४, ऋ०१ ।

भुव इति * पञ्चमं। सत्रा मदास इति † षष्ठम्। अर्वाग्रथमिति ‡ सप्तमं। अपादित्यष्टमं §। तान्येतान्यष्टौ सूक्तानि प्रत्येकं पञ्चर्चानि। कथामहामित्येतत् ¶ सूक्तमेकादशर्चं। एतच्च सम्पातशब्देन ‖ व्यवह्रियते। इन्द्रो मदायेत्येका पङ्क्तिच्छन्दस्का, तस्याः पङ्क्तेः प्राचीना ऋचो यद्यपि एकाधिकशतसङ्ख्याकास्तथापि तत्र शतस्य विद्यमानत्वाच्छतमित्युच्यते। 'तानि षड्वीर्याणि' इत्यादिकं पूर्ववत्॥

दक्षिणोत्तरपक्षयोर्न्यूनातिरिक्तभावं प्रशंसति। (४)"ता ऊनातिरिक्तौ भवतो वृषा वै बृहद्योषा रथन्तरमतिरिक्तं वै पुंसो न्यूनं स्त्रियै तस्मादूनातिरिक्तौ भवतः"(४) इति। एकयर्चा न्यूनो दक्षिणः पक्ष उत्तरस्त्वेकयर्चातिरिक्तस्तस्योत्तरस्य 'बृहद्रूपत्वाद् बृहतश्च पुरुषत्वेनाङ्गाधिक्यं युक्तं। दक्षिणस्य रथन्तरत्वाद्रथन्तरस्य स्त्रीरूपत्वान्न्यूनाङ्गत्वं युक्तं। 'तस्मात्,' उभौ पक्षौ न्यूनातिरिक्तौ कर्त्तव्यौ॥

प्रकारान्तरेण न्यूनाधिकभावं प्रशंसति। (५)"अथो एकेन ह वै पत्रेण सुपर्णस्योत्तरः पक्षो ज्यायांस्तस्मादेकयर्चोत्तरः पक्षो भूयान् भवति"(५) इति। लोके पक्षिण उत्तरपक्षे एकं पत्रमधिकं भवति, अतोऽत्रापि 'उत्तरः पक्षः,' 'एकयर्चा', अधिकः कर्त्तव्यः॥

---

* ऋग्वेदे म०६, सू०३५, ऋ०१। § ऋग्वेदे म०६, सू०३८, ऋ०१।
† ऋग्वेदे म०६, सू०३६, ऋ०१। ¶ ऋग्वेदे म०४, सू०३२, ऋ०१।
‡ ऋग्वेदे म०८, सू०३५, ऋ०२२। ‖ सम्पातसूक्तेनेति क०।

ता अस्येत्येतामृचं विधत्ते । (६)"अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्वाणि सन्दधाति"(६) इति ॥

पक्षानन्तरं पुच्छभागस्यापेक्षितत्वात् पुच्छं विधत्ते । (७)"अथातः पुच्छं ता एकविंशतिर्द्विपदा भवन्त्येकविंशतिर्ह्येमानि प्रत्यञ्चि सुपर्णस्य पत्राणि भवन्ति"(७) इति । याः पुच्छभागरूपा ऋचः 'ताः', प्रत्येकं पादद्वयोपेता मिलित्वा 'एकविंशतिसङ्ख्याकाः । तास्तु पञ्चमे शौनकेन इमा नु कमित्यादिनोदाहृताः । इमा नु कमित्यस्मिन् सूक्ते * पञ्चर्चः । आयाहि वनसा सहेत्यस्मिन् † सूक्ते चतस्रः । ता एता नवसङ्ख्याकाः 'द्विपदाः,' शाकल्यसंहितायामाम्नाताः । प्र व इन्द्रायेत्यादिकाः ‡ नवसङ्ख्याकाः 'द्विपदाः', शाखान्तरगताः । एष ब्रह्मेत्यादिकाश्च तिस्रः 'द्विपदाः', शाखान्तर एवाम्नाताः । इत्येवं 'एकविंशतिः' । लोकेऽपि पक्षिणः पुच्छे प्रत्यङ्मुखानि 'पत्राणि', 'एकविंशतिर्भवन्ति', तस्मात् तावतीः ऋचः शंसेत् ॥

प्रकारान्तरेण सङ्ख्यां प्रशंसति । (८)"अथो एकविंशो वै स्तोमानां प्रतिष्ठा प्रतिष्ठा पुच्छं वयसां"(८) इति । सामवेदप्रसिद्धास्त्रिवृत्पञ्चदशसप्तदशैकविंशनामका ये स्तोमा अग्निष्टोमस्य निष्पादकास्तेषां मध्ये 'एकविंशः,' एव 'प्रतिष्ठा' समाप्तिहेतुः, पक्षिणाञ्च 'पुच्छं', 'प्रतिष्ठा', उत्पतनव्यापारो-

---

* ऋग्वेदे म०१०, सू०१५७, ऋ०१ ।

† ऋग्वेदे म०१०, सू०१७२, ऋ०१ ।

‡ ऋग्वेदे म०८, सू०८९, ऋ०३ ।

हृणस्थित्यादावनुपयुक्तत्वात् । अतः पुच्छस्यैकविंशतिसङ्ख्या युक्ता ॥

अत ऊर्ध्वमाभूर्ध्वंसा इत्येतामन्यां द्विपदां विधत्ते । (९)"द्वाविंशौ शंसति प्रतिष्ठयोरेव तद्रूपङ् क्रियते तस्मात् सर्वाणि वयांसि पुच्छेन प्रतितिष्ठन्ति पुच्छेनैव प्रतिष्ठायोत्पतन्ति प्रतिष्ठा हि पुच्छं"(९) इति। अत्र 'द्वाविंश्याः शंसने सति विंशतेरुपरि ये द्वे ऋचौ 'तत्' एतत्, 'प्रतिष्ठयोः' पादयोः, 'एव रूपं क्रियते', द्वित्वसङ्ख्यायाः समानत्वात्। यस्मादेवं पुच्छस्य प्रतिष्ठाहेतुत्वं 'तस्मात्' सर्वेऽपि पक्षिणः 'पुच्छेन प्रतितिष्ठन्ति'। भूमौ वृक्षादौ वा पुच्छं पृष्ठत आधारं कृत्वा स्थैर्येणावतिष्ठन्ते। तथा 'पुच्छेनैव', भूमाववस्थितेन, 'प्रतिष्ठाय' सकृत् स्थैर्येण स्थित्वा, पश्चात् प्रबलेनोत्साहेन 'उत्पतन्ति',। यस्मात् 'पुच्छं', 'प्रतिष्ठा,' तस्मादेतद्युक्तं ॥

पुनरपि द्वाविंशतिसङ्ख्यां प्रकारान्तरेण प्रशंसति। (१०)"स एष द्वाभ्यां दशिनीभ्यां विराड्भ्यामनयोर्द्वाविंश्योर्द्विपदयोरयं पुरुषः प्रतिष्ठितस्तस्य यत् सुपर्णरूपन्तदस्य कामानामभ्याप्त्या अथ यत् पुरुषरूपं तदस्य श्रियै यशसेऽन्नाद्यायापचित्यै"(१०) इति। द्वाविंशतिसङ्ख्याकानामृचां मध्ये द्वे अवसानगते ऋचौ परिशिष्य ततः पूर्वभाविनी येयमृग्विंशतिस्तस्यां द्वे दशिन्यौ दशसङ्ख्योपेते ऋक्समूहौ। अत एव तयोर्विराट्त्वं ताभ्यां 'विराड्भ्यां' 'स एषः' शस्त्ररूपः सुपर्णः, 'प्रतिष्ठितः', इत्यन्वयः। ये तूत्तरभाविन्यौ द्वाविंशतिसङ्ख्यापूरिके द्वे ऋचौ द्विपदारूपे तयोर्ऋचोः 'अयं पुरुषः' द्विपाद्यजमानः,

'प्रतिष्ठितः'। तथा सति 'तस्य' शस्त्रस्य, द्व्यृचद्वयात्मकं 'यत्सुपर्णरूपं,' 'तत्', 'अस्य' यजमानस्य, 'कामानां,' अभितः प्राप्त्यै सम्पद्यते। अनन्तरमृग्द्वयात्मकं 'यत्पुरुषरूपं', उक्तं तद्वत् 'तत्', 'अस्य' यजमानस्य, 'श्रीयशोऽन्नाद्यपूजार्थं' सम्पद्यते।

यथोक्तद्वाविंशतेरूर्ध्वमुभयतः सूददोहसा वेष्टितां यद्वा वान पुरुतममित्येतान्धाय्यां विधत्ते। (११) "अथ सूददोहा अथ धाय्याथ सूददोहा वृषा वै सूददोहा योषा धाय्या तदुभयतः सूददोहसा धाय्यां परिशंसति तस्माद्द्वयो रेतः सिक्तं सदेकता-मेवाप्नोति योषामेवाभ्यत आजाना हि योषातः प्रजाना तस्मादेनामन्त शंसति"(११)इति। उभयतः पठितायाः सूद-दोहस आधिक्यात्पुरुषत्वं। मध्ये पठिताया यद्वा वानेति धाय्याया अल्पत्वेन स्त्रीरूपत्वं। तस्मान्मिथुनत्वसिद्ध्यर्थम् 'उभ-यतः,' 'सूददोहसा', युक्तां 'धाय्यां', परिशंसेत्। तस्मात्पुरुषेण परिष्वक्ता योषिद्वत् 'सूददोहसा,' सह धाय्या संयोजिता। 'तस्मात्,' एव लोकेऽपि 'द्वयोः' स्त्रीपुरुषयोः, सम्बन्धि 'रेतः,' गर्भाशये निषिक्तं', 'सत्', एकत्वमेव प्राप्नोति। तदपि 'योषा-मेव', 'अभिलक्ष्य तन्मिलितमेवावतिष्ठते न पुरुषशरीरे। 'हि' यस्मात् कारणात्, इयं 'योषा', 'आजाना' अस्मान् मिलिताद्रेतोद्वयात्साकल्येन शरीरोत्पत्तिर्यस्यां योषायां सेयमत 'आजाना'। तथा च वक्ष्यते, तद्यदा स्त्रियां सिञ्चत्यथैन-ज्जनयतीति। 'अतः' कारणात्, इयं 'योषा', 'प्रजाना' प्रकृष्टो जानः पुत्रपौत्रोत्पादनं यस्यां सा 'प्रजाना'। यस्मादेवन्धाय्या प्रशस्ता 'तस्माद्', एतान्धाय्यां अस्मिन्निजवभागे पठेत्॥ २॥

(१)गायत्रीं तृचाशीतिं शंसत्ययं वै लोको गायत्री तृचाशीतिर्यदेवास्मिन् लोके यशो यन्महो यन्मिथुनं यदन्नाद्यं यापचितिस्तदस्नवै तदाप्नवानि तदवरुणधै तन्मेऽसदिति(१) (२)अथ सूददोहाः प्राणो वै सूददोहाः प्राणेनेमं लोकं सन्तनोति(२) (३)बार्हतीं तृचाशीतिं शंसत्यऽन्तरिक्षलोको वै बार्हती तृचाशीतिर्यदेवान्तरिक्षलोके यशो यन्महो यन्मिथुनं यदन्नाद्यं यापचितिस्तदस्नवै तदाप्नवानि तदवरुणधै तन्मेऽसदित्यथ सूददोहाः प्राणो वै सूददोहाः प्राणेनान्तरिक्षलोकं सन्तनोति(३) (४)औष्णिहीं तृचाशीतिं शंसत्यसौ वै लोको द्यौरौष्णिही तृचाशीतिर्यदेवामुष्मिंल्लोके यशो यन्महो यन्मिथुनं यदन्नाद्यं यापचितिः यद्देवानां देवं तदस्नवै तदाप्नवानि तदवरुणधै तन्मेऽसदित्यथ सूददोहाः प्राणो वै सूददोहाः प्राणेनामुं लोकं सन्तनोति सन्तनोति (४) ॥ ३ ॥

इत्यैतरेयप्रथमारण्यके चतुर्थोऽध्यायः ॥

ऐतरेयारण्यकभाष्यम् ।

पञ्चमूलरूपा विजवा अभिहिताः*। अथास्य पक्षिणोऽन्नरूपा अशीतयो वक्तव्याः, तत्र एकामशीतिं विधत्ते। (१)"गायत्रीं

* पञ्चमूला ऋचो विजवा विवक्षिता इति क०, ग० च।

ऌचाशीतिं शंसत्ययं वै लोको गायत्री ऌचाशीतिर्यदेवास्मिंल्लोके यशो यन्महो यन्मिथुनं यदन्नाद्यं यापचितिस्तदश्नवै तदाप्नवानि तदवरुन्धै तन्मेऽसदिति"(१) इति। 'गायत्रीच्छन्दस्कानां' 'ऌचानामशीतिं' 'शंसति'। ते चाशीतिसङ्ख्याकास्तृचा महाँ इन्द्रो य ओजसेत्यादिकाः* पञ्चमे शौनकेनोदाहृताः। तेषां मध्ये प्रथमभावित्वात्तद्युक्ता या यास्तृचाशीतयस्तत्त-द्रूपत्वं। तथा सति 'अस्मिन् लोके', 'यत्', 'यशः' कीर्त्तिः, 'यत्', च 'महः' पूजा, 'यत्' च 'मिथुनं' भार्य्यासम्बन्धि, 'यत्', च 'अन्नाद्यं' भक्ष्यभोज्यादिकं, 'या', 'अपचितिः' पूजा। वेदशास्त्रप्रयुक्ता पूजा महःशब्देन पूर्वमुक्ता, तेजो वा तत्रोक्तम्। अत्र तु धनधान्यादिसमृद्धिरूपा पूजोच्यते। 'तत्' यशःप्रभृति-कमपचित्यन्तं सर्वं, 'अश्नवै' प्राप्नवानि। पुत्रपौत्रादिषु तत्सञ्चारयितृत्वं व्याप्तृत्वन्तत्सिध्यर्थमादौ तद्यशःप्रभृतिकं 'आप्न-वानि' सम्पादयानि। सम्पादितञ्च 'तत्' सर्वं, 'अवरुन्धै' स्वाधीनङ्करवाणि, 'तत्' च स्वाधीनं, 'मे' मदीयगृहेषु, 'असत्' अस्तु, सर्वदा तिष्ठतु। इत्यभिप्रेत्य 'गायत्रीं ऌचाशीतिं', पठेत्॥

ता अस्येत्येतामृचं विधत्ते। (२)"अथ सूददोहाः प्राणो वै सूददोहाः प्राणेनेमं लोकं सन्तनोति"(२)इति। 'सन्तनोति' संयोजयतीत्यर्थः॥

द्वितीयां ऌचाशीतिं बृहतीच्छन्दस्कां विधत्ते। (३)"बार्हतीं ऌचाशीतिं शंसत्यन्तरिक्षलोको वै बार्हती ऌचाशीतिर्यदेवान्त-

---

* ऋग्वेदे म०८, सू०६, ऋ०१।

रिक्षलोके यशो यन्महो यन्मिथुनं यदन्नाद्यं यापचितिस्तदश्नवै तदाप्नवानि तदवरुणधै तन्मेऽसदित्यथ सूददोहाः प्राणो वै सूददोहाः प्राणेनान्तरिक्षलोकं सन्तनोति"(३) इति। सेयं 'बार्हती तृचाशीतिः,' मा चिदन्यद्वि शंसतेत्यादिना* पञ्चमे शौनकेनोदाहृता। द्वितीयत्वादस्य 'अन्तरिक्षलोकरूपत्वं'। अन्यत् पूर्ववद्व्याख्येयं॥

उष्णिक्छन्दस्कां तृतीयां तृचाशीतिं विधत्ते। (४)"औष्णिहीं तृचाशीतिं शंसत्यसौ वै लोको द्यौरौष्णिही तृचाशीतिर्यद्देवामुष्मिंल्लोके यशो यन्महो यन्मिथुनं यदन्नाद्यं यापचितिर्यद्देवानां दैवं तदश्नवै तदाप्नवानि तदवरुणधै तन्मेऽसदित्यथ सूददोहाः प्राणो वै सूददोहाः प्राणेनामुं लोकं सन्तनोति सन्तनोति"(४) इति। सेयं 'औष्णिही तृचाशीतिः', य इन्द्र सोमपातम इति† पञ्चमे शौनकेनोदाहृता। अस्यामुपरितनत्वात् द्युलोकरूपत्वं। यद्यपि प्रायेण वेदेष्वयं लोकोऽसौ लोक इति भूलोकद्युलोकावेवाभिधीयेते। तथापि द्यौरित्यभिधानं विस्पष्टार्थं। 'देवानां' इन्द्रादीनां, 'दैवं' पूज्यं ब्रह्म। तथा च श्वेताश्वतरा आमनन्ति। तमीश्वराणां परमं महेश्वरं तं देवानां परमं दैवमिति। अन्यत्पूर्ववद्व्याख्येयं। अभ्यासोऽध्यायपरिसमाप्त्यर्थः॥ ३॥

इति माधवीये वेदार्थप्रकाशे ऐतरेयप्रथमारण्यके चतुर्थोऽध्यायः॥

---

* ऋग्वेदे म०८, सू०१, ऋ०१।

† ऋग्वेदे म०८, सू०१२, ऋ०१।

## अथ पञ्चमोऽध्यायः ।



(१)वशं शंसति वशे म इदं सर्वमसदिति(१) (२)ता एकविंशतिर्भवन्त्येकविंशतिर्वै ता अन्तरुदरे विकृतयः(२) (३)अथो एकविंशो वै स्तोमानां प्रतिष्ठा प्रतिष्ठोदरमन्नाद्यानां(३) (४)ता विच्छन्दसो भवन्ति विषुद्रमिव वा अन्तस्थ्यमणीय इव च स्थवीय इव च(४) (५)ताः प्रणावं छन्दस्कारं यथोपपादं शंसति यथोपपादमिव वा अन्तस्त्थं ह्रसीय इव च द्राघीय इव च(५) (६)अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्व्वाणि सन्दधाति(६) (७)तामन्वोत्सृजति द्वादशकृत्वः शस्त्वा द्वादशविधा वा इमे प्राणाः सप्त शीर्षण्या द्वौ स्तन्यौ त्रयोऽवाञ्चोऽत्र वै प्राणा आप्यन्तेऽत्र संस्क्रियन्ते तस्मादेनामन्वोत्सृजति(७) (८)इन्द्राग्नी युवं सुन इत्यैन्द्राग्ना ऊरू ऊर्वष्ठीवे प्रतिष्ठे(८) (९)ताः षट्पदा भवन्ति प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषः चतुष्पादाः पशवो यजमानमेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति(९) (१०)द्वितीया सप्तपदा भवति तां गायत्रीं चानुष्टुभं च करोति ब्रह्म वै गायत्री वागनुष्टुप् ब्रह्मणैव तद्वाचं

सन्दधाति(१०) (११)त्रिष्टुभमन्ततः शंसति वीर्यं वै त्रिष्टुब् वीर्येणैव तत् पशून् परिगच्छति तस्मात् पशवो वीर्यमनूपतिष्ठन्ते ईर्यितां चैवाभ्युत्थानञ्च(११) ॥ १ ॥

ऐतरेयारण्यकभाष्यम् ।

चतुर्थे शस्त्रपक्षिणो ग्रीवादिभागा उक्ताः । अन्ते तृचाशीतयोऽन्नरूपा अभिहिताः, तस्यान्नस्य धारणार्थमुदरं वक्तव्यं । अतस्तद्रूपं वशनामकं शस्त्रभागं विधत्ते । (१)"वशं शंसति वशे म इदं सर्व्वमसदिति"(१) इति । यत् 'इदं' स्थावरजङ्गमरूपं जगत्, अस्ति, तत् 'सर्वं', 'मे वशे', भूयादित्यभिप्रेत्य वशाख्यं शस्त्रभागं पठेत्। स च भागस्तावतः पुरूवसो* इत्यादिना पञ्चमे स्पष्टमुदाहृतः। वशनामकेन महर्षिणा दृष्टत्वादयं भागो वश इत्युच्यते ॥

तत्रावस्थितामृक्सङ्ख्यां† प्रशंसति । (२)"ता एकविंशतिर्भवन्त्येकविंशतिर्हि ता अन्तरुदरे विकृतयः"(२) इति। तावत इत्यारभ्य सनितः सुसनितः‡ इत्येतदन्ता ऋचो विंशतिः। ततः सूददोहा एका, इत्येवं 'एकविंशतिः', द्रष्टव्या। 'हि' यस्मात्, 'उदरमध्ये विद्यमानाः' 'ताः' क्लोमप्लीहाद्यवयवरूपाः, 'विकृतयः', 'एकविंशतिसङ्ख्याकाः, तस्मादशभागे सा सङ्ख्या प्रशस्ता। ते चाऽवयवास्तत्र तत्र पशुवर्णनप्रकरणादौ द्रष्टव्याः ॥

---

* ऋग्वेदे म० ८, सू० ४६, ऋ० १ ।

† तत्सूक्तगतामृक्सङ्ख्यामिति क० ।

‡ ऋग्वेदे म० ८, सू० ४६, ऋ० २० ।

प्रकारान्तरेण सङ्ख्यां प्रशंसति । (३)"अथो एकविंशो वै स्तोमानां प्रतिष्ठा प्रतिष्ठोदरमन्नाद्यानां"(३) इति । त्रिवृदादिस्तोमानां मध्ये 'एकविंशस्तोमस्य 'प्रतिष्ठात्वं पूर्वोक्तं । 'उदरस्य त्वन्नाधारत्वं प्रसिद्धं ॥

तास्वृत्तु विद्यमानं परस्परविलक्षणच्छन्दस्त्वं प्रशंसति । (४)"ता विच्छन्दसो भवन्ति विचुद्रमिव वा अन्तस्थमणीय इव च स्थवीय इव च"(४) इति । त्वावत इत्यादिका या ऋचो वशनाम्ना विहिताः सन्ति, 'ताः', परस्परविलक्षणच्छन्दोयुक्ताः । एतच्चानुक्रमणिकायां विस्पष्टमुक्तं । त्वावतस्त्रयस्त्रिंशद्वशोऽश्व्य आस आदिकानीतस्य पृथुश्रवसो दानस्तुतिराद्या पादनिचृत्पञ्चम्यादिककुब्गायत्री * बृहत्यनुष्टुप् सतोबृहतीगायत्र्यादि । तदेतन्नानाच्छन्दस्त्वमुदररूपस्य वशस्य योग्यं । लोकेऽपि 'अन्तस्थं' उदरमध्यवर्त्तिक्लोमप्लीहादिकं, 'विचुद्रमिव' 'वै' विविधत्वेनाल्पमेव, दृश्यते । एकस्मादितरदल्पन्ततोऽप्यन्यदल्पम् इत्येवं विविधचुद्रत्वं । तदेव 'अणीय इव च', इत्यादिनोदाह्रियते । द्विविधमात्रं स्थूलं सूक्ष्मञ्च । तस्मादुभयस्मादतिशयेन स्थूलं हृदयं । एवं क्लोमप्लीहादिषु यथायोगं द्रष्टव्यं ॥

तासां शंसने प्रकारविशेषं विधत्ते । (५)"ताः प्रणावं छन्दस्कारं यथोपपादं शंसति यथोपपादमिव वा अन्तस्थं क्रसीय इव च द्राघीय इव च"(५) इति । या ऋचस्त्वावत इत्यादिकाः सन्ति, 'ताः', शंसनकाले 'प्रणावं' प्रणुत्य पुनः पुनः प्रणवमुच्चार्य्य, 'छन्दस्कारं' तत्र छन्दो यथा न वि-

* निचृदित्यारभ्य पञ्चम्यादि ककुप् प्रगाथागायत्रीति क०, ग० च ।

पर्येति तथा तच्च तत्र कृत्वा, 'यथोपपादं' उक्तनियममनतिक्रम्य, यथा शंसनमुपपद्यते तथा शंसेत्। एतदर्थमेव हि सन्दिग्धामृचं विभज्य शौनको दर्शयति। ददीरेक्ण इति* द्विपदा, नूनमथ इत्येकपदा, इति तत्र शंसनप्रकार आश्वलायनेनोदाहृतः। "पच्छो द्विपदा उप सन्तनुयादेकपदाः" इति। अयमर्थः। या ऋचः द्विपदाः सन्ति, ताः पच्छः शंसनीयाः, प्रथमपादं पठित्वा ततोऽवसाय पश्चात् द्वितीयपादान्ते† प्रणवं कुर्यात्, या एकपदाः सन्ति, ताः पुरस्तादुपरिष्टाच्च प्रणवाभ्यां सन्तनुयात् मध्ये च नावस्येदिति। ईदृशं शंसनं 'यथोपपादं', इत्युच्यते। 'अन्तस्थं' उदरमध्येऽवस्थितमप्यान्त्रक्लोमप्लीहादिकं, यथोपपन्नं भवति तथैवावतिष्ठते। किञ्चिदङ्गमतिह्रस्वं 'इव', अन्यदङ्गमतिदीर्घं 'इव', स्थितं। तस्मात् तत्तादृश्यान्न्यूनाधिकानि छन्दांसि यथायथं शंसेत्।

ता अस्येत्येतामृचं विधत्ते। (६)"अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्वाणि सन्दधाति(६)" इति॥

वशभागस्य शंसनादूर्ध्वं ता अस्येत्यस्या ऋचः परित्यागं विधत्ते। (७)"तामत्रोत्सृजति द्वादशकृत्वः शस्त्वा द्वादशविधा वा इमे प्राणाः सप्त शीर्षण्या द्वौ स्तन्यौ त्रयोऽवाञ्चोऽत्र वै प्राणा आप्यन्तेऽत्र संस्क्रियन्ते तस्मादेनामत्रोत्सृजति"(७) इति। 'तां' सूददोहसं, 'द्वादशवारं पठित्वा तत ऊर्ध्वं 'अत्र' वशशंसनस्थाने, परित्यजेत्। न तु इत ऊर्ध्वं ऊरु-

---

* ऋग्वेदे म०८, सू० ४६, ऋ० १५।

† द्वितीयं पादमवसायान्ते इति क०।

भागस्थाने तां सूददोहसं पठेत्। शस्त्रपक्षिणः पूर्वोक्ता एकादशावयवाः। आत्मा ग्रीवा शिरो विजवो द्वौ पक्षौ पुच्छं दृचाशीतिरूपाणि त्रीण्यन्नानि वशाख्यमुदरञ्चेति तत्र सर्वत्र सूददोहाः सकृत्पठिताः। पुच्छे तु धाय्यायाः पुरस्तादुपरिष्टाच्च द्विः पठिताः। एवं द्वादशधा आवृत्तिः। शरीरगताः 'इमे प्राणाः', च छिद्रभेदेन 'द्वादशविधाः', 'सप्त', शिरसि छिद्राणि,स्तनयोर्द्वे च्छिद्रे, नाभ्यां पायुगुदयोश्च त्रीणि, एतेषु द्वादशच्छिद्रेष्वेव सर्वे 'प्राणाः',प्राप्यन्ते। अत एव मन्त्रात्मना ते 'प्राणाः', 'संस्क्रियन्ते', यस्माद् द्वादशविधप्राणसाम्यं अत्र वशे समाप्तं, 'तस्मात्,' 'एनाम्' ऋचं, अत्र परित्यजेत्। न तूपरितनोरुभागे पठेत्॥

उदरभागमुक्त्वा शस्त्रपक्षिण ऊरुभागं विधत्ते। (८)"इन्द्राग्नी युवं सुन इत्यैन्द्राग्ना ऊरू ऊर्वष्ठीवे प्रतिष्ठे"(८) इति। इन्द्राग्नी युवं सुनः* इत्यादिसूक्तं द्वादशर्चं, तच्च शस्त्रपक्षिण ऊरुत्वेन पठनीयम्। अस्मिन् सूक्ते याविन्द्राग्नी प्रतीयेते,तयोः सम्बन्धिनी पक्षिण 'ऊरू'। इन्द्राग्नी वै देवानामोजिष्ठौ बलिष्ठाविति तयोः प्रबलत्वश्रवणात् ऊर्वोश्च गमनादिव्यवहारहेतुत्वेन प्रबलत्वात् तदेवोत्तरेण पदद्वयेन स्पष्टीक्रियते। 'ऊर्वष्ठीवे' विस्तीर्णे ऊरुमूले, 'प्रतिष्ठे' प्रतिष्ठाहेतू, पक्षिणो ह्यूरुमूलबलेन भूमौ दृढं प्रतिष्ठिताः सन्तः पश्चादुत्पतन्ति॥

सूक्तगतास्वृक्षु पादसङ्ख्यां प्रशंसति। (९)"ताः षट्पदा भवन्ति प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति"(९)

* ऋग्वेदे म० ८०, सू० ४०, ऋ०१।

इति। अस्मिन् सूक्ते द्वितीयस्यामन्तिमायां च विशेषस्य वक्ष्यमाणत्वात् या अवसिष्टा दशर्चः सन्ति, 'ताः', प्रत्येकं 'षट्पदा भवन्ति'। तच्च प्रतिष्ठार्थमेव सम्पद्यते। तत् कथमिति तदुच्यते, लोके हि मनुष्यः पादद्वयेन भूमौ प्रतितिष्ठति 'पशवः', 'चतुष्पादाः' वर्त्तन्ते। एवं सत्यत्रापि 'तत्' तेन पादषट्कपाठेन, पादद्वयोपेतं 'यजमानं', 'चतुष्पात्सु पशुषु', प्रतिष्ठितं करोति ॥

द्वितीयस्यां न हि वां वव्रयामहे * इत्येतस्यामृचि किञ्चिद् विशेषं विधत्ते। (१०)"द्वितीया सप्तपदा भवति तां गायत्रीं चानुष्टुभं च करोति ब्रह्म वै गायत्री वागनुष्टुब् ब्रह्मणैव तद्वाचं सन्दधाति"(१०) इति। द्वितीयस्या ऋचः सम्बन्धिषु त्रिभिः पादैः 'गायत्रीं', कृत्वा शंसेत्। पादद्वयेऽवसाय तृतीयपादे प्रणवः। एतद्गायत्रीकरणं। अवशिष्टेन पादचतुष्टयेन 'अनुष्टुभं', कृत्वा शंसेत्। पादद्वये अवसाय चतुर्थपादे प्रणवप्रयोगोऽनुष्टुप्करणम्। तत्र या पादत्रयनिष्पाद्या 'गायत्री', सा 'ब्रह्म', एव तत्सवितुर्वरेण्यमित्यनया गायत्र्या परब्रह्मणः प्रतिपादितत्वात्। या तु पादचतुष्टयसम्पन्ना 'अनुष्टुप्', सा 'वाग्रूपा। वाग्विशेषाणां मध्ये प्रशस्तत्वात्। 'तत्' तेन गायत्र्यनुष्टुभोः सम्पादनेन, पर'ब्रह्मणैव', सह 'वाग्देवतां संयोजितवान् भवति ॥

चरमायामिवेन्द्राग्निभ्यामित्येतस्यामृचि † शंसनप्रकारं विधत्ते। (११)"त्रिष्टुभमन्ततः शंसति वीर्यं वै त्रिष्टुब् वीर्येणैव तत्पशून् परिगच्छति तस्मात् पशवो वीर्यमनूपतिष्ठन्त

---

* ऋग्वेदे म०८, सू०४०, ऋ०२।

† ऋग्वेदे म०८, सू०४१, ऋ०११।

ईर्यतां चैवाभ्युत्थानं च"(११)। 'अन्ततः' सूक्तस्यावसाने, या त्रिष्टुप्छन्दस्का आम्नाता तां 'त्रिष्टुभं', समयेनैव शंसेत्। एकस्मिन् पादे अवसायोत्तरस्मिन् पादे प्रणवप्रयोगः पादशंसनं। तदेव 'त्रिष्टुप्समयः'। त्रिष्टुभो वीर्य्यहेतुत्वात् वीर्यरूपत्वम्। 'तत्' तेन त्रिष्टुप्शंसनेन, अयं पुरुषः स्वसामर्थ्येन एव 'पशून्', 'परितः प्राप्नोति'। यस्मादेवं 'तस्मात्', लोके 'पशवः', 'वीर्यमनु उपतिष्ठन्ते' वाक्पारुष्येण दण्डपारुष्येण वा गोपालवीर्य्यमवधार्य्य प्रत्याव्रजन्ति, तथा तद्वीर्यवशात् 'ईर्यतां' प्रेरणीयतां, च शयनात् अभ्युत्थानताञ्च* प्राप्नुवन्त्येवेति शेषः॥ १॥

(१)प्र वो महे मन्दमानायान्धस इत्यैन्द्रे निष्केवल्ये निविदन्दधाति प्रत्यक्षाद्वैनेव तदात्मन्वीर्यन्धत्ते(१) (२)तास्त्रिष्टुब्जगत्यो भवन्ति(२) (३)तदाहुरथ कस्मात्त्रिष्टुब्जगतीषु निविदन्दधातीति न ह वा एतस्याह्न एकं छन्दो निविदन्दाधार न विव्याचेति तस्मात्त्रिष्टुब्जगतीषु निविदन्दधाति(३) (४)तदेतदह्नस्त्रिनिवित्कं विद्यादग्नौ निविद्वालखिल्या निविन्निविदेव निविदेवमेनत्त्रिनिवित्कं विद्यात्(४) (५)अथ सूक्ते वनेन वा योन्यधायि चाकन्यो जात एव प्रथमो मनस्वानिति तयोरस्त्यन्ने समस्य यदसन्म-

* अभ्युत्थानञ्चेति क०, ग० च।

नीषा इत्यऽन्नाद्यस्यावरुद्ध्यै(५) (६)अथावपनमेते अन्तरे-णैन्द्रीणां दशतीनां त्रिष्टुब्जगतीनां बृहतीसम्पन्नानां यावतीरावपन्ते तावन्त्यूर्ध्वमायुषो वर्षाणि जीवन्त्येते न हैवावपनेनायुराप्यते(६) (७)प्रजां मे पशवोर्जऽयन्निति त्वेव सजनीयमनुशंसति(७) (८)तार्क्ष्यं शंसति स्वस्त्ययनं वै तार्क्ष्यः स्वस्तितायै स्वस्त्ययनमेव तत्कुरुते(८) (९)एक-पदां शंसत्येकधेदं सर्वमसानीत्यथो सर्वां छन्दस्कृतिमा-प्नवानीति(९) (१०)इन्द्रं विश्वा अवीवृधन्निति पदानुषङ्गा-स्ताः सप्तानुषजति सप्त वै शीर्षन् प्राणाः शीर्षन्नेव तत् प्राणान्दधात्यष्टमीन्नानुषजति वागष्टमी नेन्मे वाक् प्राणैर-नुषक्ता सदिति तस्मादु सा वाक् समानायतना प्राणैः सत्यननुषक्ता(१०) (११)विराजः शंसत्यन्नं वै विराजोऽन्ना-द्यस्यावरुद्ध्यै(११) (१२)वासिष्ठेन परिदधाति वसिष्ठोऽसा-नि(१२) (१३)एष स्तोमो मह उग्राय वा ह इति महद्वत्या रूपसमृद्धया(१३) (१४)धुरीवात्यो न वा जयन्नधायीत्यन्तो वै धूरन्त एतदह्नस्तस्याह्नो रूपं(१४) (१५)इन्द्रत्वायमर्क ईट्टे वसूनामित्यर्कवत्या रूपसमृद्धया(१५) (१६)दिवीव द्यामधि नः श्रोमतन्धा इति यत्र ह क्व च ब्राह्मण्या वागु-द्यते तदास्य कीर्त्तिर्भवति यत्रैवं विद्वानेतया परिदधाति तस्मादेवं विद्वानेतयैव परिदध्यात्(१६) ॥ २ ॥

तस्मिन् एव जरुभागे सूक्तान्तरं विधत्ते। (१)"प्र वो महे मन्दमानायान्धस इत्यैन्द्रे निष्केवल्ये निविदं दधाति प्रत्यक्षा-देव तदात्मन् वीर्य्यं धत्ते"(१) इति। 'प्र वो महे', इत्यादिकं सप्तर्चं सूक्तं*। तच्च इन्द्रदेवताकं। तद्यदा 'निष्केवल्यशस्त्रे पठ्यते,† तदानीं 'निवित्सञ्ज्ञकं पदविशेषजातं तत्र प्रक्षि-पेत्। इन्द्रो देवः सोमं पिबत्वित्यादिकं निवित्पदजातं। तच्च निवित्सञ्ज्ञके ग्रन्थे‡ पठितम्। सूक्तगतासु सप्तस्वृक्षु चतस्रः पठित्वा, तिस्रोऽवशेष्य, मध्ये 'निविदं', दध्यात्। 'तत्' तेन निवित्प्रक्षेपेण, 'प्रत्यक्षादेव' मुख्यमेव, 'वीर्य्यं', आत्मत्वात् आत्मनि शस्त्ररूपे पक्षिणि सम्पादयति॥

तत्सूक्तगतानामृचां छन्दोद्वयं दर्शयति। (२)"तास्त्रिष्टुब्-जगत्यो भवन्ति"(२) इति। आदौ पञ्च 'त्रिष्टुभः, उत्तरे द्वे 'जगत्यौ, यद्वा प्रथमा सप्तमी च उभे 'जगत्यौ, अवशिष्टाः 'त्रिष्टुभः। तदाह अनुक्रमणिकाकारः। प्र वो महे सप्त द्विजगत्याद्य-न्तमिति॥

तासु छन्दोद्वयविशिष्टास्वृक्षु निवित्प्रक्षेपं प्रश्नोत्तराभ्यां विशदयति। (३)"तदाहुरथ कस्मात् त्रिष्टुब्जगतीषु निविदं दधातीति न ह वा एतस्यान्य एकं छन्दो निविदन्दाधार न विव्याचेति तस्मात् त्रिष्टुब्जगतीषु निविदं दधाति"(३) इति। तत्र निवित्प्रक्षेपं केचित् पृच्छन्ति। इदं मध्यन्दिनसवनं त्रैष्टु-

---

* ऋग्वेदे म० १०, सू० ५०, ऋ० १।

† निष्केवल्यशस्त्रपठ्यमिति क०।

‡ सङ्के इति क०, ग० च।

भमतोऽग्निष्टोमरूपप्रकृतिवत् त्रिष्टुप्स्वेव निवित्प्रक्षेपो युक्तः। 'अथ' तथा सति, तन्नियमं परित्यज्य 'कस्मात्', कारणात्, मिश्रासु 'त्रिष्टुब्जगतीषु', 'निविदं', प्रक्षिपतीति। तस्य प्रश्नस्य 'न ह वा', इत्यभिज्ञस्य उत्तरम्। प्रकृतौ तथैवास्तु। 'एतस्य' महाव्रताख्यस्य, 'अह्नः', 'निविदमेकं छन्दः', धारयितुं नैव समर्थं। यदि कथञ्चिद्धारयितुं प्रवर्त्तेत तथापि 'न विव्याच' नैव व्याप्तुं शक्नोति, सा वा शक्तिः शास्त्रवेद्या 'तस्मात्', एकस्य च्छन्दसोऽशक्तत्वात् छन्दोद्वयमिश्रास्वृक्षु 'निविदं', दध्यात्॥

तदेतन्निविद्धानं प्रशंसति। (४)"तदेतदहस्त्रिनिवित्कं विद्याद्वशो निविद्वालखिल्या निविन्निविदेव निविदेवमेतत्त्रिनिवित्कं विद्यात्"(४) इति। त्वा वतः पुरूवसवित्यादिको वश-नामकः शस्त्रपक्षिण उदरभागः पूर्वमुक्तः। तथा बार्हतीतृचाशीती षड् बालखिल्यानां सूक्तानीति पञ्चमे शौनकेन यदुक्तं तत्र-त्या ऋचः 'बालखिल्यानामकाः वशो बालखिल्याश्चेत्येते उभे अप्यौपचारिके 'निविदौ। या तु इन्द्रो देवः सोमं पिबत्वित्यादि 'निवित्', अस्ति, सा मुख्यैव 'निवित्'। तत्र वशस्योच्चावचच्छ-न्दस्कत्वमुपचारबीजं। बालखिल्यानां च बृहतीसतोबृहती-भावेन विषमत्वेन निवित्त्वोपचारः। 'एवं', 'एतत्' महाव्रताख्यं, 'अहः', तिसृभिर्निविद्भिरुपेतं 'विद्यात्'॥

प्र वो मह इत्यादिसूक्तस्यानन्तरं पुनः सूक्तद्वयं विधत्ते। (५)"अथ सूक्ते वनेन वा योन्यधायि चाकन् यो जात एव प्रथमो मनस्वानिति तयोरस्त्यन्ने समस्य यदसक्नीमा इत्यन्नाद्यस्याव-

रुध्यै'(५) इति। वने न वा यो नीत्येतदृष्टर्च्चं * सूक्तं। यो जात एवेति† पञ्चदशर्च्चं सूक्तं। तयोर्मध्ये वनेन वा योन्यधायि चाकन्नित्येतस्य सूक्तस्य चतुर्थ्यामृचि अन्ने समस्य यदसन्मनीषा इत्येतादृशश्चतुर्थः पादोऽस्ति, तस्यायमर्थः। 'यत्' यस्मात्, कारणात्, 'मनीषाः' प्राणिनां बुद्धीः, 'अन्ने' भोज्ये वस्तुनि, 'समस्य' संयोज्य 'असत्' अस्ति, देवो वर्त्तते, तस्माद-न्नाद्यं सम्पाद्यत इति शेषः। एतस्य पादस्य विद्यमानत्वादिदं सूक्तद्वयं 'अन्नाद्यप्राप्त्यै' सम्पद्यते॥

एतयोः सूक्तयोः शंसनीययोर्मध्ये कासाञ्चिदृचां प्रक्षेपं विधत्ते। (६)"अथावपनमेते अन्तरेणैन्द्रीणां दशतीनां त्रिष्टुब्जगतीनां बृहतीसम्पन्नानां यावतीरावपन्ते तावन्त्यूर्ध्वमायुषो वर्षाणि जीवन्त्येतेन हैवावपनेनायुराप्यते"(६) इति। अथ पूर्वोक्तयोः सूक्तयोरेकस्य शंसनानन्तरं 'एते' 'अन्तरेण' एतयोर्वनेन वा यो, यो जात एव इति सूक्तयोर्मध्ये, कासाञ्चिदिन्द्रदेवताकानां 'दशतीनां', दशसहस्रसङ्ख्याकायां संहितायामुक्तानां, 'त्रिष्टुज्-गत्याख्यच्छन्दोद्वययुक्तानां, स्वबुद्धिकौशलेन बृहतीत्वमापादि-तानामृचां मध्ये 'यावतीः', ऋचः 'आवपेत्। 'तावन्ति', 'वर्षाणि', ऊर्ध्वं शताच्छतसंवत्सरात् 'आयुष ऊर्ध्वं', यजमानाः 'जीवन्ति'। 'एतेन', ऋगावपनेनैव,' अवश्यं 'आयुः', प्राप्यते'। अत्र बुद्धि-कौशलेन त्रिष्टुभां जगतीनाञ्च कथं बृहतीत्वसम्पत्तिरिति चेत् तदुच्यते। तिसृषु त्रिष्टुप्सु बृहतीद्वये सम्पादिते सति चतु-

* ऋग्वेदे म०१०, सू०२९, ऋ०१।

† ऋग्वेदे म०१, सू०१२, ऋ०१।

विंशत्यक्षराण्यतिरिच्यन्ते। चतसृषु जगतीषु बृहतीचतुष्टये सम्पादिते सति अष्टाचत्वारिंशदक्षराण्यतिरिच्यन्ते। तान्यतिरिक्तानि सर्वाणि द्विसप्ततिः। तत्र बृहतीद्वयमुत्पद्यते। ततः सप्तसृषु नवसङ्ख्यानां बृहतीसम्पत्तिरिति द्रष्टव्यं॥

उक्तादावपनादूर्ध्वं यो जात इत्यस्य सजनीयसूक्तस्य शंसने फलविशेषं दर्शयति। (७)"प्रजां मे पशवोऽर्जयन्निति त्वेव सजनीयमनुशंसति" (७)इति। मदीयां पुत्रादिरूपां 'प्रजां', गवाश्वादयः 'पशवः', 'अर्जयन्' प्राप्नुवन्; 'इति', अभिप्रेत्य, आवपनं अनु सजनीयसूक्तं शंसेत्॥

अथ त्यमू षु वाजिनमित्येतत् सूक्तं* तच्चरूपं विधत्ते। (८)"तार्क्ष्यं शंसति स्वस्त्ययनं वै तार्क्ष्यः स्वस्तितायै स्वस्त्ययनमेव तत् कुरुते"(८) इति। तार्क्ष्यो गरुडः स एव देवो यस्य त्यमू ष्वित्यादिसूक्तस्य तत् सूक्तं 'तार्क्ष्यं', शंसेत्। तस्मिन् सूक्ते प्रतिपाद्यो यः 'तार्क्ष्यः', सोऽयं 'स्वस्त्ययनं वै' क्षेमप्राप्तिमेव, सम्पादयतीति शेषः। अतस्तत् सूक्तं 'स्वस्तितायै' क्षेमप्राप्त्यै, सम्पद्यते। तस्मादयं होता 'तत्' तेन शंसनेन, 'स्वस्त्ययनमेव', क्षेमप्राप्तिमेव, 'कुरुते'॥

तत ऊर्ध्वं इन्द्रो विश्वं विराजतीत्येतस्या एकपदाया ऋचः शंसनं विधत्ते। (९)"एकपदां शंसत्येकधेदं सर्वमसानीत्यथो सर्वां छन्दस्कृतिमाप्नवानि"(९) इति। एकेनैव प्रयत्नेन 'इदं', 'सर्वं', 'असानि' प्राप्तव्यं फलमाप्नवानि, 'इति', अभिप्रेत्य, एतां 'एकपदां', शंसेत्। अपि च 'सर्वां छन्दस्कृतिं' सर्वमपि छन्दसां

---

* ऋग्वेदे म०१०, सू०१७८, ऋ०१।

सम्पादनं, प्राप्नवानि', इत्येतां शंसेत्। न ह्येकपदाया अर्वाचीनं किञ्चिच्छन्दोऽस्ति। उत्तरेषु द्विपदादिषु सर्वेष्वपि छन्दःसु एकपदं छन्दोऽनुगच्छति। तस्मात्तच्छंसनेन सर्वच्छन्दःसम्पत्तिः ॥

अथेन्द्रं विश्वा अवीवृधन्नित्यादिकमष्टर्चं सूक्तं* प्रयोगप्रकारविशेषयुक्तं विधत्ते। (१०)"इन्द्रं विश्वा अवीवृधन्निति पदानुषङ्गास्ताः सप्तानुषजति सप्त वै शीर्षन् प्राणाः शीर्षन्नेव तत् प्राणान्दधात्यष्टमीन्नानुषजति वागष्टमी नेन्मे वाक् प्राणैरनुषक्ता सदिति तस्मादु सा वाक् समानायतना प्राणैः सत्यननुषक्ता"(१०) इति। 'इन्द्रं विश्वाः', इत्यस्मिन्नष्टर्चे सूक्ते पादानां परस्परमनुषङ्गः कर्त्तव्यः। तत्र सूक्तस्य यः प्रथमोऽर्द्धर्चो यश्चान्तिमस्तावुभावर्द्धर्चौ यथाध्ययनमेव पठनीयौ न त्वनुषञ्जनीयौ। तयोर्मध्ये ये चतुर्दशार्द्धर्चाः, तेष्वेकैकपदान्तरितत्वेन परस्परानुषङ्गः कर्त्तव्यः। तद्यथा प्रथमायामृचि यश्चतुर्थः पादः सोऽयं द्वितीयस्यामृचि द्वितीयपादेन संयोजनीयः। एतेनार्द्धर्चद्वयेन ऋगेका सम्पद्यते। अनेनैव प्रकारेण सूक्तस्याद्यन्तयोरर्द्धर्चयोर्मध्यगताः 'ताः', 'सप्त', ऋचः, परस्परमनुषजेत्। शिरसि छिद्रगताः 'प्राणाः', 'सप्त', एव 'तत्' तेन सप्तानामनुषङ्गेण, शिरस्येव 'प्राणान्', सम्पादयति। 'अष्टमी'शब्देन सूक्तस्य चरमार्द्ध एको विवक्षितः, तस्यानुषङ्गो नास्ति, उपरितनपादस्य कस्याप्यभावात्। अत एव शौनकः पञ्चमे प्रथमायाः पूर्वमर्द्धर्चं शस्त्वेत्यादिना प्रकृत्या शेष इत्यन्तेन ग्रन्थेन सूक्तगतयोराद्यन्तयोरर्द्धर्चयोर्यथापाठमभिधाय मध्यगतानामेव चतुर्द्दशानामर्द्धर्चानां

* ऋग्वेदे म० १, सू० ११, ऋ० १।

पादव्यतिषङ्गमुक्तवान्। केनाभिप्रायेणाष्टम्या व्यतिषङ्गो नास्तीति चेत्तदुच्यते। येयमृक् 'अष्टमी', सा 'वाग्रूपा। अत एव वाजसनेयिनश्चक्षुरादीन्द्रियेषु गौतमभरद्वाजाद्यृषिध्यातमधीयाना वागष्टमी ब्रह्मणा संविदानेत्येव वाचोऽष्टमीत्वमामनन्ति। ईदृक् 'अष्टमी', मदीया, 'वाक्', 'प्राणैः', अन्यैः, 'अनुषक्ता सत्' व्यतिषक्ता भवेत्, 'इति', भीत्या तामष्टमीन्नानुषजेत्। 'नेत्', इति निपातो भयद्योतनार्थः। यस्मादेवमष्टमीन्नानुषजति, 'तस्मात्' एव कारणात्, 'सा' अष्टमी, 'वाक्', अन्यैः 'प्राणैः' जिह्वात्वगादिभिः, सह 'समानायतना' एकाधारा, 'सती', अपि स्वयं 'अननुषक्ता' तैः सह नैव सङ्कीर्णा, किन्तु विविक्तैव सती शब्दमुच्चारयति॥

अथ पिबा सोममिन्द्र* इत्यादिकानां विराट्छन्दस्कानां शंसनं विधत्ते। (११)"विराजः शंसत्यन्नं वै विराजो-ऽन्नाद्यस्यावरुध्यै" इति (११)। 'विराट्छन्दसः अन्नहेतुत्वात् 'अन्नत्वं। तस्मात्तच्छंसनमन्नप्राप्तये सम्पद्यते। यद्यपि पिबा सोममिन्द्रेत्यादिकं नवर्चं सूक्तं तथाप्यन्तिमास्तिस्रः परित्यज्य प्राचीनाः षडेव पठेत्। अत एव शौनकः पिबा सोममिन्द्र मदन्तु त्वा† इति षट् इत्याह॥

तत ऊर्ध्वं वसिष्ठदृष्टेन योनिष्ट इन्द्रसदने अकारि‡ इत्येतत्-सूक्तेन निष्केवल्यशस्त्रस्य समापनं विधत्ते। (१२)"वासिष्ठेन

* ऋग्वेदे म०७, सू०२२, ऋ०१।

† ऋग्वेदे म०१, सू०१३४, ऋ०१।

‡ ऋग्वेदे म०७, सू०२४ ऋ०१।

परिदधाति वसिष्ठोऽसानोति"(१२) इति। अहं 'वसिष्ठः' सर्वेषामतिशयेन निवासहेतुः', भवानि, 'इति', अभिप्रेत्य 'वासिष्ठसूक्तेन परिधानं कुर्यात्। परिधानं समापनं॥

तत्र कञ्चिद्विशेषं विधत्ते। (१३)"एष स्तोमो मह उग्राय वाह* इति महद्वत्या रूपसमृद्धया(१३)" इति। योनिष्ट इत्यादिकं षडृचं सूक्तं† तत्र षष्ठ्या परिधानं प्राप्तन्तदपोह्य 'एषस्तोमः', इत्यनया पञ्चम्या परिदध्यात्। सा च 'महद्वती तत्र 'मह उग्राय', इति पठितत्वात्। तस्मादियं 'रूपसमृद्धेति तया परिधानं न्याय्यं। एतच्च शौनको विस्पष्टं दर्शयति। योनिष्ट इन्द्र सदने अकारीत्येतस्य चतस्रः शस्त्वोत्तमामुपसन्तत्योपोत्तमया परिदधातीति॥

तस्याः परिधानीयायाः द्वितीयपादे धुरीतिपदं व्याचष्टे। (१४)"धुरीवात्यो न वाजयन्नधायीत्यन्तो वै धूरन्त एतदहरेतस्याह्नो रूपं"(१४) इति। येयं 'धूः', सेयं रथस्य 'अन्तः' अश्वयोजनस्थानं। अश्वो हि धूःशब्दवाच्ये रथस्याग्रभागस्थे युगे योज्यते। 'एतत्' महाव्रताख्यं, 'अहः', च संवत्सरसत्रस्य 'अन्तः'। एतस्मादह्न ऊर्ध्वं उदयनीयातिरात्रेणाह्ना समाप्यमानत्वात्। धुरस्याह्नश्चान्तत्वसाम्यात् धूःशब्दयुक्तो मन्त्रः 'एतस्याह्नः', स्वरूपं'॥

तृतीयपादगतमर्कशब्दं प्रशंसति। (१५)"इन्द्र त्वायमर्क इट्टे वसूनां इत्यर्कवत्या रूपसमृद्धया"(१५) इति। अर्चनवाचको-

---

* ऋग्वेदे म०७, सू०२४, ऋ०५।

† ऋग्वेदे म०७, सू०२४, ऋ०१।

ऽयं 'अर्कशब्दस्तच्छब्दयुक्तत्वादियमृक् 'रूपसमृद्धा, ततस्तया परिधानं युक्तं ॥

चतुर्थपादं प्रशंसति। (१६)"दिवीव द्यामधि नः श्रोमतन्धा इति यत्र ह क्व च ब्राह्मण्या वागुद्यते तदास्य कीर्तिर्भवति यत्रैवं विद्वानेतया परिदधाति तस्मादेवं विद्वानेतयैव परिदध्यात्"(१६) इति। हे देव 'नः' अस्माकं, 'श्रोमतं' श्रवणीयां, कीर्त्तिं, 'दिवीव' द्युलोके यथा, सम्पादयसि, तथा 'द्यामधि' द्युलोकस्योपरिमहर्लोकादावपि, 'धाः', निधेहि, सम्पादयेत्यर्थः। एतस्य पादस्य पाठेन 'यत्र क्व' अपि वेदशास्त्रविद्बहुले देशे, 'ब्राह्मण्या वागुद्यते' वेदसम्बन्धिवाक्यं पठ्यते, तत्र 'अस्य' यजमानस्य, 'कीर्त्तिः', प्रसरति। 'यत्र' यस्मिन्महाव्रते, यः 'एवं विद्वान्' कीर्त्तिहेतुमृचं विद्वान्, 'एतया' ऋचा, परिधानं करोति, तस्मिन्महाव्रते तस्य यजमानस्य 'कीर्त्तिर्भवति', इति पूर्ववत्रान्वयः। यस्मादेतस्या ऋचो महिमा भूयान् 'तस्मादेवं', 'विद्वान्' मन्त्रमहिमानं विद्वान्पुमान्, *'एतयैव', ऋचा, 'परिदध्यात्' निष्केवल्यं समापयेत् ॥ २ ॥

(१)तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरावैकाहिकौ रूपसमृद्धौ(१) (२)वज्रं वा

---

* जानन् पुमानिति क०।

एतस्मिन्नहनि किञ्च किञ्च वारणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत्प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद येषाञ्चैवं विद्वानेतद्धोता शंसति(२) (३)तद्देवस्य सवितुर्वार्यं महदिति सावित्रमन्तो वै महदन्त एतदहरेतस्याह्नो रूपं(३) (४)कतरा पूर्वा कतरा परायोरिति द्यावापृथिवीयं समानोदर्कं समानोदर्कं वा एतदहरेतस्याह्नो रूपं(४) (५)अनश्वो जातो अनभीशुरुक्थ्य इत्यार्भवं(५) (६)रथस्त्रिचक्र इति यदेतत्त्रिवत्तदन्तो वै त्रिवदन्त एतदहरेतस्याह्नो रूपं(६) (७)अस्य वामस्य पलितस्य होतुरिति वैश्वदेवं बहुरूपं बहुरूपं वा एतदहरेतस्याह्नो रूपं(७)(८)गौरीर्मिमाय सलिलानि तक्षतीत्येतदन्त(८) (९)आ नो भद्राः क्रतवो यन्तु विश्वत इति वैश्वदेवं निविद्धानमैकाहिकं रूपसमृद्धं(९) (१०)बहु वा एतस्मिन्नहनि किञ्च किञ्च वारणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत् प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति(१०) (११)वैश्वानराय धिषणामृतावृध इत्याग्निमारुतस्य प्रतिपदन्तो वै धिषणान्त एतदहरेतस्याह्नो रूपं(११) (१२)प्रयज्यवो मरुतो भ्राजदृष्टय इति मारुतं समानो-

दकँ समानोदकँ वा एतदहरेतस्याह्नो रूपं(१२) (१३)जातवेदसे सुनवाम सोममिति जातवेदस्यां पुरस्तात् सूक्तस्य शंसति स्वस्त्ययनं वै जातवेदस्याः स्वस्तितायै स्वस्त्ययनमेव तत् कुरुते(१३) (१४)इमं स्तोममर्हते जातवेदस इति जातवेदस्यं समानोदर्कं समानोदर्कं वा एतदहरेतस्याह्नो रूपमह्नो रूपम्(१४) ॥ ३ ॥

इत्यैतरेयप्रथमारण्यकं समाप्तम् ॥

---

ऐतरेयारण्यकभाष्यम् ।

माध्यन्दिने सवने निष्केवल्यं समापितं। तृतीयसवने प्रस्तव्यस्य वैश्वदेवशस्त्रस्य तृचद्वयं विधत्ते। (१)"तत्सवितुर्वृणीमहे * अद्या नो देव सवितरिति† वैश्वदेवस्य प्रतिपदनुचरावैकाह्निकौ रूपसमृद्धौ"(१) इति। प्रतिपद्यते प्रारभ्यते शस्त्रं येन तृचेन सोऽयं 'प्रतिपत्', स च 'तत् सवितुः', इत्यादिकस्तृचः, तं तृचमनुचरति तदनन्तरमेव पठ्यते इति 'अनुचरः', स च 'अद्या नो देव', इत्यादिकस्तृचः, तावेतौ 'वैश्वदेवशस्त्रस्य', 'प्रतिपदनुचरौ'।

---

* ऋग्वेदे म०५, सू०८२, ऋ०१। † ऋग्वेदे म०५, सू०८२, ऋ०४।

महाव्रतस्य प्रकृतिभूते विश्वजिदाख्य एकाहे तस्यापि मूल-प्रकृतिभूते अग्निष्टोमाख्य एकाहे भवत इति 'ऐकाहिकौ'। अतएव स्वस्वरूपेण 'समृद्धौ', तस्मात्तौ तृचौ कर्त्तव्यौ ॥

अनिष्टशान्तिहेतुत्वेन तृचद्वयं प्रशंसति। (२)"बहु वा एतस्मिन्नहनि किञ्च किञ्च वारणं क्रियते शान्त्या एव शान्तिं प्रतिष्ठैकाहः शान्त्यामेव तत् प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद येषाञ्चैव विद्वानेतद्धोता शंसति"(२) इति। पूर्ववद्व्याख्येयं ॥

प्रतिपदनुचरयोरूर्ध्वमेकं सूक्तं विधत्ते। (३)"तद्देवस्य सवितुर्वार्यं महदिति सावित्रमन्तो वै महदन्त एतदहरेतस्याह्नो रूपं"(३) इति। 'तद्देवस्य', इत्यादिकं * सप्तर्चं सवितृदेवताकं सूक्तं। 'सवितुर्देवस्य', सम्बन्धि, 'वार्यं' वरणीयं,† 'तत्' तेजः, 'महत्' प्रौढं। अस्मिन् पादे यत् 'महत्', इत्युक्तं तत् 'अन्तो वै' प्रार्थनीयस्य सर्वस्याप्यवसानभूमिः, न हि महत्त्वादूर्ध्वं किञ्चित् प्रार्थनीयमस्ति। 'एतत्' महाव्रताख्यमपि, 'अहः', संवत्सरसत्रस्य 'अन्तः'। अतोऽन्तत्वसाम्यादिदं सूक्तं 'एतस्याह्नः', स्वरूपं ॥

सूक्तान्तरं विधत्ते। (४)"कतरा पूर्वा कतरा परायोरिति द्यावापृथिवीयं समानोदर्कं समानोदर्कं वा एतदहरेतस्याह्नो रूपं"(४) इति। 'कतरा', इत्यादिकमेकादशर्चं सूक्तं‡

---

* ऋग्वेदे म०४, सू०५३, ऋ०१।           ‡ ऋग्वेदे म०१, सू०१८५, ऋ०१।

† सर्वैर्वरणीयमिति क०, ग० च।

'द्यावापृथिवीदेवताकं शंसनीयं । तच्च 'समानोदर्कं' उदर्कः अन्तः समान एकविधः अन्ते यस्य सूक्तस्य तत् 'समानोदर्कं' । तस्मिन् हि सूक्ते बहुष्वृक्षु द्यावा रक्षतं पृथिवी नो अभ्वादित्ययमेव चतुर्थः पादःपठितः । अतोऽन्त एकविधः । 'एतत् महाव्रताख्यं', 'अहः', च 'समानोदर्कं', एव । अत्रोदर्कं उत्तरकाल एव भावि फलं । तच्च सर्वेषां समानं । सर्वेऽपि महाव्रतमनुष्ठाय ब्रह्म प्राप्नुवन्ति । अत एव शौनकेन ब्रह्म भवतीत्युक्तं । एवं च सति समानोदर्कत्वसाम्यादेतत् सूक्तं 'एतस्याह्नः', स्वरूपं ॥

सूक्तान्तरं विधत्ते । (५)"अनश्वो जातो अनभीशुरुक्थ्य इत्याभवं"(५) इति । 'अनश्वः', इत्यादिकं* नवर्चम् ऋभुदेवताकं सूक्तं । द्यामृभवः पृथिवीं यच्च पुष्यथेति तत्र श्रूयमाणत्वात् । तत् सूक्तं शंसेत् ॥

तत्र प्रथमायामृचि द्वितीयपादे त्रिशब्दं प्रशंसति । (६)"रथ-स्त्रिचक्र इति यदेतत्त्रिवत्तदन्तो वै त्रिवदन्त एतदहरेतस्याह्नो रूपं"(६) इति । रथस्त्रिचक्रं परिवर्त्तते रज इति द्वितीयः पादः । तस्मिन् पादे 'यदेतत्', त्रिशब्दोपेतं रथविशेषणं 'त्रिचक्रः', इत्येतत्पदं विद्यते । त्रिशब्दोऽस्मिन् पदेऽस्तीति 'त्रिवत्', पदं, तच्च 'अन्तो वै' अवसानभूमिरेव । यस्य रथस्य चक्रद्वयन्न निर्वाहकं तस्य तृतीयच्चक्रं सम्पाद्यते । तावता निर्वाहो भवतीत्यभिप्रेत्य तत् त्रिवत्पदमन्त इत्युच्यते । 'अन्त एतदहः', इत्यादिकं पूर्ववत् ॥

सूक्तान्तरं विधत्ते । (७)"अस्य वामस्य पलितस्य होतुरिति

---

* ऋग्वेदे म०४, सू०३६, ऋ०१ ।

वैश्वदेवं बहुरूपं बहुरूपं वा एतदह्नस्तस्याङ्गो रूपम्"(७) इति। 'अस्य वामस्य', इत्यादिकं द्विपञ्चाशदृचं सूक्तं * विश्वेदेवदेवताकं पठेत्। तच्च 'बहुरूपं', बह्वर्थप्रतिपादकत्वात्। तच्चानुक्रमणिकायां दर्शितम्। अस्य द्विपञ्चाशदल्पस्तवस्त्वेतत्संशयोत्थापनप्रश्नप्रतिवाक्यान्यत्र प्रायेण ज्ञानमोक्षाक्षरप्रशंसा च इति। वैदिकमन्त्रादिना लौकिकनृत्यादिना च विहृतत्वात् 'अङ्गः', 'बहुरूपत्वम्। अतः साम्यादुभयोरानुरूप्यम्॥

यथोक्तस्य कृत्स्नस्य सूक्तस्य प्रसक्तिं वारयितुं विशिनष्टि। (८)"गौरीर्मिमाय सलिलानि तक्षती† इत्येतदन्तम्"(८) इति। ऋचां चत्वारिंशतमतिक्रम्यानन्तरभाविनी 'गौरीः', इत्यादिका, तदन्तम्, एव सूक्तभागं पठेत्। न तूपरितनं। अत एव शौनक एकचत्वारिंशतमित्याह॥

सूक्तान्तरं विधत्ते। (९)"आ नो भद्राः क्रतवो यन्तु विश्वत इति वैश्वदेवं निविद्धानमैकाहिकं रूपसमृद्धं"(९) इति। आ न इत्यादिकं विश्वेदेवदेवताकं दशर्चं सूक्तं ‡ पठेत्। अस्मिंश्च सूक्ते नवर्चः शस्त्वा दशमीमवशेष्य तन्मध्ये विश्वेदेवाः सोमस्य मत्सन् इत्यादीनि निवित्पदानि धीयन्ते प्रक्षिपन्ते। तस्मादेतत् 'निविद्धानं'। तच्च मूलप्रकृतावग्निष्टोमे एकाहे समुत्पन्नत्वात् 'ऐकाहिकं'। अत एव 'रूपसमृद्धम्'॥

अनिष्टशान्तिहेतुत्वेन § तत्सूक्तं प्रशंसति। (१०)"बहु वा

---

* ऋग्वेदे म०१, सू०१६४, ऋ०१।　　‡ ऋग्वेदे म०१, सू०८९, ऋ०१।

† ऋग्वेदे म०१, सू०१६४, ऋ०४१।　　§ अरिष्टशान्तिहेतुत्वेनेति क०, ग० च।

एतस्मिन्नहनि किञ्च किञ्च वारणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत् प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति"(१०) इति। पूर्ववद् व्याख्येयम् ॥

वैश्वदेवशस्त्रं परिसमाप्याग्निमारुतस्य प्रारम्भार्थं पञ्चदशर्चं सूक्तं विधत्ते। (११)"वैश्वानराय धिषणामृतावृधे* इत्याग्निमारुतस्य प्रतिपदन्तो वै धिषणान्त एतदहरेतस्याह्नो रूपं"(११) इति। अत्र या 'धिषणा' बुद्धिः, श्रूयते, सेयं 'अन्तो वै' पर्य्यवसानभूमिरेव। सर्वस्य व्यवहारस्य बुद्ध्यधीनत्वात्। 'अन्त एतदहः', इत्यादि पूर्ववत् ॥

सूक्तान्तरं दशर्चं मरुद्देवताकं विधत्ते। (१२)"प्रयज्यवो मरुतो भ्राजदृष्टय इति† मारुतं समानोदर्कं समानोदर्कं वा एतदहरेतस्याह्नो रूपं"(१२) इति। अस्मिन्नपि सूक्ते बहुष्वृक्षु शुभं यातामनु रथा अवृत्सतेत्यस्यैव चतुर्थपादस्य पठितत्वात् 'समानोदर्कत्वम्। अन्यत् पूर्ववत् ॥

अथ सूक्तात्मिकामेकामृचं विधत्ते। (१३)"जातवेदसे सुनवाम सोममितिǂ जातवेदस्यां पुरस्तात् सूक्तस्य शंसति स्वस्त्ययनं वै जातवेदस्या स्वस्तितायै स्वस्त्ययनमेव तत् कुरुते"(१३) इति। जातवेदोनामिका देवता यस्या ऋचः सा 'जातवेदस्या',

* ऋग्वेदे म०३, सू०२, ऋ०१। ǂ ऋग्वेदे म०१, सू०९९, ऋ०१।

† ऋग्वेदे म०५, सू०५५, ऋ०१।

तामृचं विधास्यमानस्य इमं स्तोममित्यादि'सूक्तस्य', 'पुरस्तात्,' शंसेत्। सा च 'स्वस्त्ययनं' क्षेमप्राप्तिहेतुः। अतः 'स्वस्तितायै' क्षेमप्राप्तये समर्था। 'तत्' तेन ऋक्पाठेन, क्षेमप्राप्तिं 'एव', सम्पादयति॥

सूक्तान्तरं विधत्ते। (१४)"इमं स्तोममर्हते जातवेदस इति जातवेदस्यं समानोदर्कं समानोदर्कं वा एतदहरेत-स्याह्नो रूपमह्नो रूपं"(१४) इति। 'इमं', इत्यादिकं षोड़शर्चं सूक्तं* जातवेदोदेवताकं पठेत्। तस्मिन् सूक्ते बहुषु ऋक्षु अग्ने सख्ये मारिषामा वयं तवेतीत्यस्यैव चतुर्थपादस्य पठित-त्वात् 'समानोदर्कत्वं। अन्यत् पूर्ववद् व्याख्येयं। द्विरभ्यासोऽध्या-यपरिसमाप्त्यर्थः कर्म्मकाण्डसमाप्त्यर्थश्च॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवी-
रवुक्कभूपालसाम्राज्यधुरन्धरसायणामात्यकृतौ माधवीये
वेदार्थप्रकाशे ऐतरेयारण्यके प्रथमारण्यके पञ्चमा-
ध्याये तृतीयः खण्डः समाप्तश्चाध्यायः॥

समाप्तञ्च प्रथमारण्यकम्।

समाप्तञ्च कर्मकाण्डम्॥

---

* ऋग्वेद म०१, सू०९४, ऋ०१।

# ऐतरेयारण्यकम् ।

द्वितीयम् ।

हरिः ओम् ।

(१)एष पन्था एतत् कर्मैतद् ब्रह्मैतत् सत्यं(१) (२)तस्मान्न प्रमाद्येत्तन्नातीयात्(२) (३)न ह्यत्यायन् पूर्वे येऽत्यायंस्ते पराबभूवुः(३) (४)तदुक्तमृषिणा प्रजा ह तिस्रो अत्यायमीयुर्न्यऽन्या अर्कमभितो विविश्र बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आविवेशेति(४) (५)प्रजा ह तिस्रः आत्यायमीयुरिति या वै ता इमाः प्रजास्तिस्रः अत्यायमायंस्तानीमानि वयांसि वङ्गाऽवगधाश्चेरपादाः(५) (६)न्यऽन्या अर्कमभितो विविश्र इति ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निं(६) (७)बृहद्ध तस्थौ भुवनेष्वन्तरित्यद उ एव बृहद्भुवनेष्वन्तरसावादित्यः(७) (८)पवमानो हरित आविवेशेति वायुरेव पवमानो दिशो हरित आविष्टः(८) ॥ १ ॥

# ऐतरेयारण्यकभाष्यम्।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं॥ १॥
प्रथमारण्यके कर्म्म महाव्रतमुदीरितं।
संवत्सराख्यसत्रस्य शेषः पूर्णोऽत्र तावता॥ २॥
तदीया विकृतिः सर्व्वा प्रोक्तैवेति मनीषया।
कर्म्मकाण्डं समापय्य वेदो ज्ञानं विवक्षति॥ ३॥
आरण्यकं द्वितीयं यत्तृतीयञ्च तदात्मकं।
ज्ञानकाण्डस्ततः सोपनिषदित्यभिधीयते॥ ४॥
करोम्युपनिषद्व्याख्यां शङ्कराचार्य्यवर्त्मना।
आचार्य्यस्य प्रसादेन संसारान् मुच्यतेऽबुधैः॥ ५॥

उपनिषच्छब्दो ब्रह्मविद्यामाचष्टे। स हि विवदिषुं पुरुषमुपेत्य नितरामविद्यां सीदति विशीर्णां करोति। यद्वा ब्रह्मतां गमयति। अथवा रागद्वेषाववसादयति शिथिलीकरोति। ततः षद्लृ विशरणगत्यवसादनेष्विति प्रोक्तं धातोरर्थत्रयं। तस्मिन्नुपनिषच्छब्दो विद्यते। तथाविधाया ब्रह्मविद्याया उत्पादकत्वात् ग्रन्थोप्युपनिषदित्युच्यते। तस्योपनिषद्ग्रन्थस्य विषयप्रयोजनाधिकारिसम्बन्धप्रामाण्यप्रमेयस्वरूपाणि निरूप्यन्ते। अद्वैतमात्मतत्त्वं विषयः अनन्यलभ्यत्वात्। न हीदृशं तत्त्वमुपनिषदो विनान्येन केनापि प्रमाणेनोपलभ्यते। न तावच्चक्षुरादिजन्यं वाह्यं प्रत्यक्षं तत्त्वे प्रमाणं। तत्त्वस्य रूपरसादि-

* खण्ड इति बङ्गलादर्शनात्। प्रथमारण्यके तु कण्डिका लिखिता सा आदर्शक मात मूला। खण्ड इति प्राचीन व्यावहारचिह्नः।

रहितत्वात्। नाप्यहं मनुष्य इति वा कर्त्ता भोक्ता अहमिति वा मानसप्रत्यचं तत्त्वबोधकं। तयोः क्रमेण स्थूलसूक्ष्मदेहविषयत्वात्। यत्त्वहं ब्रह्मेति मानसं प्रत्यचं तच्छास्त्रजन्यत्वान्नोपनिषदो व्यतिरिक्तं। नाप्यनुमानन्तत्त्वे प्रवर्त्तते। तद्ग्राहकस्य लिङ्गस्य कस्याप्यभावात्। न हि निर्धर्मके तत्त्वे किञ्चिल्लिङ्गं सम्भवति। शङ्क्यमानस्य यस्य कस्यापि लिङ्गस्य पचधर्म्मत्वाभावेनासिद्धत्वप्रसङ्गात्। आगमेऽपि कर्म्मकाण्डे तत्त्वं न प्रतीयते। तस्मादुपनिषदेव परिशिष्यते। अत एव श्रुतिप्रत्यचादिगम्यत्वं निराकृत्य उपनिषदेकगम्यत्वं दर्शयति। नावेदविन्मनुते तं बृहन्तम् इति, तन्त्वौपनिषदं पृच्छामि इति च। तथासत्यनन्यलभ्यमौषधादिकं यथा चिकित्सादिशास्त्रस्य विषयः। तथा तत्त्वमद्वैतमुपनिषदो विषयः। प्रयोजनञ्चात्मतत्त्वाविर्भावादिकं। तत्सर्व्वात्मकपरब्रह्मस्वरूपात्माविर्भावः प्रथमं फलं। आत्मन्येवात्मानं पश्यति सर्व्वात्मानं पश्यतीतिश्रुतेः। तत ऊर्ध्वमविद्याग्रन्थिर्विकीर्यते। एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्येति* श्रुतेः। निवृत्तायामावरणाविद्यायामन्तःकरणतादात्म्यग्रन्थिभेदचिद्रूपजडरूपत्वादिसंशयच्छेदोपाधिजन्महेतुकर्म्मचयाश्च भवन्ति।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः।

चीयन्ते चास्य कर्म्माणि तस्मिन्दृष्टे परावरे॥ इतिश्रुतेः।

इह लोकेऽपि हर्षशोकपरित्यागो भवति। आध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहातीतिश्रुतेः। तथा

---

* विकिरतीह नास्ति इतीति क० ग० च।

काम्यमानस्य तत्त्वस्य प्राप्तत्वान्नियमितान्तःकरणत्वेन विषयदर्श-नाभावाच्च कामप्रविलयो भवति। पर्य्याप्तकामस्य कृतात्मनस्त्विहैव सर्व्वे प्रविलीयन्ति कामा इतिश्रुतेः। तथा तस्य द्यूतादिस्थानीया क्रीडाप्यात्मन्येव। सन्ध्यावन्दनाद्यग्निहोत्रादिरूपा क्रियाप्यात्मन्येव। आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ इतिश्रुतेः। ईदृशस्य लौकिकवैदिककर्त्तव्याभावादयं कृतकृत्यः। यत्पूर्णानन्दैकबोधस्तद्‌ब्रह्माहमस्मीति कृतकृत्यो भवतीतिश्रुतेः।

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः।
नैवास्ति किञ्चित्कर्त्तव्यमस्ति चेन्न स तत्त्ववित्॥ इतिस्मृतेश्च।

तादृशस्य योगिनः सर्व्वथा मनसि विद्यानिमित्त आनन्द आविर्भवति। रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवतीतिश्रुतेः। सेयमुपनिषदः प्रयोजनपरम्परा द्रष्टव्या। सम्बन्धस्य कर्म्मकाण्डेन सह साध्यसाधनभावः। उपनिषदि साध्यं तत्त्वज्ञानं प्रतिपाद्यते, कर्म्मकाण्डे तु चित्तसंस्काराय पापक्षयेण विविदिषोत्पादनेन वा साधनान्यग्निहोत्रादिकर्म्माणि प्रतिपादितानि। तन्नैवं* यथोक्तं सम्बन्धमसहमानाः प्रतिवादिनो बहुधोत्तिष्ठन्ति। तेषां मध्ये केचिद् ब्रह्मज्ञाननैरपेक्ष्येणैव मोक्षं वर्णयन्ति। निषिद्धकाम्ययोः कर्म्मणोः सर्व्वात्मना परित्यागेन भाविनोरुत्तमाधमजन्मनोरसम्भवान् नित्यनैमित्तिकयोरनुष्ठानेन प्रत्यवायानुदयात् प्रारब्धकर्म्मणो भोगेन विनाशाद्देहान्ते मुक्तिरेव परिशिष्यत इति। तदयुक्तं अनन्तयोर्निषिद्धकाम्ययोः सर्व्वात्मना परित्यागासम्भवान्नित्यनैमित्तिकयोरपि फलसद्भावश्रावणाज्ज-

* अलैवमिति ग०।

न्मान्तरकृतानाञ्च बहुजन्महेतूनां* सम्भवान्नास्ति ज्ञानमन्तरेण मुक्तिः। अन्ये तु ज्ञानप्राधान्येन कर्म्मप्राधान्येन वोभयप्राधान्येन वा ज्ञानकर्म्मणोः समुच्चयो मुक्तिहेतुरित्याहुः। तदयुक्तम्। परस्परविरुद्धयोः समुच्चयासम्भवात्। निर्विकारात्मबुद्धिर्ज्ञानम्, अहं कर्त्ता ममेदं फलमितिभ्रान्त्या कर्मप्रवृत्तिरिति तयोर्विरोधः। अपरे पुनर्ज्ञानस्यैव मुक्तिहेतुत्वेऽपि सोपानपङ्क्त्या हर्म्याधिरोहणन्यायेन सन्ध्यावन्दनमारभ्य सहस्रसंवत्सरसत्रान्तेषु वैदिकेषु कर्मस्वनुष्ठितेषु पश्चाज् ज्ञानाधिकारमिच्छन्ति। तदप्ययुक्तम्। अल्पायुषां मनुष्याणां तदसम्भवात्। अपरे पुनः प्रपञ्चप्रविलापनेन कर्मकाण्डस्योपयोगमिच्छन्ति। स्वर्गकामो यजेतेत्युक्ते सत्यर्थाद्देहात्मभावस्य प्रविलाप्यमानत्वादिति। तदप्यसत्। वकबन्धप्रयासप्रसङ्गात्। यथा वकबन्धकामस्तत्समीपे गत्वा तदानीमबध्वा शिरसि नवनीतं प्रक्षिप्यातपेन नवनीतस्य विलीनस्य चक्षुःप्रवेशे सति निमीलितचक्षुष्कं वकं पश्चाद्बध्नाति, तथायं प्रपञ्चप्रविलापनवादी साक्षाद्विलापकमस्थूलं अनणु इत्यादिकमुपनिषद्वाक्यमुपेक्ष्य विलापनस्यानभिधायकेन स्वर्गकामपदेनार्थाद्विलापयतीति व्यर्थोऽयं प्रयासः। ये तु† वेदोक्तकृत्स्नकर्मभिस्तत्फलेषु भुक्तेषु कामे प्रलीने सति पश्चात् ज्ञानाधिकार इति वर्णयन्ति। तदप्ययुक्तं। भोगेन कामलयस्यासम्भवात्। तथा च स्मर्यते।

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥ इति।

---

* भवजन्महेतूनामिति ग०।

† एके तु इति क०, ग० च।

तस्मान् मतान्तराणामयुक्तत्वाज् ज्ञानकर्म्मणोः साध्यसाधनरूपत्वात् तत्प्रतिपादकत्वमेव तयोः सम्बन्धः। अधिकारी तत्त्वजिज्ञासुरेव न तु चिकीर्षुः। यस्तु चिकीर्षोरधिकारं मन्यते स प्रष्टव्यः। वेदान्ताधिकारी यत् कार्य्यं चिकीर्षति तत् किं कार्यसामान्यं किं वा कार्य्यविशेषः। नाद्यः कार्य्यसामान्यस्य वेदान्तेष्वप्रतीतेः, सत्यज्ञानादिवाक्येषु कुर्य्यादितिपदस्यादर्शनात्। विशेषपक्षेऽपि कोऽसौ कर्त्तव्यो विशेषः। किं वासनासन्निरोधः, किं वा मनसो निरोधः, उत प्रतिपत्तिः, आहोस्वित् प्रसङ्ख्यानं। सर्व्वथापि वेदान्तानां कार्य्यपरत्वन्नोपपद्यते, सत्यज्ञानादिवाक्येषु यथोक्तवासनामनोनिरोधादिविधेरप्रतिभासात्। अनर्थनिवारकत्वेन सुषुप्त्यादौ दृष्टत्वात् वासनामनोनिरोधावपेक्षिताविति चेत्, एवन्तर्हि सुषुप्त्यादिदृष्टान्तेनान्वयव्यतिरेकसिद्धत्वान्नैतौ शास्त्रेण विधातव्यौ। नापि तृतीयः कर्त्तुमकर्त्तुमन्यथा कर्त्तुमशक्यत्वात् पुरुषतन्त्रायाः प्रमाणैकजन्यायाः प्रतिपत्तेर्व्विध्यसम्भवात्। नापि चतुर्थः। शब्दयुक्त्या वृत्तिरूपस्य प्रसङ्ख्यानस्य साक्षात्कारहेतुत्वाभावात्। यथा प्रथमप्रवृत्ते* शब्दयुक्ती साक्षात्कारं न जनयतः, एवमसकृदावृत्ते अपि। तस्मात् कार्य्यसामान्यस्य कार्य्यविशेषस्य वा वेदान्तैरप्रतिपाद्यत्वान्न चिकीर्षोरत्राधिकारः। किन्तु सिद्धब्रह्मतत्त्वस्यैव प्रतिपाद्यत्वाज् जिज्ञासोरेवात्राधिकार इति स्थितं†। ननु जिज्ञासोरपि वेदान्ताः प्रमितिं न जनयन्ति तत्प्रामा-

* प्रथमप्रयुक्ते इति ख० घ० पुस्तकधृत पाठान्तरं।

† स्थेयमिति क०, ग० च।

ण्यस्यैवाभावादिति चेत् तत्र वक्तव्यं, किं साधकाभावात् प्रामाण्याभावः, आहोस्विदप्रामाण्यहेतुसद्भावात्। नाद्यः स्वतः प्रामाण्याङ्गीकारेण साधकानपेक्षत्वात्। द्वितीयेऽपि किमबोधकत्वादप्रामाण्यं, उत बाधितत्वात्, अथवानुवादकत्वात्। नाद्यः आत्मा वा इदमेक एवाग्र आसीदित्याद्यवान्तरवाक्यानां, प्रज्ञानं ब्रह्मेत्यादिमहावाक्यानाञ्च श्रवणमात्रेण बोधोपलम्भात्। कर्म्मकाण्डोक्तज्योतिष्टोमादिवाक्यवत् पदार्थानां संसर्ग एवात्रावबुध्यते न त्वखण्डार्थं इति चेत्। मैवं। स एष नेति नेत्यात्मेत्यादित्वम्पदार्थशोधकवाक्यैः, अस्थूलमनणु इत्यादितत्पदार्थशोधकवाक्यैश्च शोधिततत्त्वं पदार्थस्य पुरुषस्याखण्डार्थतत्त्वावबोधात्। नापि द्वितीयः प्रत्यक्षानुमानविधिनिषेधशास्त्रादीनां मायाकल्पितभेदमाश्रित्य चरितार्थानां वास्तवाद्वैतबोधिवेदान्तबाधकत्वासम्भवात्। अतएवान्यत्रोक्तं।

वास्तवे ब्राह्मणे स्वप्ने कल्पिता शूद्रता यथा।

न विरुद्धा तथा भेदो नाद्वैतेन विरुध्यते॥ इति।

नापि तृतीयः आत्मतत्त्वविषयस्य पुरोवादिनः प्रमाणान्तरस्याभावेनानुवादकत्वासम्भवात्। वेदान्तसिद्धान्तमजानद्भिर्वादिभिर्लौकिकैश्चाहं मनुष्य इत्यादिभिः प्रमाणैः स्वस्वात्मग्रहणात् अस्ति पूर्व्ववादिप्रमाणमिति चेत्। न तेषां देहादिविषयत्वेनात्मतत्त्वगोचरत्वं नास्तीति पूर्व्वमेवानन्यलभ्यं विषयं निरूपयद्भिरस्माभिः प्रतिपादितत्वात्। तस्मादप्रामाण्यकारणाभावात् यद्वेदान्तानां स्वतः सिद्धं प्रामाण्यं तत् सुस्थितं। एवमप्यात्मनः स्वप्रकाशत्वेन घटादिवत् प्रमेयत्वं नास्तीति चेत,

मैवं। घटादिग्राहकेष्वपि सर्व्वेषु ज्ञानेषु न्यायतो विचार्य्य-माणेष्वात्मन एव प्रमेयत्वात्, तथा हि यत् प्रमातुमर्हन्तत् प्रमेयं तदर्हत्वं चाज्ञातत्वादात्मन एव युज्यते, न तु घटादेः। अज्ञानेनावृतत्वं अज्ञातत्वम्। घटादयस्तु अज्ञानकार्य्यत्वाना-ज्ञानेनावृताः। अतएवान्यत्रोक्तम्।

अज्ञातरज्जुकार्य्यस्य सर्पस्याज्ञातता न हि ।
अज्ञातब्रह्मकार्य्यस्य जड़स्याज्ञातता कुतः ॥
रज्जुसर्पं न जानामि बोद्धुमिच्छामि मानतः ।
इति व्यवहृतिं प्राज्ञा नाङ्गीकुर्वन्ति केपि च ॥

किञ्च। अज्ञाततत्त्वतो लभ्यं तिरोधानं न चेतरत् ।
स्वयमेव तिरोभूते जडे कान्या तिरोहितिः ॥
आविर्भूते स्वरूपे च चैतन्येऽज्ञाननिर्मितात् ।
तिरोधानाद्विशेषोऽस्ति शुभ्रवस्त्रे मशी यथा ॥
चन्द्रं मलिनयेद्राहुर्नीलमेघं न तु क्वचित् ।
एवं चैतन्यमज्ञातं जड़न्त्वज्ञानदेहकम् ॥
अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः ।
अक्षादीनां स्वतः सिद्धो यत्र तेषां प्रमाणता ॥
अनुभूतिग्रहायैव प्रवृत्तान्यपि दुष्टया ।
सामग्र्याऽखिलमानानि गृह्णते जड़संयुताम् ॥
शुक्तिकाग्रहणायैव प्रवृत्तमपि लोचनम् ।
गृह्णाति रजतोपेतं शुक्त्यंशन्दोषयोगतः ॥
वेदान्तेतरसामग्री दुष्टैषा चक्षुरादिका ।
तज्जा धीरत्र गृह्णाति स्फूर्त्तिं रूपादिसंयुताम् ॥

एवञ्च सति विभ्रान्तः कल्पिते रजते धियम् ।
प्रमाणं मनुते यद्वद्रूपादौ मनुजास्तथा ॥
ब्रह्मण्यत्वादिमानत्वमिति न्यायविदां मतम् ।
रूपादावेवतन्मानमिति मूढधियो जगुः ॥ इति ।

नन्वेवं सति विषयत्वनिरूपणाय पूर्वोक्तमनन्यलभ्यत्वं विपर्येतीति चेत् न । मूढान् प्रत्यनन्यलभ्यत्वोपन्यासात् । ब्रह्मविद्दृष्ट्या तु सर्वैरपि प्रमाणैः ब्रह्मैव प्रतीयते* । अतः प्रमेयत्वं तस्य युक्तम् । किञ्चानन्दरूपत्वेन पुरुषार्थत्वादपि प्रमेयत्वं युक्तम् । तदेवं विषयप्रयोजनसम्बन्धाधिकारिप्रामाण्यप्रमेयाणां सद्भावाद्व्याख्यातुं योग्येत्युपनिषद्व्याख्यामारभते ।

तत्रादौ परमपुरुषार्थकामिनां श्रोतॄणां तत्साधनरूपं मार्गमुपदिशति । (१)एष पन्था एतत् कर्मैतद् ब्रह्मैतत् सत्यं"(१) इति । 'एतच्छब्दः सन्निहितमर्थं परामृशति । स च द्विविधः । अतीत आगामी चेति । 'एषः', उभयविधोऽपि, 'पन्थाः' पुरुषार्थस्य मार्गः, साधनमित्यर्थः । कोऽयमतीतः कश्चागामीत्यपेक्षायां तदुभयं विस्पष्टं निर्दिश्यते । अग्निमीले पुरोहितमित्यारभ्य अक्षो रूपमक्षो रूपमित्यन्तेन अतीतसन्निहितग्रन्थेन यत् प्रतिपादितं तत् 'एतत्', 'कर्म' । उक्थमुक्थमिति वै प्रजा वदन्तीत्यारभ्य आचार्या आचार्या इत्यन्तेन सन्निहितेनारण्यकद्वयरूपेण उत्तरग्रन्थेन प्रतिपादितं यत् सगुणं निर्गुणञ्च तत् 'एतत्', 'ब्रह्म', एतदुभयमपि पुरुषार्थसाधनं । तत्र कर्मशब्देन तद्विषयं ज्ञानपूर्वकमनुष्ठानं विवक्षितं । ब्रह्म-

* प्रमीयते इति ग० ।

शब्देन तु तद्विषयं ज्ञानमात्रम्। अत एव मीमांसाभाष्ये भाष्यकारा आहुः। अभ्युदयफलं धर्मज्ञानं तच्चानुष्ठानापेक्षं, निःश्रेयसफलन्तु ब्रह्मज्ञानं न चानुष्ठानान्तरापेक्षमिति। अतीतानागतग्रन्थस्थयोः कर्मब्रह्मणोरुभयोरपि पुरुषार्थहेतुत्वे कुतः काण्डभेद इत्याशङ्क्य वैलक्षण्यं विषयभेदादित्युच्यते। यदेतदुत्तरकाण्डप्रतिपाद्यं ब्रह्म तत् 'एतत्', 'सत्यं' अबाध्यम्। न हि तस्यान्यद्बाधकं प्रमाणं पश्यामः। पूर्वकाण्डोक्तन्तु कर्म मिथ्यात्वाद्बाध्यम्। बाधकप्रमाणञ्च नेह नाना इत्यादिकं बहुलमुपलभ्यते। मिथ्यात्वेऽपि बाधासिद्धिहेतुत्वादुपादेयमेव॥

यथोक्तस्योभयस्य मार्गत्वं दृढयितुं अयोगव्यावृत्तिमन्ययोगव्यावृत्तिञ्च विधत्ते। (२)"तस्मान्न प्रमाद्येत्तन्नातीयात्(२)" इति। 'तस्मात्' उभयविधादाम्नायमार्गात्, प्रमादं 'न', कुर्य्यात्। कर्मानुष्ठानब्रह्मज्ञानयोरसम्पादनं प्रमादः। तथा सम्पादयितुं प्रवृत्तेनाप्यालस्यादिना तत्परित्यागोऽपि प्रमाद एव। तदुभयं न कुर्य्यात्। अनेनायोगव्यावृत्तिरुक्ता। कृषिवाणिज्यादौ वा शास्त्रान्तरसिद्धे चैत्यवन्दनादौ वा पुरुषार्थसाधनबुद्ध्या प्रवृत्तिस्तस्य पूर्वोक्तमार्गात् पथः सोऽयमन्ययोगस्तद्व्यावृत्तिः 'तन्नातीयात्', इत्यनेन उच्यते। 'तत्' पूर्वोक्तमार्गरूपमुभयं, 'न', अतिक्रमेत्॥

तमेवानतिक्रमं स्वपक्षसाधनपरपक्षदूषणाभ्यां दृढयति। (३)"न ह्यत्यायन् पूर्वे येऽत्यायंस्ते पराबभूवुः"(३) इति। 'पूर्वे' महर्षयो व्यासवसिष्ठादयः, तमुक्तं पन्थानं 'न ह्यत्यायन्'

नैवात्यक्रामन् । 'ये' तु नास्तिकाः, 'अत्यायन्' अत्यक्रामन्, 'ते', 'पराबभूवुः' पराभूताः, पुरुषार्थाद् भ्रष्टाः ॥

ब्राह्मणेनोक्तस्यार्थस्य दार्ढ्याय मन्त्रमुदाहरति । (४)"तदुक्त-मृषिणा प्रजा ह तिस्रो अत्यायमीयुर्न्यऽन्या अर्कमभितो विविश्रे बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आविवेशेति"(४)इति । 'तत्' पूर्वोक्तमार्गातिक्रमानतिक्रमयोर्बाधाबाधावित्येतदर्थजातं, 'ऋषिणा' केनचिन्मन्त्रदर्शिना पुरुषेण, तन्मन्त्ररूपया वाचा कयाचिदृचा प्रोक्तं' । 'प्रजा ह', इत्यादिको मन्त्रः । ब्राह्मणक्षत्रि-यविट्शूद्राः प्रजाः । तासां भागचतुष्टये सति भागत्रयवर्तिन्यः 'तिस्रः', 'प्रजाः,' वैदिकमार्गे श्रद्धारहिताः सत्यो यथोक्तस्य मार्गस्य 'अत्यायं' अतिक्रमं, 'ईयुः' प्राप्ताः । लोके हि गुरुशा-स्त्रोपदेशरहितानां बाहुल्यमुपलभ्यते । तत्प्रसिद्धिद्योतनार्थः 'ह'शब्दः । चतुर्थभागे व्यवस्थितानां प्रजानां मध्ये 'अन्याः' काश्चित् प्रजाः, 'अर्कं' अर्चनीयमग्निं, 'अभितः', 'निविविश्रे' निविष्टाः, तदुपासने प्रवृत्ता इत्यर्थः । 'भुवनेष्वन्तः' सर्वेषु लोकेषु मध्ये, 'बृहत्' प्रौढं, सर्वजगत्प्रकाशकं, 'ह' प्रसिद्धं, आदित्यमण्डलं 'तस्थौ' । तन्मण्डलमध्यवर्तिनमप्यन्याः काश्चित् प्रजा अभितो निविष्टा इत्यन्वयः । 'पवमानः' जगतः शुद्ध्यर्थं सर्वदा सञ्चरन् वायुः, 'हरितः' सर्वा दिशः, 'आविवेश' । तम-प्यन्या अभितो निविष्टा इत्यन्वयः । 'इति'शब्दो मन्त्रसमाप्त्यर्थः ॥

तस्या ऋचः प्रथमपादं व्याचष्टे । (५)"प्रजा ह तिस्रो अत्यायमीयुरिति या वै ता इमाः प्रजास्तिस्रो अत्यायमायं-स्तानीमानि वयांसि वङ्गाऽवगधाश्चेरपादाः"(५) इति । 'ताः'

पूर्वोक्ताः,* 'इमाः' अस्माभिर्दृश्यमानाः, अङ्गारहितास्त्रिविधाः 'प्रजाः', काश्चिद्वैदिकस्यातिक्रमं प्राप्ताः। 'तानि' तथाविधप्रजानां शरीराणि, तद्दोषफलं भोक्तुं प्रवृत्तानि 'इमानि', अस्माभिर्दृश्यन्ते। सामान्यतः प्रोक्तानां पुनः 'वयांसि', इत्यादिना विशेषनिर्देशः। 'वयांसि' पक्षिणः काकगृध्रादयः, आकाशे दृश्यन्ते। सोऽयं पक्षिसङ्घस्त्रिविधानां प्रजानामेको भागः। 'वङ्गाः' वनगता वृक्षाः। 'अवगधाः' अवन्ति रक्षन्ति मनुष्यादीन्, गृध्यन्तिऽभिकाङ्क्ष्यन्त इति व्रीहियवाद्या ओषधयः, 'अवगधाः'। गृधु अभिकाङ्क्षायामितिधातोर्गधशब्दो निष्पन्नः†। सोऽयमोषधिवनस्पतिरूपः प्रजानां द्वितीयो राशिर्भूमौ वर्त्तते। 'इरपादाः' उरःपादाः सर्पा भूविलवासिनः, सोऽयं तृतीयो राशिः। तदेतत् प्रजात्रयं वैदिकातिक्रमदोषजन्यनरकमनुभवति॥

द्वितीयपादं व्याचष्टे। (६)"न्यऽन्या अर्कमभितो विविश्र इति ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निं"(६) इति। योऽग्निराहवनीयादिरूपो दृश्यते। अयमेवार्चनीयत्वात् 'अर्कः' इत्यर्थः॥

तृतीयपादं व्याचष्टे। (७)"वृहद्ध तस्थौ भुवनेष्वन्तरित्यद उ एव वृहद्भुवनेष्वन्तरसावादित्यः" (७)इति। 'वृहच्छब्देनाकाशे दृश्यमानं 'अदः' तेजोमण्डलमेव, विवक्षितं। सर्वजगत्प्रकाशकत्वेन प्रौढत्वात्तेन मण्डलेन तत्रावस्थितः 'असावादित्यः', उपलक्षितः॥

---

* पूर्व्वमन्त्रोक्ता इति क०।

† गधशब्दनिष्पत्तिरिति क०, ग० च।

चतुर्थपादं व्याचष्टे। (८)"पवमानो हरित आविवेशेति वायुरेव पवमानो दिशो हरित आविष्टः"(८) इति। पादप्रक्षालननिष्ठीवनादिप्रदेशस्य शोषणेन शुद्धिहेतुत्वादयं 'वायुरेव', 'पवमानः', इत्युच्यते। प्राच्यादि'दिशः', तत्तत्कर्मसु विहिताः सत्योऽनुष्ठानवैकल्यं हरन्तीति 'हरित्'शब्देनोच्यन्ते। वायोर्दिक्षु सञ्चारात्तत्र 'आविष्टत्वं'। वैदिकातिक्रमं कृतवत्यः प्रजास्त्रिविधा अपि पश्वादिरूपेण नरकजन्मानुभवन्ति। चतुर्थभागवर्त्तिन्यः श्रद्धायुक्ताः सत्य उत्तमलोकप्राप्त्यर्थमग्निवाय्वादिदेवता उपासत इत्येवं ज्ञानवद्भिर्मन्त्रेणोक्तत्वात्, वैदिकमेतं पन्थानं सर्वथा नातिक्रमेदित्यर्थः॥ १॥

(१)उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवीतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च(१) (२)तस्याग्निरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते(२) (३) अन्तरिक्षमेवोक्थमन्तरिक्षं वा अनुपतन्त्यन्तरिक्षमनुधावयन्ति तस्य वायुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते(३) (४)असावेव द्यौरुक्थममुतः प्रदानाद्धीदं सर्वमुत्तिष्ठति यदिदं किञ्च तस्यासावादित्योऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते(४) (५)इत्यधिदैवतमथाध्यात्मं(५) (६)पुरुष एवोक्थमयमेव महान् प्रजापतिरहमुक्थमस्मीति विद्यात्(६) (७)तस्य मुखमेवोक्थं यथा पृथिवी तथा(७) (८)तस्य वागर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते(८)

(९)नासिके एवोक्थं यथान्तरिक्षं तथा(९) (१०)तस्य प्राणोऽर्कोऽन्नमशीतयोऽन्नं नह्योदं सर्वमश्नुते(१०)(११)तदेतद् ब्रध्नस्य विष्टपं यदेतन्नासिकायै विनतमिव(११) (१२)ललाटमेवोक्थं यथा द्यौस्तथा तस्य चक्षुरर्कोऽन्नमशीतयोऽन्नेन ह्योदं सर्वमश्नुते(१२) (१३)समानमशीतयोऽध्यात्मञ्चाधिदैवतञ्चान्नमेवान्नेन ह्योमानि सर्वाणि भूतानि समनन्तीं३ अन्नेनेमं लोकं जयत्यऽन्नेनामुन्तस्मात्समानमशीतयोऽध्यात्मञ्चाधिदैवतञ्चान्नमेव(१३) (१४)तदिदमन्नमन्नादमियमेव पृथिवीतो ह्योदं सर्वमुत्तिष्ठति यदिदं किञ्च(१४) (१५)यच्च किञ्चेदं प्रेतीं३ इ तदसौ सर्वमत्ति यदु किञ्चातः प्रैतीं३ तदियं सर्वमत्ति सेयमित्याद्याची(१५) (१६)अत्ता ह वा आद्यो भवति(१६) (१७)न तस्येशे यन्नाद्याद्यदैनं नाद्युः(१७) ॥ २ ॥

ऐतरेयारण्यकभाष्यम्।

पूर्वोत्तरकाण्डार्थरूपो द्विविधो मार्ग उपदिष्टस्तत्र तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति। यज्ञेन दानेनेत्येवं विविदिषाहेतुत्वश्रवणात्। प्रथममनुष्ठेयत्वेन पूर्वकाण्डे यज्ञादीनि कर्माण्युक्तानि। तैः कर्मभिरुत्पन्नायामपि विविदिषायां दृश्यते त्वग्र्‌यया बुद्ध्येति श्रुतेरेकाग्रचित्तस्यैव ब्रह्मदर्शनहेतुत्वात्तदैकाग्र्यसिद्ध्यर्थमस्मिन् काण्डे प्रथममुपासनमभिधीयते। तच्चो-

पासनं द्विविधं। ब्रह्मोपासनं प्रतीकोपासनञ्चेति। ब्रह्मण एव गुणविशिष्टत्वेन चिन्तनं ब्रह्मोपासनं। प्रबललौकिकपदार्थवासनोपेतस्य तत्परित्यागेन ब्रह्मणि चित्तस्याप्रवेशाद् ब्रह्मभावनया लौकिकवस्तुनश्चिन्तनं प्रतीकोपासनं। तत्र प्रतीकं द्विविधं। यज्ञाद्बहिर्भूतं यज्ञाङ्गञ्चेति। तत्र महाव्रताङ्गे बहुविधयज्ञवासनावासितस्य यज्ञाङ्गं सहसा चित्तं प्रविशतीति मत्वा उक्थमुक्थमित्यादिना अङ्गावबद्धमुपासनमुच्यते। एतेषु अङ्गावबद्धेषूपासनेषु पञ्च विचारा मीमांसायां प्रवृत्ताः। ऋत्विज एवात्राधिकारो न यजमानस्येत्येको विचारः। कर्म्माङ्गेषु प्रतीकेष्वेव पृथिव्यादिदेवतादृष्टिर्न तु देवतायामङ्गदृष्टिरिति द्वितीयः। यस्यां शाखायां यद् ध्यानं विहितं तच्छाखागत एवाङ्गे तदिति नास्ति नियमः। किन्तु शाखान्तरगतेऽप्यङ्ग इति तृतीयः। यावन्त्यङ्गावबद्धान्युपासनानि सन्ति तावन्ति सर्व्वाण्यनुष्ठेयानीति नास्ति नियमः। किन्तु एकं बहूनि वा स्वेच्छयेति चतुर्थः। कर्म्मानुष्ठानकाले अङ्गावबद्धोपासनान्यवश्यमनुष्ठेयानीति नास्ति नियमः। किन्तु स्वेच्छया तदनुष्ठानमिति पञ्चमः। तत्र प्रथमो विचारस्तृतीयाध्यायस्य चतुर्थपादेऽभिहितः।

अङ्गध्यानं याजमानमार्त्विज्यं वा यतः फलं।
ध्यातुरेव श्रुतं तस्मात् याजमानमुपासनं॥
ब्रूयादेवं विदुद्गातेत्यार्त्विज्यन्तु श्रुतं स्फुटं।
क्रीतत्वादृत्विजस्तेन कृतं स्वामिकृतं भवेत्॥

अङ्गावबद्धेषूपासनेषु यजमान एवानुष्ठाता न ऋत्विक्।

ध्यातुः फलश्रवणात्। फलन्तु यजमानस्यैवोचितं स्वामित्वात्। तस्मात् फलिनो यजमानस्यैव ध्यातृत्वमिति प्राप्ते ब्रूमः। एवंविदुद्गाता ब्रूयादिति वाक्यशेषः। उद्गातुरुपासकत्वं स्पष्टं श्रूयते तस्य युक्तश्चैतत्। ऋत्विजामशेषकर्त्तव्यतानुज्ञा वा। यजमानेन क्रीतत्वात्। तस्मादृत्विक्कृतमपि यजमानेनैव कृतमिति फलितत्वोपपत्तेरुपासनमृत्विजाङ्कर्म। द्वितीयो विचारश्चतुर्थाध्यायस्य प्रथमपादे दर्शितः।

आदित्यादावङ्गदृष्टिरङ्गे चादित्यधीरुत।
नोत्कर्षो ब्रह्मजत्वेन द्वयोस्तेनैच्छिकी मतिः।
आदित्यादिधियाङ्गानां संस्कारे कर्मणः फले।
युज्यतेऽतिशयस्तस्मादङ्गेष्वर्कादिदृष्टयः॥

य एवासौ तपति तमुद्गीथमुपासीतेत्यत्रादित्यदेवतां प्रतीकं कृत्वा कर्माङ्गभूतोद्गीथदृष्टिः कर्त्तव्या। विपर्ययेण वा कर्माङ्गे आदित्यदृष्टिः। आदित्योद्गीथयोरुभयोर्ब्रह्मकार्यत्वेन पूर्वाधिकरणोत्कर्षन्यायावतारेण नियामकाभावादिति प्राप्ते ब्रूमः। आदित्यदृष्ट्या कर्माङ्गं संस्कर्त्तव्यं। तथासति दृष्टिभिः संस्कृतस्य कर्मणः फलातिशयसम्भवात्। विपर्यये तु कर्माङ्गैरादित्यदेवतायां संस्कृतायां किन्तत्करिष्यति। न ह्यक्रियात्मिका देवता फलस्य साधनं भवति। अन्यथासिद्धत्वादेव देवतायाः साधारणत्वेन यजमानायजमानयोः फलसाम्यप्रसङ्गात्। तस्मादङ्गेष्वादित्यादिदृष्टयः कर्त्तव्याः। तृतीयो विचारस्तृतीयाध्यायस्य तृतीयपादे दर्शितः।

उक्थादिधीः स्वशाखाङ्गेष्वेवान्यत्रापि वा भवेत् ।
सान्निध्यात् स्वस्वशाखाङ्गेष्वेवासौ व्यवतिष्ठते ॥
उक्थोद्गीथादिसामान्यन्तत्तच्छब्दैः प्रतीयते ।
श्रुत्या च सन्निधेर्बाधस्ततोऽन्यत्रापि यात्यसौ ॥

अङ्गावबद्धेषूपासनेषु उक्थशस्त्राख्ये कर्माङ्गे पृथिव्यादिदृष्टिरैतरेयोपनिषदि श्रूयते। उक्थन्तु कौषीतक्यादिशाखान्तरेष्वपि विहितं। तत्र पृथिवीदृष्टिरैतरेयगतोक्थ एव व्यवतिष्ठते, उत कौषीतक्यादिष्वनुवर्त्तत इति सन्देहे सति सन्निहितत्वात्तु स्वशाखायामेव व्यवस्थितेति प्राप्ते ब्रूमः। उक्थशब्दस्तावन्मुख्यया वृत्त्या सर्वशाखागतमुक्थसामान्यमाचष्टे। तत उक्थश्रुतिवशात् सर्वशाखागतोक्थेषु अनुवृत्तिः प्राप्ता। श्रुतिः सन्निधेर्बलीयसी। तस्मात् क्वचिद्विहिता धीः शाखान्तरेष्वनुगच्छति चतुर्थो विचारस्तत्रैव दर्शितः ॥

समुच्चयोऽङ्गबद्धेषु याथाकाम्येन वा मतिः ।
समुच्चितत्वादङ्गानां तत्सद्धेषु समुच्चयः ॥
ग्रहं गृहीत्वा स्तोत्रस्यारम्भ इत्यादिवन्न हि ।
श्रूयते सहभावोऽत्र याथाकाम्यन्तथा भवेत् ॥

द्विविधानि प्रतीकानि लौकिकानि कर्माङ्गानि च। तत्र लौकिकेषु प्रतीकेषु निर्णयः पूर्वोक्तः। अत्र कर्माङ्गेषु समुच्चये याथाकाम्यं विचार्यते। तत्र कर्माणि कर्माङ्गानि समुच्चित्यैवानुष्ठेयतया प्रयोगविधिप्राप्तानि। तथा चाङ्गतन्त्रत्वादङ्गावबद्धोपासनानामपि समुच्चयनियम इति प्राप्ते ब्रूमः। ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्। स्तुतमनुशंसतीत्यादौ यथा-

ग्रहस्तोत्रशंसनादीनां नियतपौर्वापर्येण सहभावः श्रुतः। न तथोपासनेषु श्रूयते। तस्माद् विकल्पसमुच्चययोर्यथाकामं॥ पञ्चमो विचारस्तत्रैव दर्शितः।

नित्या अङ्गावबद्धाः स्युः कर्मस्वनियता उत।
पर्णवत् क्रतुसम्बन्धो वाक्यान्नित्यास्ततो मताः॥
पृथक्फलश्रुतेर्नैता नित्या गोदोहनादिवत्।
उभौ कुरुत इत्युक्तेः कर्मोपास्त्यनुपासिनोः॥

उद्गीथादिषु कर्माङ्गेषु प्रतिमादिवत् प्रतीकभूतेषु विधीयमाना देवतोपास्तयोऽङ्गावबद्धा यास्ताः कर्मस्वनुष्ठीयमानेषु कर्माङ्गवन्नियमेनानुष्ठातव्याः, कर्मप्रकरणमारभ्याध्ययनाभावेऽपि वाक्यात् क्रतुसम्बन्धोपपत्तेः। यथा यस्य पर्णमयी जुहूर्भवतीत्यनारभ्याधीतस्याव्यभिचरितजुहूद्वारा वाक्यात् क्रतुसम्बन्धः। तथा य एवं विद्वानुद्गायति य एवं विद्वान् साम गायतीत्यादिष्वव्यभिचरितक्रतुसम्बन्धिसामोद्गीथादिद्वारा तदुपासनानां क्रतुसम्बन्धः प्रतीयते। तस्मात् कर्मसु नियता उपास्तय इति प्राप्ते ब्रूमः। गोदोहनादिवदनियता उपास्तयः। यथा चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य इत्यत्राप्प्रणयनमाश्रित्य विधीयमानमपि गोदोहनमक्रत्वर्थत्वादैच्छिकं न तु प्रणयनादिवन्नियतं। तथा कर्माङ्गान्याश्रित्य विधीयमाना उपास्तयो न क्रत्वर्थाः, किन्तु पुरुषार्थाः, कर्मफलात् पृथक्फलश्रवणात्। वर्षति हास्मै इति पञ्चविधे* सामनि

---

* पाञ्चभक्तिके इति ख०।

दृष्टिदेवतामुपासीनस्य कामवृष्टिः क्रतुफलात् पृथक् फलत्वेन श्रूयते। किञ्च तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेदेत्यस्मिन्नङ्गावबद्धोपास्तिवाक्यशेषे उपासकानुपासकयोरुपास्याधारभूतेन तेनाङ्गेन कर्माङ्गानुष्ठानं विस्पष्टमाम्नायते। तस्मात् कर्म्मस्वनियता उपास्तयः॥

तदेतैः पञ्चभिर्विचारैर्निर्णीतमङ्गावबद्धोपासनं नानाविधविशेषणविशिष्टमुक्थमुक्थमित्यारभ्य आत्मा वा इदमित्यतः प्राक्तनेन ग्रन्थेन प्रतिपाद्यते। तत्रादौ महाव्रताङ्गभूते निष्केवल्याख्यशस्त्रे पृथिव्याद्याधिदैविकदेवतादृष्टिं वागाद्याध्यात्मिकदेवतादृष्टिञ्च क्रमेण विधित्सुः पृथिवीध्यानं दर्शयति। (१)"उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवीतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च"(१) इति। 'उक्थं' शस्त्रं, उत्तिष्ठत्यनेन देवताप्रसाद इति व्युत्पत्तेः। तत्र यज्ञं निष्पादयन्त्यो होतृयजमानादयः 'प्रजाः', तच्छस्त्रे ध्यातव्यं रहस्यस्वरूपमज्ञात्वा केवलं नाममात्रेण 'उक्थमुक्थम्', 'इति', एव व्यवहरन्ति। तद्रहस्यं त्वभिधीयते। 'तत्' उक्थस्वरूपं, 'इदमेव' वक्ष्यमाणं, या 'इयं पृथिवी', दृश्यते, सा 'एव', तद्रूपं। 'इतो हि' पृथिव्याः सकाशात्, 'इदं' स्थावरजङ्गमरूपं, 'सर्वं' जगत्, 'उत्तिष्ठति'। तस्मात् पृथिव्या उक्थत्वं युक्तम्। उक्थे पृथिवीदृष्टिः कर्त्तव्येत्यर्थः॥

तेन शस्त्रेणार्चनीये देवे अग्निरूपदृष्टिं शस्त्रसम्बन्धिनीषु गायत्र्यादिषु त्र्यशीतिषु अन्नदृष्टिञ्च विधत्ते। (२)"तस्याग्निरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते"(२)इति। 'तस्य'

गस्तस्य, सम्बन्धी योऽयं 'अर्कः' अर्चनीयो देवः, सोऽयं 'अग्नि'-स्वरूपः। याश्च गायत्रीबृहत्युष्णिक्छन्दस्काः ऋचानामशीतयः', त्रिविधाः, ताः सर्वाः 'अन्नस्वरूपाः'। तस्मात् कारणाल्लौकिकः पुरुषः 'अन्नेन,' 'इदं' 'सर्वं' प्राणिजातं, 'अश्नुते' प्राप्नोति। अन्नवन्तं पुरुषं सर्वे जनास्तल्लाभाय सेवन्ते॥

पूर्वोक्तपृथिव्यादिवदुक्थदेवताशीतिष्वन्तरिक्षवायून्नदृष्टिं विधत्ते। (३)"अन्तरिक्षमेवोक्थमन्तरिक्षं वा अनुपतन्त्यन्तरिक्षमनुधावयन्ति तस्य वायुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते"(३) इति। पक्षिणः सर्वेऽपि 'अन्तरिक्षं', 'अनुसृत्योपरि 'पतन्ति' सञ्चरन्ति। मनुष्याश्च भूमेरुपरि 'अन्तरिक्षं' अवकाशं, 'अनुसृत्यैव अश्वबलीवर्दादीन् 'धावयन्ति'। तस्मादन्तरिक्षस्योक्थत्वं युक्तम्॥

द्युलोकादिदृष्टिं विधत्ते। (४)"असावेव द्यौरुक्थमसुतः प्रदानाद्धीदं सर्वमुत्तिष्ठति यदिदं किञ्च तस्यासावादित्योऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते" (४)इति। 'असुतः' द्युलोकात्, भूमौ प्रदीयते यत् वृष्टिजलं तस्मात् वृष्टि'प्रदानात्', 'इदं सर्वं' ओषधिवनस्पत्यादिकं, 'यत्', 'किञ्चिदस्ति, तत् 'उत्तिष्ठति'। तस्माद् द्युलोकस्य 'उक्थत्वं' युक्तम्॥

नृपशोर्बुद्धिसमाधानायोक्तवक्ष्यमाणयोर्ध्यानयोर्विभागं दर्शयति॥ (५) "इत्यधिदैवतमथाध्यात्मं"(५) इति। दैवतानि पृथिव्यादीन्यधिकृत्य प्रवृत्तं ध्यानं 'अधिदैवतं', तच्च 'इति' उक्तप्रकारेण, व्यवस्थितम्। आत्मानं मनुष्यशरीरमधिकृत्य प्रवृत्तं ध्यानं 'अध्यात्मम्'। तत् तु 'अथ' अनन्तरं, अभिधीयते॥

तत्रादौ शस्त्रे शरीरदृष्टिं विधत्ते । (६)"पुरुष एवोक्थ-मयमेव महान् प्रजापतिरहमुक्थमस्मीति विद्यात्" (६)इति । शिरःपाण्यादिमान् देहः 'पुरुषः', तस्य 'महत्त्वं' श्रेष्ठत्वम् । अयं 'पुरुषः,' ब्रह्मणो लोक इत्यत्र वक्ष्यते । 'प्रजापतित्वञ्च तस्य वाचा सृष्टौ पृथिवीचाग्निश्चेत्यत्राभिधास्यते । तस्मादुक्थहेतुत्वादहस्य उक्थत्वं । तच्च 'उक्थं', 'अहं', 'अस्मि', 'इति' एवं, ध्यायेत् । नात्र विदधातुः प्रमाणजन्यं ज्ञानमाचष्टे, किन्तु पुरुषतन्त्रां ध्यान-क्रियां । यद्यपि विद ज्ञान इति धातुस्तथापि ज्ञानध्यानयोर्मान-सत्वसाम्येन ध्यानमत्र विवक्षितं । उपासनाप्रकरणस्य वर्त्तमान-त्वात् । नन्वहमुक्थमस्मीत्येतन् मीमांसया विरुद्धं । तत्र हि चतु-र्थाध्याये आत्मेति तूपगच्छन्ति ग्राहयन्ति चेति सूत्रेण तत्त्ववि-द्यायां ब्रह्मोपासनेषु चाहङ्ग्रहमभिधाय न प्रतीके न हि स इति सूत्रेण प्रतीकेष्वहङ्ग्रहो निवारितः । अत्र चोक्तं प्रतीकं तस्माद-हमुक्थमस्मीत्यहङ्ग्रहो न युक्त इति चेत्, नायं दोषः । तस्मिन् सूत्रे न्यायबलादेवाहङ्ग्रहस्य निषिद्धत्वात् । इह तु वचनबलाद-हङ्ग्रहो विधीयते । किमिव हि वचनं न कुर्य्यात् । नास्ति वच-नस्यातिभार इति शास्त्रकाराणां डिण्डिमः । यद्यपि कृत्स्नमुपास्य-स्वरूपमभिधायान्ते अहङ्ग्रहो वक्तव्यः, तथापि वक्ष्यमाणेषूपा-स्यावयवविशेषेषु प्रत्येकमहङ्ग्रहसिद्ध्यर्थमादावेवासौ विधीयते ॥

आधिदैविकदृष्टान्तेनाध्यात्मिकमुखदृष्टिं विधत्ते । (७)"तस्य मुखमेवोक्थं यथा पृथिवी तथा"(७) इति । 'तस्य' पुरुषस्य देहरूपस्य, यत् 'मुखं', तद्दृष्टिः 'उक्थे' कर्त्तव्या । अधिदैवतं 'यथा', प्रथमपर्य्याये 'पृथिवीदृष्टिस्तद्वत् ॥

अर्चनीयेदेवे वागदृष्टिं अशीतिष्वन्नदृष्टिञ्च विधत्ते। (८)"तस्य वागर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते"(८) इति॥

आधिदैविकान्तरिक्षदृष्टान्तेन द्वितीयपर्य्यायं विधत्ते। (९)"नासिके एवोक्थं यथान्तरिक्षं तथा(९)" इति॥

देवे प्राणदृष्टिमशीतिष्वन्नदृष्टिञ्च विधत्ते। (१०)"तस्य प्राणोऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते(१०)" इति॥

भ्रुवोरधस्तान्नासिकाया एव मूलं निम्नदेशं प्रशंसति। (११)"तदेतद् ब्रध्नस्य विष्टपं यदेतन्नासिकायै विनतमिव"(११) इति। 'नासिकायाः सम्बन्धि, 'विशेषेण 'नतं' अत्यन्तनिम्नं, 'यत्' मूलं, अस्ति 'तदेतत्', 'ब्रध्नस्य' आदित्यस्य, 'विष्टपं' स्थानं। असौ वा आदित्यो ब्रध्न इति श्रुत्यन्तरात्। तच्च मूलं ब्रह्मध्यानस्थानत्वात्* ब्रह्मोपाधेरादित्यस्यापि स्थानं। ध्यानस्थानत्वञ्च प्रश्नोत्तराभ्यां जावाला आमनन्ति। कतमं वास्य स्थानं भवतीति। भ्रुवोः प्राणस्य च यः सम्बन्धः† स एष द्यौर्लोकस्य परस्य च सन्धिर्भवतीति 'विनतमिव', इति। 'इव'शब्दोऽनर्थक एवकारार्थो वा॥

तृतीयपर्यायं विधत्ते। (१२)"ललाटमेवोक्थं यथा द्यौस्तथा तस्य चक्षुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते"(१२) इति॥

आधिदैविकाध्यात्मिकपर्य्यायेषु षट्स्वपि अर्के ध्यातव्या अग्न्यादयो विविधाः। तद्वदशीतिषु ध्यातव्यस्यापि नानाविधत्वशङ्कां व्यावर्त्य पूर्वोक्तमन्नैकध्यानं प्रशंसति। (१३)"समानम-

* ब्रह्मणः स्थानत्वादिति क०, ग० च।

† सन्धिरिति क०, ग० च।

शीतयोऽध्यात्मञ्चाधिदैवतञ्चान्नमेवान्नेन ह्यीमानि सर्वाणि भूतानि समनन्तीम्३ अन्नेनेमं लोकं जयत्यन्नेनामुं तस्मात् समानम-शीतयोऽध्यात्मञ्चाधिदैवतञ्चान्नमेव"(१२)इति। गायत्र्यो वार्हत्य औष्णिह्यश्च यास्तृचाशीतयः' ताः सर्वाः 'अध्यात्माधिदैवतपर्य्या-येषु सर्वेष्वपि 'अन्नमेव', इत्येतत् 'समानं'। न त्वन्नादन्यत् किञ्चित्तासु ध्येयमस्ति, अन्नस्यात्यन्तं प्रशस्तत्वात्। 'इमानि सर्वाणि', प्राणिरूपाणि, अन्नेनैव 'समनन्ति' सम्यक् चेष्टन्ते। अन्न-जन्यस्य बलस्य शरीरचेष्टाहेतुत्वात्। सानुनासिकप्लुतिरुक्तार्थ-प्रसिद्ध्यर्था*। न केवलं अन्नस्य चेष्टाहेतुत्वं किं तु लोकद्वयमपि तेन जितं भवति। अन्नप्रदानेन मनुष्याणां वश्यत्वमेतल्लोकस्य जयः। शास्त्रीयेणान्नदानेन देवतातुष्टिः स्वर्गलोकजयः। तदे-वमन्नस्य प्रशस्तत्वात् सर्वत्राशीतीनामन्नरूपत्वमेव ध्येयं॥

उक्थे ध्यातव्यत्वेनोक्तायाः पृथिव्या भोक्तृभोग्यरूपकृत्स्नज-गद्रूपत्वध्यानं विधत्ते। (१४)"तदिदमन्नमन्नादमियमेव पृथिवी-तो ह्यीदं सर्वमुत्तिष्ठति यदिदं किञ्च"(१४) इति। लोके यत् 'अन्नं', अस्ति, यच्च 'अन्नादं' भोक्तृजातं, 'तदिदं', सर्वं जगद्रूपं, 'इयमेव', 'पृथिवी', पृथिव्यास्तदात्मकत्वं ध्येयमित्यर्थः। 'यत्' 'किञ्चित् 'इदं' भोक्तृभोग्यजातं, अस्ति, तत् 'सर्वं', 'इतः' पृथिव्याः सकाशात्, उत्पन्नं। तस्मात् तदात्मकत्वं युक्तम्॥

पृथिव्याः कृत्स्नभोक्तृभोग्यात्मकत्वमुपपादयति। (१५)"यद्ध किञ्चेदं प्रेतीं३ इ तदसौ सर्वमत्ति यदु किञ्चातः प्रैतीं३ तदियं

---

* समनन्तीं इति प्लुतिरुक्तार्थप्रसिद्ध्यर्थेति क०, ग० च।

सर्वमत्ति सेयमित्याद्यात्त्री"(१५) इति। 'यत्', 'किञ्च', 'इदं', प्राणिजातं, पृथिव्यां वर्तमानं 'प्रैत्ति' प्रैति, म्रियते, इरगता-वित्यस्य धातोः प्रपूर्वस्य मरणार्थत्वं द्रष्टव्यं। इण्गताविति-धातौ तथा दर्शनात्। भूमौ मृतं 'तत्सर्वं', प्राणिजातं, स्वानु-ष्ठितपुण्यकर्मवशात् स्वर्गं गच्छति, 'तत्' च स्वर्गस्थं, 'असौ' स्वर्गलोकः, 'अत्ति' भक्षयति वशीकरोति। 'यदु किञ्च' यद्यपि किञ्चित् स्वर्गस्थं प्राणिजातं, स्वकर्मफलभोगे समाप्ते सति 'अतः' अस्मात् स्वर्गाल्लोकात्, 'प्रैति' मृतो भूमावागच्छति, 'तत्' समागतं, 'सर्वं' प्राणिजातं, 'इयं' भूमिः,'अत्ति' भक्षयति वशी-करोति। भूमौ यागं कुर्वन्तो यजमाना मरणादूर्ध्वं स्वर्गं भुक्ता पुनर्भूमावागच्छन्तीति वाक्यद्वयस्यार्थः। तत्प्रसिद्ध्यर्थं श्रुति-द्वयं द्रष्टव्यं। 'प्रैत्ति', इत्यैकारस्य आकारश्रुतिरिकारसहिता व्याकरणेऽभिहिता। एवं सति 'सेयं' भूमिः, 'इति' उक्तेनैव प्रकारेण, 'आद्या', अपि भवति। 'अत्त्री', च भवति। भूमिष्ठानां यजमानानां स्वर्गे यद्देवतापारतन्त्र्यं तदेतद्भूमेराद्यत्वं। स्वर्ग-स्थानाच्च पुनरागमने सति तेषां वशीकरणलक्षणं स्वातन्त्र्यं भूमेरत्तृत्वं। अनेनप्रकारेण कृत्स्नभोग्यभोक्तृरूपा पृथिवी॥

एतद्गुणध्यानस्य फलमाह। (१६)"अत्ता ह वा आद्यो भवति"(१६) इति। 'अत्ता' योऽयं लोके भोक्ता, यश्च, 'आद्यः', भोग्यः पदार्थः, तदुभयरूपेण सर्वात्मकः 'भवति', इत्यर्थः। ननु लोके कश्चित् स्वामी भृत्यैः सेव्यमानो भृत्यानां भोक्ता भवति, तथा जीवितप्रदातृत्वेन भृत्यैर्भुज्यत इति भोग्योऽपि भवति॥

अनेन न्यायेन सर्वोऽप्यन्यैरुपक्रियमाणो भोक्ता स्वयमुपकुर्वन् भोग्यश्च। तयोः सति उपासनफलरूपे भोक्तृभोग्यात्मकत्वे को नाम विशेष इत्याशङ्क्याह। (१७)"न तस्येशे यन्नाद्याद् यद्वैनं नाद्युः"(१७)इति। अनुपासको लौकिकः पुरुषः स्वकर्म्मप्राप्तम-शनाच्छादनादिकं कियदेवात्ति न तु सर्वं। सर्वस्य स्वकर्मप्रापि-तत्वाभावात्। तथा सति 'यत्' वस्तु, स्वयं 'नाद्यात्' न भुञ्जीत, 'तस्य' वस्तुनः, 'नेशे' नेष्टे, न स्वामी भवति। उपासकस्तु हिरण्यगर्भरूपः सन् सर्वमत्तीति सर्वस्य स्वामी। सोऽयमेको विशेषः। 'वा'शब्दः समुच्चयवाची। 'यद्वा' यस्माच्च कार-णात्, 'एनं' उपासकं, 'नाद्युः' अन्ये पुरुषा न भुञ्जीरन्, तस्मात् पराधीनत्वलक्षणं भोग्यत्वं नास्तीति। अनुपासकस्य तु तदस्तीत्ययमपरो विशेषः। ननु भोग्यत्वाभावेऽपि सति आद्यो भवति इति कथमुच्यते। नायं दोषः। पराधीनत्वलक्षणस्य भोग्यत्वस्यैव निषेधात्। आद्यो भवतीत्यनेन तु स्वात्मभूत-सर्वभोग्यजातरूपत्वमभिधीयत इति न कोऽपि विरोधः॥ २॥

(१)अथातो रेतसः सृष्टिः प्रजापते रेतो देवा देवानां रेतो वर्षं वर्षस्य रेत ओषधय ओषधीनां रेतोऽन्नमन्नस्य रेतो रेतो रेतसो रेतः प्रजाः प्रजानां रेतो हृदयं हृदयस्य रेतो मनो मनसो रेतो वाग् वाचो रेतः कर्म तदिदं कर्मकृतमयं पुरुषो ब्रह्मणो लोकः(१) (२)स इरामयो यद्धीरामयस्तस्माद्धिरण्मयः(२) (३)हिरण्मयो ह वा असु-

स्मिंल्लोके सम्भवति हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद(३) ॥ ३ ॥

ऐतरेयारण्यकभाष्यम् ।

पूर्वत्रोक्थे पुरुषत्वदृष्टिं विधातुं पुरुषस्य महत्त्वमयमेव महानित्यभिहितं, तदेतन् महत्त्वमुपपादयति । (१)"अथातो रेतसः सृष्टिः प्रजापते रेतो देवा देवानां रेतो वर्षं वर्षस्य रेत ओषधय ओषधीनां रेतोऽन्नमन्नस्य रेतो रेतो रेतसो रेतः प्रजाः प्रजानां रेतो हृदयं हृदयस्य रेतो मनो मनसो रेतो वाग्वाचो रेतः कर्म तदिदं कर्म्म कृतमयं पुरुषो ब्रह्मणो लोकः"(१) इति । 'अथ' पुरुष एवोक्थमित्युक्थे पुरुषदृष्टिकथनानन्तरं, यतः कारणात् पुरुषस्योक्थत्वं सम्भावयितुमयमेव महानित्युक्तं वैशिष्ट्यं वक्तव्यं, 'अतः' कारणात्, वैशिष्ट्यसिद्धये 'रेतसः' सारभूतस्य कार्य्यस्य, 'सृष्टिः', अभिधीयत इति शेषः। आदौ 'प्रजापतेः' जगदीश्वरस्य, 'रेतः' सारभूतं कार्यं,'देवाः', सात्त्विकत्वात् देवानां सारभूतत्वं युक्तं। मनुष्याणां राजसत्वाद् गवाश्वादीनान्तामसत्वाच्च नास्ति सारकार्यत्वं। तेषां च 'देवानां', 'रेतः' सारभूतं कार्यं, 'वर्षं'। घर्म्मकाले सन्तप्ता भूमिर्वर्षेणाप्यायते। ततोऽस्य सारत्वं। तस्यापि 'वर्षस्य', सारं 'ओषधयः', प्राण्युपकारकत्वात्। न हि वृष्टिकार्यमपि पङ्कादिकं प्राणिभिः सेव्यते। 'ओषधीनां', अपि 'अन्नं', सारं न तु पलालतुषादिकं। 'अन्नस्य', अपि 'रेतः', सारं न तु पुरीषादिकं। 'रेतसः', अपि सारं पुत्रादिरूपाः 'प्रजाः', न तु

बन्ध्यायामुत्सृष्टस्य सारत्वमस्ति। 'प्रजानां', अपि सारं 'हृदय'-पुण्डरीकं, जीवात्मनः स्थानत्वात्। हृदि ह्येष आत्मेतिश्रुतेः। 'हृदयस्य', सारं 'मनः', ज्ञानशक्तियुक्तत्वात्। न तु मांसमयानामष्टदलानां तच्छक्तिरस्ति। 'मनसः', सारं वेदरूपा 'वाक्'। यद्धि मनसा ध्यायति तद्वाचा वदतीतिश्रुतेः। वाचो मनःकार्यत्वं न तु मनसि उत्पन्नानां रागद्वेषादीनां वेदवत् सारत्वमस्ति। वेदस्यापि सारमग्निहोत्रादिकं 'कर्म'। वैदिकमन्त्राणां तदनुष्ठानार्थत्वात्। 'तदिदं कर्म', पूर्वस्मिन् जन्मनि 'कृतं', सत् इह जन्मनि वेदशास्त्रकर्मानुष्ठानब्रह्मोपासनब्रह्मज्ञानयोग्यः* 'अयं पुरुषः', भवति। न हि निरतिशयसुकृतमन्तरेणेदृशं जन्म सम्भवति। तस्मात् 'पुरुषः', 'ब्रह्मणः', उपासनीयस्य वेदनीयस्य, च 'लोकः' स्थानं, इति तस्य महत्त्वं सिद्धमित्यर्थः॥

तस्य पुरुषस्य हिरण्मयत्वाख्यो गुणो ध्यानार्थं† विधीयते। (२)"स इरामयो यद्धीरामयस्तस्माद्धिरण्मयः"(२) इति। 'इरा'-शब्दः, अन्नवाची। 'सः' पुरुषः, शिरःपाण्यादियुक्तोऽन्नरसमयः। अत एव तैत्तिरीया आमनन्ति, स वा एष पुरुषोऽन्नरसमय इति। 'यद्धि' यस्मादेव कारणात्, अयं 'इरामयः', 'तस्मात्' कारणात्, 'हिरण्मयः', इत्युपासकानां प्रसिद्धिः। 'इरामयहिरण्मय'शब्दयोरक्षरसाम्यात् तथोच्यते। यथाध्यात्ममन्नमय एवमधिदैवं ब्रह्माण्डरूपेण सुवर्णमयः॥

एतद्गुणध्यानस्य फलमाह। (३)"हिरण्मयो ह वा अमु-

---

* ब्रह्मध्यानयोग्य इति क०,ग०च।

† ज्ञानायेति क०।

स्मिंल्लोके सम्भवति हिरण्मयः सर्वेभ्यो भूतेभ्यो दृहशे य एवं वेद"(२) इति। 'यः' पुमान्, 'एवं', हिरण्मयत्वगुणं उपास्ते, स पुमान् स्वर्गे लोके ज्योतिर्मयो भवति। तथाविधो भूत्वा सर्वप्राण्युपकारार्थमादित्यमण्डलरूपेण सर्वदा दृश्यते ॥ २ ॥

(१)तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत् प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात् प्रपदे तस्मात् प्रपदे इत्याचक्षते शफाः खुरा इत्यन्येषां पशूनां(१) (२)तदूर्ध्वमुदसर्पत्ता ऊरू अभवताम्(२) (३) उरु गृणीहीत्यब्रवीत्तदुदरमभवत्(३) (४)उर्वेव मे कुर्वित्यब्रवीत्तदुरोऽभवत्(४) (५)उदरं ब्रह्मेति शार्कराक्ष्या उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैव ताइइ(५) (६)ऊर्ध्वं त्वेवोदसर्पत्तच्छिरोऽश्रयत यच्छिरोऽश्रयत तच्छिरोऽभवत्तच्छिरसः शिरस्त्वं(६) (७)ता एताः शीर्षञ् छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः(७) (८)श्रयन्तेऽस्मिञ् छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद(८) (९)ता अहिंसन्ताहमुक्थमस्म्यहमुक्थमस्मि इति ता अब्रुवन् हन्तास्माच्छरीरादुत्क्रामाम तद्यस्मिन् न उत्क्रान्त इदं शरीरं पत्स्यति तदुक्थं भविष्यतीति(९) (१०)वागुदक्रामदवदन्नश्नन् पिबन्नास्तैव चक्षुरुदक्रामदपश्यन्नश्नन् पिबन्नास्तैव श्रोत्रमुदक्रामदशृण्वन्नश्नन् पिबन्नास्तैव मन उदक्रामन्मीलित

इवाश्नन् पिबन्नास्तैव प्राण उदक्रामत्तत् प्राण उत्क्रान्तेऽपद्यत(१०) (११)तदशीर्यताशारीती३ तच्छरीरमभवत्तच्छरीरस्य शरीरत्वं(११) (१२)शीर्यते ह वा अस्य द्विषन् पाप्मा भ्रातृव्यः परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद(१२) (१३) ता अहिंसन्तैवाहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवन् हन्तेदं पुनः शरीरं प्रविशाम तद्यस्मिन् नः प्रपन्न इदं शरीरमुत्थास्यति तदुक्थं भविष्यतीति(१३) (१४)वाक् प्राविशदशयदेव चक्षुः प्राविशदशयदेव श्रोत्रं प्राविशदशयदेव मनः प्राविशदशयदेव प्राणः प्राविशत्तत्प्राणे प्रपन्न उदतिष्ठत्तदुक्थमभवत्(१४) (१५)तदेतदुक्थां३ प्राण एव(१५) (१६)प्राण उक्थमित्येव विद्यात्(१६) (१७)तं देवा अब्रुवन्त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं स्मस्त्वमस्माकमसीति(१७) (१८)तदप्येतदृषिणोक्तं त्वमस्माकं तव स्मसीति(१८) ॥ ४ ॥

ऐतरेयारण्यकभाष्यम् ।

स्थूलदेहरूपेण उक्थस्योपासनमभिधाय सूक्ष्मदेहात्मकप्राणोपासनं वक्तुं प्राणोपाधिकस्य परमात्मनः शरीरे प्रवेशं दर्शयति । (१)"तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत् प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात् प्रपदे तस्मात् प्रपदे इत्याचक्षते शफाः खुरा इत्यन्येषां पशूनां"(१) इति । 'यत्' जगत्कारणं,

सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिवाक्यप्रतिपाद्यं ब्रह्म अस्ति, तदेतत् सृष्टिकाले स्थूलदेहं सृष्ट्वा 'तं' सृष्टं, 'इमं' दृश्यमानं, 'पुरुष'शब्दवाच्यं स्थूलदेहं, 'प्रपदाभ्यां' पादाग्राभ्यां,'प्रापद्यत' प्रविष्टवान्। तत् सृष्ट्वा तदेवानुप्राविशदिति श्रुत्यन्तरं। यद्यपि सर्वगतस्य ब्रह्मणः प्रवेशो न सम्भवति तथापि प्राणोपाधिकस्य प्राणप्रवेशेनैव प्रवेश उपचर्य्यते। अत एव मैत्रायणीया आमनन्ति। स वायुमिवात्मानं कृत्वाभ्यन्तरं प्राविशदिति। यस्मात् प्रपदाभ्यां प्रवेशः, 'तस्मात्', प्रापद्यतोभाभ्यामितिव्युत्पत्त्या पादाग्रयोः प्रपदत्वं सम्पन्नं। यस्मादवयवार्थस्तयोरस्ति, 'तस्मात्', लोके शाब्दिकाः 'प्रपदे', इत्यनेनैव शब्देन पादाग्रद्वयं व्यवहरन्ति। मनुष्यशरीरेषु पादाग्रसद्भावात्तद्द्वारेण प्रवेशोऽपि गवाश्वादिशरीरेषु* तदसम्भव इति चेन् न। तच्छरीरेष्वपि 'शफ'-शब्देन 'खुर'शब्देन च तत्तद्देशे प्राणिभिर्व्यवह्रियमाणानां पादभागानामेव प्रपदत्वात्। 'शफखुर'शब्दयोर्देशविशेषेण व्यवहारभेदः॥

पादाग्रयोः प्रविष्टस्य ब्रह्मणः क्रमेण शिरःपर्यन्तां व्याप्तिं दर्शयितुमूरुपर्यन्तां तावद्दर्शयति। (२)"तदूर्ध्वमुदसर्पत्ता ऊरू अभवताम्"(२) इति। 'तत्' पादाग्रयोः प्रविष्टं ब्रह्म, ऊर्ध्वाभिमुखत्वेन व्याप्तवत्। यस्मादेवं तस्मात् 'उदसर्पत्', एतयोरिति व्युत्पत्त्या 'तौ' ऊर्ध्वप्रदेशौ, 'ऊरुशब्दवाच्यौ, 'अभवतां'॥

ऊरुदेशादप्यूर्ध्वदेशव्याप्तिं दर्शयति। (३)"उरु ह्यणीहीत्यब्रवीत्तदुदरमभवत्"(३) इति। 'उरु' विस्तीर्णं यथा भवति

* गजाश्वादिशरीरेष्विति क०।

तथा, 'गृणीहि' निगरणयोग्यं विपुलं छिद्रं कुरु, 'इति' एवं, उपरितनं शरीरभागं प्रति ऊर्वोरवस्थितं ब्रह्म 'अब्रवीत्'। तस्य ब्रह्मणः सङ्कल्पवशात् 'तत्' स्थानं, उपरितनं, 'उदर'शब्दवाच्यं विपुलं छिद्रं 'अभवत्'। 'उरु'शब्देन सहाक्षरसाम्यादुदर-नामत्वं ॥

पुनरप्युपरिदेशे सञ्चारं दर्शयति। (४)"उर्वेव मे कुर्वित्यब्रवी-त्तदुरोऽभवत्"(४) इति। उदरवर्त्तिनो मम भूयोऽपि विस्तीर्णं 'एव', छिद्रं 'कुरु', 'इति' एवं, ब्रह्मसङ्कल्पवशात्तदेतदुपरितनं स्थानं 'उरः'शब्दवाच्यं विपुलं छिद्रमभूत्। अत्राप्युकारसाम्या-न्निर्वचनं द्रष्टव्यं ॥

अनयोरुदरोरसोर्ब्रह्मसङ्कल्पविशेषेण प्रीतिपूर्वकेण उत्पन्न-त्वाद् ब्रह्मध्यानप्रतीकत्वं दर्शयति। (५)"उदरं ब्रह्मेति शार्क-राक्ष्या उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्माहैव ता२इ"(५) इति। 'शर्कराक्षनामकस्य महर्षेः पुत्राः 'उदरे 'ब्रह्मदृष्टिं कृत्वा 'उपासते'। 'अरुणाख्यस्य महर्षेः पुत्रा उरःस्थानगते*अष्टद-लकमलमध्यस्थे 'हृदयच्छिद्रे 'ब्रह्मदृष्टिं कृत्वा 'उपासते, 'ते' उभे अपि स्थाने, ब्रह्मणः प्रीतिविषयत्वात् 'ब्रह्मैव'। प्लुतिः शास्त्रीयप्रसिद्धयर्था ॥

पुनरपि ब्रह्मण ऊर्ध्वदेशे सञ्चारं दर्शयति। (६)"ऊर्ध्व-न्त्वेवोदसर्पत्तच्छिरोऽश्रयत यच्छिरोऽश्रयत तच्छिरोऽभवत्त-च्छिरसः शिरस्त्व"'(६)इति। उरःपर्य्यन्तमुत्क्रम्यापि तद् ब्रह्म

---

* हृदयस्थानगते इति क०, ग०च।

नोपरेमे, किन्तु ततोऽपि 'ऊर्ध्वमुदसर्पदेव'। ऊर्ध्वं गत्वा च 'तत्' ब्रह्म, 'शिरोदेशं 'अश्रयत' सेवितवत्। यस्मादेवं तस्माच्छ्रितमनेनेति व्युत्पत्त्या 'तत्' स्थानं, 'शिरः' शब्दवाच्यं 'अभवत्'। तस्मादेव कारणात् लोकेऽपि ऊर्ध्वभागस्य शिरःशब्दवाच्यत्वं, प्राणिभिर्व्यवह्रियते॥

शिरोभागं पुनः प्रशंसति। (७)"ता एताः शीर्षञ् छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः"(७) इति। 'शीर्षन्' शिरोभागे, 'ताः' ब्रह्मणा स्रष्टृत्वेन श्रुतौ प्रसिद्धाः। 'एताः' अस्माभिरनुभूयमानाः, 'श्रियः' दर्शनश्रवणादिव्यवहारसम्पदः, 'श्रिताः' प्राप्ताः। कास्ताः श्रिय इति चेत्, ता उच्यन्ते। 'चक्षुरादयः श्रियो व्यवहारसम्पदस्तन्निष्पत्तेः॥

शिरस्त्ववेदनं प्रशंसति। (८)"श्रयन्तेऽस्मिञ्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद"(८) इति। 'यः' पुमान्, शिरोनाम विदित्वोपास्ते, 'अस्मिन्' पुरुषे, चक्षुरादिपाटवजन्या उत्तमसम्पद आश्रिता भवन्ति॥

इदानीं शिरःपर्य्यन्ते शरीरे अवस्थितानां चक्षुरादीनां मध्ये प्राणस्यैव श्रैष्ठ्यं वक्तुं संवादं दर्शयति। (९)"ता अहिंसन्ताहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवन् हन्तास्माच्छरीरादुत्क्रामाम तद्यस्मिन् न उत्क्रान्त इदं शरीरं पत्स्यति तदुक्थं भविष्यतीति"(९) इति। 'ताः' पूर्वोक्ताः श्रियश्चक्षुरादिरूपाः, तदभिमानिन्यो देवताः, 'अहिंसन्त' परस्परं स्पर्द्धारूपां हिंसामकुर्वन्। स्पर्द्धाविषयो विस्पष्टमुच्यते। 'अहमुक्थमस्मि' उक्थे चक्षुःस्वरूपस्य ममैव दृष्टिः कर्त्तव्येत्येवं चक्षुर्देवता

वन्ति। तथैव श्रोत्रादयोऽपीतिविवक्षया वीप्सोक्ता। 'ताः' स्पर्द्धमाना देवताः, स्पर्द्धानिवारणार्थं समयविशेषं परस्परं 'अब्रुवन्'। निवारणोपायदर्शननिमित्तहर्षार्थोऽयं 'हन्त'शब्दः। वयं सर्वा अपि क्रमेण 'अस्मात् शरीरात्', उत्क्रान्तिं करवाम। तथा सति अस्माकं मध्ये 'यस्मिन्', 'उत्क्रान्ते', सति 'इदं शरीरं' पतिष्यति' 'तत्', एव 'उक्थं', 'भविष्यति'। 'इति'शब्दः समयबन्धसमाप्त्यर्थः॥

क्रमेणोत्क्रान्तिं शरीरपतनपर्यन्तां दर्शयति। (१०)"वागुदक्रामदवदन्नश्नन् पिबन्नास्तैव चक्षुरुदक्रामदपश्यन्नश्नन् पिबन्नास्तैव श्रोत्रमुदक्रामदशृण्वन्नश्नन् पिबन्नास्तैव मन उदक्राममीलित इवाश्नन् पिबन्नास्तैव प्राण उदक्रामत् तत् प्राण उत्क्रान्तेऽपद्यत"(१०) इति। 'वाक्चक्षुःश्रोत्रमनसामेकैकस्मिन् 'उत्क्रान्ते सति तत्तदिन्द्रियसाध्यव्यापारमात्रं लुप्यते। न तु शरीरं पतति किन्त्वन्नपाने स्वीकुर्वन्यथापूर्वमभवदेव 'मीलित इव', इत्यस्यायमर्थः। यथा मुग्धश्चक्षुर्मीलनोन्मीलनमात्रं कुर्वन्विषयविवेकमकुर्वन् 'आस्ते'। तद्वदयं देह इति। 'तत्' शरीरं, 'प्राण उत्क्रान्ते', सति पतितमभूत्। नत्वश्नाति नापि पिबति॥

तदेव पतनं शरीरशब्दनिर्वचनेन प्रपञ्चयति। (११)"तदशीर्यताशारीती३ तच्छरीरमभवत्तच्छरीरस्य शरीरत्वं"(११) इति। यत्पतितं शरीरं तच्छीर्णमभूत्। अवयवविश्लेषेण विनष्टमभूत्। अतो लोके प्राणरहितं शरीरं दृष्ट्वा एतत्'अशारि' शीर्णमभूत्, 'इति' एवं, वर्णयन्ति। तत्प्रसिद्धिद्योतनाय श्रुतिः।

'तत्', च शीर्णत्वयोग्यत्वात् 'शरीरं', अभूत्। 'तत्' तस्मात् शीर्णत्वनिर्वचनादेव, 'शरीरनाम सर्वैर्व्यवह्रियते ॥

एतन्नामनिर्वचनवेदनं प्रशंसति। (१२)"शीर्यते ह वा अस्य द्विषन्पाप्मा भ्रातृव्यः परास्य द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद"(१२) इति। 'यः' पुमान्, 'एवं' शरीरं, विदित्वा उपास्ते, 'अस्य' वेदितुः, 'द्वेषं कुर्वन् 'पापरूपः शत्रुः, विशीर्णो भवति। कथञ्चिदविशीर्णत्वेऽपि 'पराभवति' तिरस्कृतो भवति ॥

प्राणोत्क्रमणस्य देहपतनहेतुत्वमभिधाय प्राणप्रवेशस्य देहो-त्थापनहेतुत्वमभिधातुं पुनरपि संवादं समयबन्धञ्च दर्शयति। (१३)"ता अहिंसन्तैवाहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवन् हन्तेदं पुनः शरीरं प्रविशाम तद्यस्मिन्नः प्रपन्न इदं शरीरमुत्था-स्यति तदुक्थं भविष्यतीति"(१३) इति। 'अहिंसन्तैव', न तु स्पर्धायाउपरताः। 'प्रपन्ने' प्रविष्टे। अन्यत् पूर्ववद्व्याख्येयं ॥

प्राणप्रवेशेन देहस्योत्थानं दर्शयति। (१४)वाक् प्राविशद्-शयदेव चक्षुः प्राविशदशयदेव श्रोत्रं प्राविशदशयदेव मनः प्राविशदशयदेव प्राणः प्राविशत्तत् प्राणे प्रपन्न उदतिष्ठत्तदुक्थ-मभवत्"(१४) इति। 'अशयदेव' शयानमेवाभूत्, न तूत्थितम-भूत्। 'तत्' प्राणस्वरूपं, उत्थानहेतुत्वात् 'उक्थं', अभूत् ॥

प्राणस्योत्थापनहेतुत्वलक्षणमुक्थत्वं प्रसिद्धमिति प्लुतप्रयो-गेण विशदयति। (१५)"तदेतदुक्थां३ प्राण एव"(१५) इति। चक्षुरादीनामुत्थानहेतुत्वाभावात् उक्थत्वाभावार्थः 'एव' कारार्थः ॥

यदर्थं प्राणप्रवेशप्राणसंवादावुपन्यस्तौ तदिदानीं विधत्ते।

(१६)"प्राण उक्थमित्येव विद्यात्"(१६) इति। निष्केवल्याख्ये शस्त्रे 'प्राणदृष्टिं कुर्य्यादेवेत्यर्थः॥

एतस्यार्थस्य दाढर्य्यार्थं चक्षुरादिदेवकर्त्तृकां प्राणस्तुतिं दर्शयति। (१७)"तं देवा अब्रुवन् त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं स्मस्त्वमस्माकमसीति(१७)" इति। 'तं' प्राणं, चक्षुराद्याः 'देवाः', अनेन प्रकारेणोक्तवन्तः, हे प्राण 'त्वं', देहस्योत्थानहेतुत्वात् 'उक्थस्वरूपं' 'असि'। अतः सर्वदेहव्यापारस्य त्वदधीनत्वात् 'इदं सर्वं' जगत्, 'त्वं', एव 'असि'। 'वयन्तव', भृत्याः 'स्मः', 'त्वं', च 'अस्माकं', स्वामी 'असि'। 'इति'शब्दः स्तुतिसमाप्त्यर्थः॥

उक्तार्थदाढर्य्याय मन्त्रमुदाहरति। (१८)"तदप्येतदृषिणोक्तं त्वमस्माकं तव स्मसीति"(१८) इति। यदेतत् प्राणस्तुतिरूपं, ब्राह्मणेनोक्तं 'तदेतत्', 'ऋषिणा', मन्त्रेण, 'अपि उक्तं'। 'त्वमस्माकं' इत्यादिः प्रतीकदर्शनार्थो मन्त्रस्य चरमः पादः। मन्त्रस्तु संहितायामेवमाम्नातः। त्वयेदिन्द्र युजा वयं प्रतिब्रुवीमहि स्पृधः। त्वमस्माकं तव स्मसीति*। हे इन्द्र प्राणरूप परमेश्वर वयं चक्षुराद्याः प्राणाः, त्वयेत् त्वयैव सह युजा योगेन रसयोगेन ताम्रमिव त्वद्योगेन लब्धवीर्याः सन्तः स्पृधः स्पर्द्धाहेतून् शत्रून् प्रतिब्रुवीमहि प्रतिवक्ष्यामो निराकरिष्यामः। अतस्त्वमस्माकं स्वामी वयञ्च तव त्वदीया भृत्याः स्मसि भवामः। तमेतं मन्त्रमुपलक्षयितुं त्वमस्माकमित्यादिपाद उदाहृतः॥ ४॥

---

* ऋग्वेदे म० ८, सू०९२, ऋ०३२।

(१)तं देवाः प्राणयन्त स प्रणीतः प्रातायत प्रातायीती
३तत् प्रातरभवत् समागादिती३ तत्सायमभवदहरेव
प्राणो रात्रिरपानः(१) (२)वागग्निश्चक्षुरसावादित्यश्चन्द्रमा
मनो दिशः श्रोत्रं स एष प्रहितां संयोगोऽध्यात्ममिमा
देवता अद उ आविरधिदैवतमित्येतत्तदुक्तं भवति(२) (३)
एतद्ध स्म वै तद्विद्वानाह हिरण्यदन्वैदो न तस्येशे यं मह्यं
न दद्युरिति प्रहितां वा अहमध्यात्मं संयोगं निविष्टं वेदै
तद्ध तत्(३) (४)अनीशानानि ह वा अस्मै भूतानि बलिं
हरन्ति य एवं वेद(४) (५)तत्सत्यं सदिति प्राणस्तीत्यन्नं
यमित्यसावादित्यस्तदेतत् त्रिवृत् त्रिवृदिव वै चक्षुः
शुक्लं कृष्णङ्लोनिकेति(५) (६)स यदि ह वा अपि मृषा
वदति सत्यं हैवास्योदितं भवति य एवमेतत्सत्यस्य सत्यत्वं
वेद(६) ॥ ५ ॥

ऐतरेयारण्यकभाष्यम् ।

अहमुक्थमस्मीति विद्यादित्युपासनादौ सर्वेष्वपि वक्ष्यमाण-गुणेष्वनुवृत्त्यर्थं योऽयमहङ्ग्रहविधिरुक्तः स एव तामनुवृत्तिं दर्शयितुं पुनरपि प्राण उक्थमित्येव विद्यादित्यनूदितः। तत्रोक्थे यस्य प्राणस्य दृष्टिविधिः प्रतीयते तस्य प्राणस्य कालात्मकत्ववागादिदेवतात्मकत्वसत्यरूपत्वगुणाः ध्यानार्थं विधातव्याः। तत्राहोरात्ररूपकालात्मकत्वं विधत्ते। (१)"तं देवाः

प्राणयन्त स प्रणीतः प्रातायत प्रातायीतीं३ तत् प्रातरभवत्स-मागादितीं३ तत्सायमभवदहरेव प्राणो रात्रिरपानः"(१) इति। 'तं' उक्थे ध्यातव्यं प्राणं, 'देवाः' वागाद्याः, 'प्राणयन्त' त्वमस्माकं तव स्मसीत्यादिस्तुत्वा प्रकर्षमुत्साहं प्रापितवन्तः। 'सः' च प्राणः, 'प्रणीतः' देवैरुत्साहं प्रापितः सन्, 'प्रातायत' प्रकर्षेण विस्तृतोऽभूत्। जागरणकाले स्वभृत्यरूपान् वागादीन् तत्तद्गोलकेषु प्रकर्षेण प्रेरितवान्। अयमेव प्राणस्य विस्तारः 'तं', दृष्ट्वा वागादि'देवाः', मनुष्या वा 'प्रातायि', 'इति', एवं, उक्तवन्तः, प्रकर्षेण विस्तृतोऽभूदिति तस्य शब्दस्यार्थः। श्रुतिः प्रसिद्ध्यर्था। रात्रावपनीतायां प्रभाते जागरणार्थं वागादीनां गोलकेषु प्रसरणं सर्वलोकप्रसिद्धं। यस्मात् 'प्रातायि', इत्युक्तवन्तः तस्मादयं वागादिप्रसरणपूर्वको जागरणकालः 'प्रातः'-शब्दवाच्योऽभूत् 'प्रातायि प्रातः' इत्यनयोः शब्दयोरक्षरसाम्यात्। 'सः' प्राणः, पुनरपि रात्रौ सुषुप्त्यर्थं वागादिप्रसरं संहृतवान्, तं संहारं दृष्ट्वा 'समागात्', 'इति', उक्तवन्तः, सङ्कोचं प्राप्तवानिति तस्यार्थः। स कालः 'सायं'शब्दवाच्योऽभूत् 'समागात्सायं', इत्यनयोरक्षरसाम्यात्। तस्य च प्राणस्य दिवसे वागादिप्रसारणरूपजागरणावस्थानिष्पादकः 'प्राण'शब्दवाच्य एकोव्यापारः। तथा रात्रौ सुषुप्त्यर्थं वागादिसंहाररूपः 'अपान'शब्दवाच्यो द्वितीयो व्यापारः तावेतौ प्राणापानव्यापारावहोरात्ररूपत्वेन ध्येयौ॥

कालात्मकत्वमुक्त्वा देवात्मकत्वं दर्शयति। (२)"वागग्निश्चक्षुरसावादित्यश्चन्द्रमा मनो दिशः श्रोत्रं स एष प्रहितां संयो-

गोऽध्यात्ममिमा देवता अद उ आविरधिदैवतमित्येतत्तदुक्तं भवति" (२)इति। 'वागादीन्द्रियाभिमानिनीनां 'अग्न्यादि-देवतानां वागादिरूपत्वं अग्निर्वाग्भूत्वा मुखं प्राविशदित्यादिना वक्ष्यते। अतः प्राणभृत्यरूपा उपासकस्य वागादयोऽग्न्यादि-रूपतया ध्यातव्याः। तस्य वागादिध्यानविधिवाक्यस्य तात्पर्यं 'स एषः' इत्यादिना स्पष्टीक्रियते। या एता अग्न्या-दयो 'देवताः', सन्ति तासां 'प्रहिता' प्रकर्षेण हितानां देवलोक-गतेषु स्वस्वस्थानेषु प्रसारणेन विस्रम्भेणावस्थितानां, 'अध्यात्मं' पुरुषशरीरे वागादीन्द्रियेषु यः प्रवेशः, 'स एषः', 'संयोगः' सङ्कोचरूपेण वागादितादात्म्यं। तथा 'अधिदैवतं', 'अद उ' शास्त्रप्रसिद्धं, स्वस्वस्थानेष्ववस्थानन्तु 'आविः' प्रकटीभावः। 'इत्ये-तत्' अर्थजातं, 'तदुक्तं भवति' तेन वागग्निरित्यादिवाक्येनाभि-हितं भवति। अग्न्यादीनां शरीरे सङ्कोचो देवलोके विकाश इत्येतादृशमन्तात्पर्यं श्रुत्या दर्शितं॥

प्राणस्य वागग्न्यादिरूपत्वध्यानं प्रशंसितुं कस्यचिन्महर्षे-र्वाक्यमुदाहरति। (३)"एतद्ध स्म वै तद्विद्वानाह हिरण्यदन्वैदो न तस्येशे यं मह्यं न दद्युरिति प्रहितां वा अहमध्यात्मं संयोगं निविष्टं वेदैतद्ध तत्" (३)इति। हिरण्मया दन्ता यस्य महर्षेः सोऽयं 'हिरण्यदन्'। विदनामकस्य महर्षेः पुत्रः 'वैदः', स च 'तदेतत्' प्राणरूपं, 'विद्वान्' उपासीनः, कस्मिंश्चित् प्रसङ्गे इदं वाक्यं 'आह'। निपातत्रयसमुदायः प्रसिध्यर्थः। किं तद्वाक्यमिति चेत् तदुच्यते। 'अहं' वैदाख्यो महर्षिः, 'प्रहितां वै' प्रहितानां द्युलोके प्रसारणेनावस्थितानामग्न्यादीनामेव, 'अध्यात्मं', 'निविष्टं'

चोस्य वस्त इमा एव दिशः(९) (१०)आवरीवर्त्ति भुवनेष्व-न्तरित्येष ह्यन्तर्भुवनेष्वावरीवर्त्ति(१०)(११)अथो आवृतासो-ऽवतासो न कर्तृभिरिति(११) (१२)सर्वं ह्येदं प्राणेना-वृतं(१२) (१३)सोऽयमाकाशः प्राणो न वृहत्या विष्टब्धस्त-द्यथायमाकाशः प्राणेन वृहत्या विष्टब्ध एवं सर्वाणि भूतान्यापिपीलिकाभ्यः प्राणेन वृहत्याविष्टब्धानीत्येव विद्यात्(१३) ॥ ६ ॥

ऐतरेयारण्यकभाष्यम् ।

गुणान्तरं विधत्ते । (१)"तस्य वाक्तन्तिर्नामानि दामानि तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितं सर्वं ह्येदं नामनीं३ सर्वं वाचाभिवदति"(१) इति। यथा बहुबली-वर्द्दस्वामिनो वणिजस्तद्बन्धनार्था काचिद्रज्जुः शङ्कुद्वये बध्वा प्रसारिता भवति। तस्यां रज्जौ प्रत्येकं बन्धनाय पृथक् पाशा भवन्ति। एवं* 'तस्य' प्राणस्य, 'वाक्तन्तिः' शब्दसामान्यं प्रसारितदीर्घरज्जुस्थानीयं, देवदत्तयज्ञदत्त'नामानि', पृथक्-पृथग्बन्धनहेतुदामस्थानीयानि, 'तत्' तथासति, 'अस्य' प्राणस्य, सम्बन्धिन्या 'वाक्सामान्यरूपया दीर्घ'तन्त्या', नामविशेषरूपै'र्दामभिः', 'सर्वमिदं' स्थावरजङ्गमरूपं जगत्, 'सितं' बद्धमिति ध्यायेत् । 'सर्वं' जगदभिधेयरूपं, अभिधा-यके 'नामनि', व्यवस्थितमिति लोकप्रसिद्धमेतत् । अतएव 'सर्वं' वस्तु उद्दिश्य, सर्वोऽपि पुरुषः 'वाचा' तत्तन्नाम्ना, 'अभि

* तथेति क०, ग० च ।

वदति'। यदीयेन नाम्ना पुरुषमाकारयति स एव पुरुषो रज्जुबन्धनेनाकृष्ट इव सहसा आगच्छति ॥

एतज्ज्ञानस्य फलमाह। (२)"वहन्ति ह वा एनन्तन्तिसम्बद्धा य एवं वेद"(२) इति। बलीवर्द्दा इव वागाख्य'तन्तिसम्बद्धाः', सर्वे प्राणिनः, 'एनं' उपासकं प्रति, 'वहन्ति' पूजाद्रव्यमानयन्ति ॥

पुनरपि गुणान्तरं विधत्ते। (३)"तस्योष्णिग्लोमानि त्वग्गायत्री त्रिष्टुप्मांसमनुष्टुप् स्नावान्यस्थि जगती पङ्क्तिर्मज्जा प्राणो बृहती स छन्दोभिश्छन्नोयच्छन्दोभिश्छन्नस्तस्माच्छन्दांसीत्याचक्षते"(३) इति। 'तस्य' ध्येयस्य प्राणदेवस्य, गायत्र्यादिच्छन्दोमयेन देहेनाच्छादितत्वं ध्यायेत्। 'उष्णिगादीनां छन्दसां 'लोमादिरूपदेहावयवत्वं ध्यातव्यं। 'बृहतीच्छन्दसः 'प्राणवायुरूपावयवत्वं न विरुद्धं। जङ्गमस्य वायोरत्र प्राणशब्देन विवक्षितत्वात्। ध्यातव्यस्तु प्राणश्चेतनदेवतारूप इति विशेषः। यस्मादयं प्राणाख्यो देवो गायत्र्यादिभिः 'छन्दोभिः', 'छन्नः' आच्छादितः, भवति। 'तस्मात्' आच्छादनहेतुत्वात्, गायत्र्यादीनां 'छन्दस्त्वं' द्रष्टव्यं ॥

छन्दोमयदेहावयवत्वे ध्यानस्य फलमाह। (४)"छादयन्ति ह वा एनं छन्दांसि पापात् कर्मणो यस्यां कस्याञ्चिद्दिशि कामयते य एवमेतच्छन्दसां छन्दस्त्वं वेद"(४) इति। 'यः' पुमान्, प्राणस्याच्छादनाद् गायत्र्यादीनां 'छन्दस्त्वं', इति जानाति। स पुमान् 'यस्यां कस्याञ्चिद्दिशि', वर्त्तमानः किञ्चित्पापं कर्त्तुं 'कामयते', तस्मात् 'पापात् कर्मणः', 'एनं'

उपासकं, गायत्र्यादीनि 'छन्दांसि', 'छादयन्ति' पापं यथा न स्पृशति तथा तं गोपायन्तीत्यर्थः ॥

यथोक्तप्राणमहिमप्रतिपादकं मन्त्रमुदाहरति । (५)"तदुक्तमृषिणा"(५) इति । स च मन्त्रः संहितायां एवमाम्नातः । "अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तं । स सध्रीचीः स विषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः"इति* । अस्य मन्त्रस्य द्रष्टा दीर्घतमानामकः कश्चिदृषिर्मन्त्ररूपं वाक्यं ब्रूते । अहमृषिः प्राणं देवमपश्यं साक्षात् कृतवानस्मि । कीदृशं प्राणं, गोपाम् इन्द्रियाणां रक्षकं, अनिपद्यमानं निपदनं विनाशस्तद्रहितं, पथिभिर्नानाविधैर्नाडीमार्गैराचरन्तञ्च पराचरन्तञ्च । प्राणवायुर्हि मुखनासिकया द्वारा क्षणे क्षणे देहमध्यं समागच्छत्यपि तदानीमेव पुनर्निर्गच्छत्यपि । गमनागमनयोः परस्परसमुच्चयार्थौ असकृदावृत्तिसमुच्चयार्थौ वा 'च'कारौ द्रष्टव्यौ । स च प्राणः स्वयमध्यात्मं वायुरूपेण वर्त्तमानोऽप्यधिदैवमादित्यरूपेणावस्थितः सन् सध्रीचीश्च विषूचीश्च द्विविधा अपि मुख्यदिशोऽवान्तरदिशश्च वसान आच्छादयन् व्याप्नुवन् वर्त्तते । भुवनेष्वन्तः सर्वेषु लोकेषु मध्ये आवरीवर्ति पुनः पुनरावृत्य वर्त्तत इति मन्त्रस्य योजना† ॥

तस्य मन्त्रस्य प्रथमपादे पूर्वभागं व्याचष्टे । (६)"अपश्यं गोपामित्येष वै गोपा एष हीदं सर्वं गोपायति"(६) इति । आयुर्हेतुत्वात् प्राणस्य रक्षकत्वं प्रसिद्धं । तच्च कौषीतकिन आमनन्ति । यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुरिति ॥

* ऋग्वेदे म०१, सू०१६४, ऋ०३१ । † योजनान्तस्थार्थं इति ग० ।

उत्तरभागं व्याचष्टे। (७)"अनिपद्यमानमिति न ह्येष कदाचन संविशति"(७) इति। संवेशनं व्यापारोपरमः। यथा सुषुप्तौ वागादीनां व्यापार उपरतो भवति, न त्वेवं प्राणस्य। अतएव सुषुप्तिप्रकरणे श्रुत्यन्तरं पठ्यते। प्राणाग्नय एवैतस्मिन् पुरे जाग्रतीति॥

द्वितीयपादं व्याचष्टे। (८)"आ च परा च पथिभिश्चरन्त-मित्या च ह्येष परा च पथिभिश्चरति"(८) इति। प्राणस्य प्रतिक्षणं गमनागमनयोः सर्वैरनुभूयमानत्वात् प्रसिद्धिद्योतनार्थः 'हि' शब्दः॥

तृतीयपादं व्याचष्टे। (९)"स सध्रीचीः स विषूचीर्वसान इति सध्रीचीश्च ह्येष विषूचीश्च वस्त इमा एव दिशः"(९) इति। सहाञ्चन्ति चतुष्कोणरूपेण परस्परं संश्लिष्टा वर्त्तन्त इति प्राच्यादयश्चतस्रः 'दिशः', 'सध्रीच्यः, विष्वगञ्चन्ति परस्परं वियुज्य वर्त्तन्त इत्याग्नेय्याद्या विदिशः 'विषूच्यः, 'इति' एवं, एताः, 'दिश एव', शब्दद्वयेनोच्यन्ते। यद्यप्यादित्य एव स्वप्रकाशेन एता दिश आच्छादयति न तु प्राणस्तथापि नास्ति विरोधः। आदित्यस्य वाह्यदेशवर्त्तिप्राणरूपत्वात्। आदित्यो ह वै वाह्यः प्राण उदयत्येष ह्येनं चाक्षुषप्राणमनुगृह्णान इति श्रुत्यन्तरात्॥

चतुर्थपादार्थस्यादित्यरूपेण परिवर्त्तमानस्य प्रसिद्धिं दर्शयति। (१०)"आवरीवर्त्ति भुवनेष्वन्तरित्येष ह्यन्तर्भुवनेष्वावरीवर्त्ति" (१०) इति॥

प्राणमहिमप्रतिपादकं मन्त्रान्तरं दर्शयितुं तस्य मन्त्रस्य

तृतीयपादं प्रतीकत्वेनोदाहरति। (११)"अथो आहतासोऽवतासो न कर्टभिरिति"(११) इति। 'अथो'शब्दो मन्त्रान्तरसमुच्चयार्थः। तच्च मन्त्रान्तरं संहितायामेवमाम्नातं। अप्रच्छितं वसु विभर्षि हस्तयोरषाह्लं सहस्तन्वि श्रुतो दधे। आवृतासोऽवतासो न कर्टभिस्तनूषु ते क्रतव इन्द्र भूरयः इति*। हे इन्द्र प्राणादिरूप परमेश्वर अप्रच्छितं अनुपहिंसितं अप्रहीनं वा वसु कर्मफलाख्यं धनं हस्तयोः अधिदैवन्ते हस्तसदृशयोर्दक्षिणोत्तरायणयोः विभर्षि धारयसि। अध्यात्मञ्च जीवनादिलक्षणं कर्मफलं हस्तसदृशयोः प्राणापानयोर्धारयसि। किञ्च सहो बलं त्वदीयम् अषाह्लं अन्यैरतिरस्कार्यं। अतः कर्मफलं धारयितुं समर्थोऽसि। किञ्च तन्वि तनौ स्वात्मनः शरीरे श्रुतः श्रवणादिज्ञानानि दधे धारयसि। अतोऽनुष्ठानप्रयासं ज्ञात्वा तदनुरूपं फलं ददासीत्यर्थः। किञ्च कर्टभिर्भूमौ हिरण्यनिधिप्रक्षेपकारिभिः अवतासो न निधिस्थापनार्थं खाता अवटा गर्त्ता इव आहतासः दिशः सर्वा अपि त्वदीयप्रकाशेनाच्छादिताः। निधिस्थापका हि निधिङ्गर्त्ते निक्षिप्य तं गर्तं मृत्पाषाणादिभिराच्छादयन्ति। एवं त्वमपि त्वदीयरश्मिभिः सर्वमाच्छादयसि। तादृशस्य ते तव तनूषु शरीरेषु क्रतवः सङ्कल्पविशेषाः फलप्रदा भूरयो बहवो विद्यन्ते। यो यत् फलमिच्छति तस्य तत् फलमस्त्विति एवं सङ्कल्पमात्रेणैव ददासीत्यर्थः॥

उदाहृते मन्त्रपादे आहतास इति पदं व्याचष्टे। (१२)"सर्वं

---

* ऋग्वेदे म०१, सू०५५, ऋ० ८१।

हीदं प्राणेनावृतम्"(१२) इति। देवतिर्यङ्मनुष्यादिकं 'इदं सर्वं" देहजातं, 'प्राणवायुना व्याप्तमित्येतत् प्रसिद्धं ॥

गुणान्तरं विधत्ते। (१३)"सोयमाकाशः प्राणेन बृहत्या विष्टब्धस्तद्यथायमाकाशः प्राणेन बृहत्या विष्टब्ध एवं सर्वाणि भूतान्यापिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानीत्येव विद्यात्" (१३)इति। सर्वप्राण्याधारभूतो यः 'आकाशः', 'सोऽयं', 'बृहतीच्छन्दोरूपेण 'प्राणेन', 'विष्टब्धः' विशेषेण स्थापितः, इति ध्यायेत्। तत ऊर्ध्वंतदृष्टान्तेन 'पिपीलिकापर्यन्ताः 'सर्वे प्राणिनो बृहतीच्छन्दोरूपेण 'प्राणेन', विधृतानीत्येवं ध्यायेत्॥ ६॥

(१)अथातो विभूतयोऽस्य पुरुषस्य(१) (२)तस्य वाचा सृष्टौ पृथिवी चाग्निश्चास्यामोषधयो जायन्तेऽग्निरेनाः स्वदयतीदमाहरतेदमाहरतेत्येवमेतौ वाचं पितरं परिचरतः पृथिवी चाग्निश्च(२) (३)यावदनु पृथिवी यावदन्वग्निस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते पृथिव्याश्चाग्नेश्च य एवमेतां वाचो विभूतिं वेद(३) (४)प्राणेन सृष्टावन्तरिक्षञ्च वायुश्चान्तरिक्षं वा अनुचरन्त्यन्तरिक्षमनुशृण्वन्ति वायुरस्मै पुण्यं गन्धमावहत्येवमेतौ प्राणं पितरं परिचरतोऽन्तरिक्षञ्च वायुश्च यावदन्वन्तरिक्षं यावदनु वायुस्तावानस्य लोको भवति नास्यतावल्लोको जीर्यते यावदेतयोर्न जीर्यतेऽन्तरिक्षस्य च वा-

योऽस्य य एवमेतां प्राणस्य विभूतिं वेद(४) (५)चक्षुषा सृष्टौ द्यौश्चादित्यश्च द्यौर्हास्मै वृष्टिमन्नाद्यं सम्प्रयच्छत्यादित्योऽस्य ज्योतिः प्रकाशं करोत्येवमेतौ चक्षुः पितरं परिचरतो द्यौश्चादित्यश्च यावदनु द्यौर्यावदन्वादित्यस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते दिवश्चादित्यस्य च य एवमेतां चक्षुषो विभूतिं वेद(५) (६)श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च दिग्भ्यो हैनमायन्तीं३ दिग्भ्यो विशृणोति चन्द्रमा अस्मै पूर्वपक्षापरपक्षान्विचिनोति पुण्याय कर्मण एवमेते श्रोत्रं पितरं परिचरन्ति दिशश्च चन्द्रमाश्च यावदनु दिशो यावदनु चन्द्रमास्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यते दिशाञ्च चन्द्रमसश्च य एवमेतां श्रोत्रस्य विभूतिं वेद(६) (७)मनसा सृष्टा आपश्च वरुणश्चापो हास्मै श्रद्धां सन्नमन्ते पुण्याय कर्मणे वरुणोऽस्य प्रजां धर्मेण दाधारैवमेते मनः पितरम्परिचरन्त्यापश्च वरुणश्च यावदन्वापो यावदनु वरुणस्तावानस्य लोको भवति नास्यतावल्लोको जीर्यते यावदेतेषां न जीर्यते पाञ्चवरुणस्य च य एवमेतां मनसो विभूतिं वेद(७) ॥ ७ ॥

ऐतरेयारण्यकभाष्यम् ।

गुणान्तराणि ध्यातव्यानि प्रतिजानीते । (१)"अथातो विभू-

तयोऽस्य पुरुषस्य"(१) इति। 'अथ' पूर्वोक्तप्राणगुणध्यानानन्तरं, यतोऽयमेव महान् प्रजापतिरिति पूर्वत्र प्रतिज्ञातं पुरुषस्य प्रजापतित्वं पृथिव्यादिस्रष्टृत्वेनोपपादनीयं, फलान्तराय तत्तत्स्रष्टृत्वरूपगुणा अपि विधातव्याः। 'अतः' कारणात्, 'अस्य', पुरुषस्य, 'विभूतयः' पृथिव्यादिस्रष्टृत्वरूपाख्यैश्वर्याणि। उच्यन्त इति शेषः॥

तत्र प्रथमां विभूतिमाह। (२)"तस्य वाचा सृष्टौ पृथिवी चाग्निश्चास्यामोषधयो जायन्तेऽग्निरेनाः स्वदयतीदमाहरतेदमाहरतेत्येवमेतौ वाचं पितरं परिचरतः पृथिवी चाग्निश्च"(२) इति। 'तस्य' यथोक्तगुणविशिष्टप्राणध्यातुः पुरुषस्य प्रजापतिरूपस्य, 'वागिन्द्रियेण 'पृथिव्यग्निश्च', इत्युभौ 'सृष्टौ', इति ध्यायेत्। यदि पुरुषरूपं पितरं प्रति तावुभौ कथमुपकारं कुरुत इति पृच्छेत्, सोऽयमुपकार उच्यते। 'अस्यां' पृथिव्यां, व्रीहियवाद्योषधयः', उत्पद्यन्ते, 'अग्निश्च', 'एनाः' उत्पन्ना ओषधीः, 'स्वदयति' भक्ष्यभोज्यादिपाकेन स्वादूकरोति। अत एव लोके कस्यांचित्पङ्क्तौ उपविश्य भुञ्जानाः पुरुषाः परिवेष्टन् प्रति स्वादुतमं पक्वं 'इदं' भक्ष्यं, 'आहरत', 'इदं' च भोज्यं, 'आहरतेति', पुनः पुनर्याचन्ते। अनेन प्रकारेण 'एतौ' पृथिव्यग्नी, पुरुषवाग्रूपं 'पितरं', प्रत्युपकुरुतः॥

एतद्विभूतिध्यानस्य फलमाह। (३)"यावदनु पृथिवी यावदन्वग्निस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते पृथिव्याश्चाग्नेश्च एवमेतां वाचो विभूतिं वेद"(३) इति। 'यावत्' वस्तुजातं, 'अनु'लक्ष्य 'पृथिवी',

प्रवृत्ता। 'अग्निः', च 'यावत्' भोग्यजातं, 'अनु'लक्ष्य प्रवर्त्तते, 'तावान्' वस्तुविशिष्टो देशविशेषः, 'अस्य' वाग्विभूत्युपासकस्य, 'लोकः' भोगभूमिः, 'भवति'। किञ्च पृथिव्यग्न्योर्भोगप्रदेशो यावन्तं कालं 'न', जीर्णो भवति, तावन्तं कालमुपासकस्यापि भोगदेशः 'न जीर्यते'॥

द्वितीयां विभूतिमाह। (४)"प्राणेन सृष्टावन्तरिक्षञ्च वायुश्चान्तरिक्षं वा अनुचरत्यन्तरिक्षमनु शृण्वन्ति वायुरस्मै पुण्यं गन्धमावहत्येवमेतौ प्राणं पितरं परिचरतोऽन्तरिक्षञ्च वायुश्च यावदन्वन्तरिक्षं यावदनु वायुस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यतेऽन्तरिक्षस्य च वायोश्च य एवमेतां प्राणस्य विभूतिं वेद"(४) इति। नासिकायामवस्थितेन घ्राणेन्द्रियरूपेण 'प्राणेन', 'अन्तरिक्षवायू 'सृष्टौ', इति ध्यायेत्। सर्वे प्राणिनः 'अन्तरिक्षं,' एव 'अनु'सृत्य सञ्चारं कुर्वन्ति। दूरदेशे प्रोक्तां वार्त्तामपि 'शृण्वन्ति', न हि मूर्त्तेन कुड्यपर्वतादिनावरुद्धे देशे सञ्चारो वार्त्ताश्रवणं वा सम्भवति। सोऽयमन्तरिक्षकृत उपकारः। 'वायुश्च' चम्पककेतक्यादिगतं 'पुण्यं गन्धं', आनयति। दुर्गन्धानयनन्तु न वायुस्वभावकृतं नापि तदभिज्ञानामिन्द्रियस्वभावकृतं। किन्तु आसुरपापवेधकृतमिति छान्दोग्यबृहदारण्यकयोः प्रदर्शितम्। तदिदं पुण्यगन्धानयनं वायुकृत उपकारः। अन्यत् पूर्ववद्व्याख्येयं॥

तृतीयां विभूतिमाह। (५)"चक्षुषा सृष्टौ द्यौश्चादित्यश्च द्यौर्ह्यस्मै वृष्टिमन्नाद्यं सम्प्रयच्छत्यादित्योऽस्य ज्योतिः प्रकाशं करोत्येवमेतौ चक्षुः पितरं परिचरतो द्यौश्चादित्यश्च यावदनु-

द्यौर्यावदन्वादित्यस्तावानस्य लोको भवति नास्य तावल्लोको जीयते यावदेतयोर्नजीयते दिवश्चादित्यस्य च य एवमेतां चक्षुषो विभूतिं वेद"(५) इति। द्युलोको हि मेघं सम्पाद्य वृष्टिद्वारेण व्रीह्याद्यन्नं 'प्रयच्छति'। 'आदित्यः', तु स्वकीयं 'ज्योतिः', प्रसार्य, वस्तूनां 'प्रकाशं' अभिव्यक्तिं, 'करोति'। अन्यत् पूर्ववत्॥

चतुर्थीं विभूतिमाह। (६)"श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च दिग्भ्यो हैनमायन्तीः२ दिग्भ्यो विशृणोति चन्द्रमा अस्मै पूर्वपक्षापरपक्षान्विचिनोति पुण्याय कर्मण एवमेते श्रोत्रं पितरं परिचरन्ति दिशश्च चन्द्रमाश्च यावदनु दिशो यावदनु चन्द्रमास्तावानस्य लोको भवति नास्य तावल्लोको जीयते यावदेतेषां न जीयते दिशाञ्च चन्द्रमसश्च य एवमेतां श्रोत्रस्य विभूतिं वेद"(६) इति। यः 'एनं' उपासकं पुरुषं, प्रति 'दिशां सकाशात् सेवकाः पुरुषा भोग्यवस्तूनि चागच्छन्ति, तथा मूर्त्तद्रव्यव्यवधानाभावे सति 'दिशां सकाशात् दूरे प्रोक्तमपि वचनं 'विशेषेण 'शृणोति'। 'चन्द्रमाः', तु अस्य पुरुषस्य दर्शपूर्णमासादिपुण्यकर्मार्थं शुक्लकृष्णपक्षान् बहुविधमासगतान् 'विशेषेण सम्पादयति। अन्यत् पूर्ववत्॥

पञ्चमीं विभूतिमाह। (७)"मनसा सृष्टा आपश्च वरुणश्चापो हास्मै श्रद्धां सन्नमन्ते पुण्याय कर्मणे वरुणोऽस्य प्रजां धर्मेण दाधारैवमेते मनः पितरं परिचरन्त्यापश्च वरुणश्च यावदन्वापो यावदनु वरुणस्तावानस्य लोको भवति नास्य तावल्लोको जीयते यावदेतेषां न जीयतेऽपाञ्च वरुणस्य च य एवमेतां मनसो

विभूतिं वेद"(७) इति। तड़ागपुष्करनद्यादिषु वर्त्तमाना 'आपः', स्नानाचमनमार्जनद्वारेण 'अस्य' उपासकस्य, श्रौतस्मार्त्तपुण्यकर्मानुष्ठानाय 'श्रद्धां' आस्तिक्यबुद्धिं, उत्पादयन्ति। 'वरुणः', तस्य पुत्रादिरूपां 'प्रजां', पापप्रवृत्तेर्निवार्य 'धर्मे' प्रवर्त्तयति। अन्यत् पूर्ववत्। ननु हृदयात्मनो मनसश्चन्द्रमा इत्येवमुपरिष्टाच्चन्द्रमसो मनःकार्यत्वं वक्ष्यति। अत्र तु श्रोत्रेण सृष्टा दिशश्चन्द्रमाश्च इति श्रोत्रकार्यत्वं कथमुच्यत इतिचेन् नायं दोषः। अस्याः सृष्टेरुपासनार्थत्वात्। न खलु यथावस्त्वेवोपासितव्यमिति कश्चिन्नियमोऽस्ति, किन्तु यथावचनमेवोपासितव्यमित्येतावानेव नियमः॥ ७॥

(१)आपाः इत्याप इति तदिदमाप एवेदं वै मूलमदस्तूलमयं पितैते पुत्रा यत्र ह क्व च पुत्रस्य तत्पितुर्यत्र वा पितुस्तद्वा पुत्रस्येत्येतत्तदुक्तं भवति(१) (२)एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेय आहं मान्देवेभ्यो वेद ओमहदेवान्वेदेतःप्रदाना ह्येत इतः सम्भता इति(२) (३)स एष गिरिश्चक्षुः श्रोत्रं मनो वाक् प्राणस्तं ब्रह्मगिरिरित्याचक्षते(३) (४)गिरति ह वै द्विषन्तं पाप्मानं भ्रातृव्यं परास्य द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद(४) (५) स एषोऽसुः स एष प्राणः स एष भूतिश्चाभूतिश्च(५) (६)तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसिति(६) (७)अभूतिरि-

त्यसुरास्ते ह पराबभूवुः(७) (८)भवत्यात्मना परास्य द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद(८) (९)स एष मृत्युश्चैवामृतं च(९) (१०)तदुक्तमृषिणा(१०) (११)अपाङ् प्राङेति स्वधया गृभीत इत्यपानेन ह्ययं यतः प्राणो न पराङ् भवति(११) (१२)अमर्त्यो मर्त्येना सयोनिरित्येतेन हीदं सर्वं सयोनि मर्त्यानि हीमानि शरीराणी३ अमृतैषा देवता(१२) (१३)ता शश्वन्ता विषूचीना वियन्ता न्यऽन्यञ्चिक्युर्न निचिक्युरन्यमिति निचिन्वन्ति हैवेमानि शरीराणी३ अमृतैवैषा देवता(१३) (१४)अमृतो ह वा अमुष्मिंल्लोके सम्भवत्यमृतः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद य एवं वेद(१४) ॥ ८ ॥

इत्यैतरेयद्वितीयारण्यके प्रथमोऽध्यायः ॥ १ ॥

ऐतरेयारण्यकभाष्यम् ।

प्राणदेवताया नानाविधविभूतिरूपान् ध्येयगुणानुक्त्वा समस्तकार्यकारणरूपजगदात्मकत्वलक्षणं ध्येयं गुणं विधत्ते । (१)"आपा३ः इत्याप इति तदिदमाप एवेदं वै मूलमदस्तूलमयं पितैते पुत्रा यत्र ह क्व च पुत्रस्य तत् पितुर्यत्र वा पितुस्तद्वा पुत्र-

स्येत्येतत्तदुक्तं भवति" (१)इति। पूर्वत्र तस्य वाचा सृष्टावित्यादिना पुरुषस्य सृष्टिहेतुत्वं यदुक्तं तदेतन्निमित्तकारणत्वाभिप्रायं। पुरुषो हि पूर्वस्मिन् जन्मनि ज्ञानकर्मणी अनुष्ठाय इदानीन्तन-सृष्टेर्निमित्तं भवति। अत्र तु जगत उपादानकारणं विचार्य निर्णीयते। श्रुतिर्विचारार्था। 'अप्'शब्देन पञ्चभूतान्युपलक्ष्यन्ते। स्थावरजङ्गमदेहरूपस्य जगतः किं पञ्चभूतान्युपादानं आहोस्वि-दन्यत् किञ्चिदिति संशये सति अप्शब्दोपलक्षितानि पञ्चभूता-न्येव उपादानमिति निर्णीय उच्यते। कार्यभूतेषु देहेषु पञ्च-भूतानुगतेर्दृश्यमानत्वात्। सा चानुगतिर्गर्भोपनिषद्याम्नाता। तस्मिन् पञ्चभूतात्मके शरीरे यत् कठिनं सा पृथिवी यत् द्रवं तदापो यदुष्णं तत्तेजो यत् सञ्चरति स वायुर्यत् सुषिरं स आकाश इत्युच्यत इति। तस्मात् कारणात् 'इदं' कृत्स्नदेहरूपं जगत्, 'अप्'शब्दोपलक्षितानि पञ्चभूतानि 'एव'। कार्यकारणयोर्मृद्-घटयोरत्यन्तभेदादर्शनात्। 'इदं वै' यथोक्तमप्शब्दोपलक्षितं भूतपञ्चकमेव, 'मूलं' उपादानकारणं। 'अदः' स्थावरजङ्गम-देहरूपं जगत्, 'तूलं' कार्यं। अतः परस्परैक्यं युक्तं। तथा निमित्तकारणभूतः 'अयं' पुरुषः, 'पिता'। 'एते' पृथिव्यग्न्यादि-देवतादेहाः, 'पुत्राः'। तयोश्च परस्परं नात्यन्तं भेदः। कथं भेदाभाव इति चेत्तदुच्यते। लोके 'पुत्रस्य', वस्तु 'यत्र ह क्व च' यस्मिन् कस्मिन्नपि ग्रामान्तरे विद्यते, 'तत्' सर्वं, 'पितुः', स्वम्भ-वति। पिता हि तदानीय अनुभवति। अथवा 'पितुः', सम्बन्धि यद्वस्तु यत्र ग्रामान्तरे विद्यते। 'तद्वा' तदपि, 'पुत्रस्य', स्वम्भव-त्येव। पुत्रोऽपि तदानीय अनुभवति। परस्परद्रव्यानुभवेन यद्वै-

क्यमस्ति 'एतत्' ऐक्यं, 'तत्' तेन, अयं पिता एते पुत्राः 'इति', वाक्येन 'उक्तं भवति'। भूतपञ्चकस्य पृथिव्यादिदेवतादेहानाञ्च कार्यकारणरूपं यदैक्यमुपासकपुरुषस्य पितृरूपस्य पुत्ररूपाणां देवतात्मनाञ्च यदैक्यन्तदुभयं प्राणगुणत्वेन ध्येयमित्यर्थः॥

उक्तार्थदार्ढ्याय महर्षिवाक्यं दर्शयति। (२)"एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेय आहम्मां देवेभ्यो वेदा ओमद्देवान्वेदेतःप्रदाना ह्येत इतः सम्भृता इति" (२)इति। इतराख्यायाः कस्याश्चित् स्त्रिया अपत्यं 'ऐतरेयः', स च नाम्ना 'महिदासः',तादृशो महर्षिः 'तदेतत्' पूर्वोक्तं कार्यकारणद्रव्यैक्यं, पितृपुत्रैक्यञ्च, उपासनया प्राणात्मत्वं प्राप्तस्य स्वस्य गुणत्वेन 'विद्वान्', शिष्याणामग्रे तत्प्रकटनार्थमिदं वाक्यमुक्तवान्, मामहमा देवेभ्यो वेद'। 'आ'कारो निपातोऽभिविधौ वर्त्तते। देवैः सहितस्तदभिन्नं मत्स्वरूपं 'अहं','वेद' उपासे। 'ओमत्', इत्यत्र अकार उकारश्चेति पदद्वयं। 'देवा नु' देवानपि सर्वान्, 'ओमत्' वेद, मया सहितानेकत्वेनोपासे। न च पुरुषस्य मम देवसाहित्यमयुक्तमिति शङ्कनीयं। 'एते' देवाः, 'इतःप्रदाना'हि इतोऽस्माल्लोकात् पुरोडाशादिप्रदानं येषान्ते 'इतःप्रदानाः'। तस्मादेवकारणात् 'इतः सम्भृताः' एते लोकप्रत्तहविषा सम्यक् पोषिताः। तेनोपासकस्य देवैः साहित्यं युक्तं। 'इति' एवं, महर्षिरुवाच॥

गुणान्तरं विधत्ते।(३)"स एष गिरिश्चक्षुः श्रोत्रं मनो वाक् प्राणस्तं ब्रह्मगिरिरित्याचक्षते"(३) इति। योऽयं 'चक्षुरादीन्द्रियसमूहः 'स एषः', प्राणदेवतायाः गिरणात् 'गिरिः', इत्यु-

च्यते। यथा निगीर्णमन्नादिकं वहिर्नोपलभ्यते, तथेयमपि प्राणदेवता चक्षुरादीन्द्रियैर्निगीर्णवत्तिरोहिता सती लौकिकैर्नोपलभ्यते। यस्मादेवं तस्माच्चक्षुरादीन्द्रियसङ्घातं 'ब्रह्मगिरिः', इत्येवमभिज्ञाः 'आचक्षते'। प्राणरूपस्य ब्रह्मणो निगरणात्तिरोधानाद् 'ब्रह्मगिरित्वं। चक्षुरादिरूपेण तिरोहितं प्राणरूपं ब्रह्मेति ध्यायेत्॥

ब्रह्मगिरिगुणध्यानस्य फलमाह। (४)"गिरति ह वै द्विषन्तं पाप्मानं भ्रातृव्यं परास्य द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद"(४) इति। पापरूपो यः शत्रुरनुष्ठानविघ्नरूपं द्वेषं करोति तं 'गिरति' विनाशयति। स च 'पाप्मा', पराभूतः सर्वात्मना विनष्टो भवति॥

तामेतामुपास्यां प्राणदेवतां प्रशंसति। यद्वा गुणान्तराणि विधत्ते। (५)"स एषोऽसुः स एष प्राणः स एष भूतिश्चाभूतिश्च"(५) इति। योऽयमुपास्यो देवः 'स एषः', देहेन्द्रियादिसङ्घातमस्यति प्रक्षिपति प्रेरयतीति 'असुः' प्रकर्षेणानिति स्वयं चेष्टत इति 'प्राणः'। एतस्या देवतायाः शरीरेऽवस्थाने सति जीवात्मापि तत्र भवति, अवतिष्ठते, तस्माज्जीवात्मसद्भावहेतुत्वात् 'भूतिः', इत्युच्यते। प्राणदेवताया निर्गमने सति अत्र जीवात्मा न भवति नावतिष्ठते, तस्मात् 'अभूतिः' इत्युच्यते, गुणचतुष्टयं ध्येयमित्यर्थः॥

तत्र भूतिगुणं प्रशंसति। (६)"तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसिति"(६) इति। 'तं' प्राणदेवं, जीवात्मसहभावहेतुत्वेन भूतिगुणकोऽयं

'इति', 'उपास्य वागाद्यभिमानिनो देवाः 'बभूवुः' भूतिमैश्वर्यं प्रापुः। यस्माद्भूतिगुणयुक्तोऽयं प्राणः, 'तस्मात्' एव कारणात्, इदानीं 'अपि', 'सुप्तः', पुमान् भूतिगुणद्योतकं 'भूग्' इत्यस्यानुकरणरूपं ध्वनिं पुनः पुनः कुर्वन् 'प्रकर्षेण श्वासङ्करोति॥

अभूतिगुणं निन्दति। (७)"अभूतिरित्यसुरास्ते ह पराबभूवुः"(७) इति। प्राणनिर्गमेन जीवस्याच योऽयमभावः सोऽयं 'अभूति'शब्देन उच्यते। तद्गुणकं प्राणमुपास्य 'असुराः', 'पराभूताः, विनष्टाः। अत एव श्रुत्यन्तरं पठ्यते। तं यथा यथोपासते तदेव भवतीति॥

भूत्यभूतिगुणद्वयध्यानस्य फलं दर्शयति। (८)"भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद"(८) इति। अयं प्राणदेवः स्वस्य सद्भावहेतुर्वैरिणामभावहेतुरित्येवं 'यः' पुमान्। उपास्ते स पुमान् 'आत्मना भवति' स्वयञ्चिरञ्जीवी भवति, शत्रुश्च पराभवति। नन्वभूतिगुणः पूर्वं निन्दितः पुनः कथमनाङ्गीक्रियते इति चेत्। प्रकारभेदादिति ब्रूमः। स्वस्यैवाभावहेतुरित्येवमसुराणां यदुपासनन्तन्निन्दितं। वैरिणामभावहेतुरित्युपासनन्त्वङ्गीक्रियते॥

पुनर्गुणान्तरं विधत्ते। (९)"स एष मृत्युश्चैवामृतञ्च"(९) इति। स्वनिर्गमनेन देहमरणात् प्राणस्य 'मृत्युत्वं'। स्वावस्थानेन देहमरणाभावात् 'अमृतत्वं'। एतद्गुणद्वयं ध्यायेत्॥

यथोक्तगुणोपेतं प्राणं प्रशंसितुं मन्त्रमुदाहरति। (१०)"तदुक्तमृषिणा"(१०) इति। स च मन्त्रः संहितायामेवमाम्नातः। अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः। ता

शश्वन्ता विषूचीना वियन्ता न्यन्यश्चिक्युर्न निचिक्युरन्यं इति* ।
तस्यायमर्थः । अयं प्राणवायुर्देहमध्ये स्वधया गृभीतः । स्वधा-शब्दोऽन्नवाची । भुक्तेनान्नेन परिगृहीतोऽवस्थापितः सन् अधस्तोर्ध्वञ्च सञ्चरति । मलमूत्रापनयनार्थमधोभागे अञ्चति गच्छतीत्यपाङ् । श्वासार्थं प्रकृष्टे मुखे अञ्चति गच्छतीति प्राङ् । एवंविधः सन् एति गच्छति सर्वदा सञ्चरति । स च प्राणः स्वयममर्त्यः, मरणरहितः सन् मर्त्येन मरणोपेतेन शरीरेण सयोनिः समानस्थान एकत्रावस्थितः । जतुकाष्ठवद् देहप्राणयोरत्यन्तसंश्लेष एकत्रावस्थानं । प्राणनिर्गमे देहस्य मरणान्मर्त्यत्वं । प्राणस्य तु मरणशब्दवाच्यप्राणवियोगासम्भवादमर्त्यत्वं । ता शश्वन्ता तौ देहप्राणौ शाश्वतिकौ प्राणस्य विनाशाभावेन तत्सहचारिणो देहस्यापि छत्रिणो गच्छन्तीतिवत् शाश्वतिकत्वमुपचर्यते । कीदृशौ तौ, विषूचीना विष्वगञ्चन्तौ विविधव्यापारयुक्तौ । प्राणो हि देहेन्द्रियादींश्चालयति । देहस्तु प्राणेन्द्रियाणामाधारत्वेन अवतिष्ठते । पुनः कीदृशौ, वियन्ता परस्परविरोधेन गच्छन्तौ । देहो मृतः सन् भूमौ गच्छति तद्वैपरीत्येन प्राण ऊर्ध्वं लोकान्तरं गच्छति । तयोरुभयोर्मध्ये अन्यतरं देहं निचिक्युः, अन्नपानाभ्यां मनुष्यादयो निचयं वृद्धिं प्रापितवन्तः । अन्यन्तु प्राणं न निचिक्युः, नह्यन्नपानाभ्यां प्राणो वर्द्धत इति ॥

एतस्य मन्त्रस्य प्रथमपादं व्याचष्टे । (११) "अपाङ् प्राङेति स्वधया गृभीत इत्यपानेन ह्ययं यतः प्राणो न पराङ्

*ऋग्वेदे म०१, सू०१६४, ऋ०३८ ।

भवति"(११) इति। 'यतः' यस्मात् कारणात्, 'अयं' प्राणः, 'अपानेन' अधोवृत्तिव्यापारेण, अन्तराकृष्टः सन् 'पराङ्' बहिर्गतः, 'न भवति'। यद्यपानवृत्त्या नाकृष्येत तर्हि श्वासरूपेण बहिर्निर्गत्य तथैव गच्छेत्। न पुनर्देहे प्रत्यागच्छेत्। अस्यार्थस्य अनुभवप्रसिद्धेः 'हि'शब्दः॥

द्वितीयपादं व्याचष्टे। (१२)"अमर्त्योऽमर्त्येना सयोनिरित्येतेन हीदं सर्वं सयोनि मर्त्यानि हीमानि शरीराणी३ अमृतैषा देवता"(१२)इति। 'एतेन' प्राणेन, सह 'इदं सर्वं' शरीरजातं, समानस्थानकं 'इति' एतत्, प्रसिद्धं। 'शरीराणि मर्त्यानि', इत्येतदत्यन्तप्रसिद्धं, इति द्योतयितुं 'हि'शब्दः, प्लुतिश्च। प्राणदेवता तु 'अमृता'॥

उत्तरार्द्धं व्याचष्टे। (१३)"ता शश्वन्ता विषूचीना वियन्ता न्यऽन्यं चिक्युर्न निचिक्युरन्यमिति निचिन्वन्ति हैवेमानि शरीराणी३ अमृतैवैषा देवता" (१३)इति। शरीराणामन्नादिना वृद्धिरत्यन्तप्रसिद्धा। प्राणदेवता', तु 'अमृता एव',। न तु जन्मवृद्ध्यादिविकारस्तस्या अस्ति॥

अमृतत्वगुणध्यानस्य फलमाह। (१४)"अमृतो ह वा अमुष्मिंल्लोके सम्भवत्यमृतः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद य एवं वेद"(१४) इति। उपासकः स्वर्गे लोके हिरण्यगर्भत्वं प्राप्य मरणरहितो भवति। ततः सर्वप्राण्युपकारार्थमादित्यमण्डले सर्वैर्दृश्यमानो भवति। अभ्यासोऽध्यायसमाप्त्यर्थः॥ ८॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयारण्यके द्वितीयारण्यके प्रथमाध्यायस्याष्टमः खण्डः।

अथ द्वितीयोऽध्यायः ।



(१)एष इमं लोकमभ्यार्चत्पुरुषरूपेण य एष तपति प्राणो वाव तदभ्यार्चत्प्राणो ह्येष य एष तपति तं शतं वर्षाण्यभ्यार्चत् तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति तं यच्छतं वर्षाण्यभ्यार्चत्तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षत एतमेव सन्तं(१) (२)स इदं सर्वं मध्यतो दधे यदिदं किञ्च स यदिदं सर्वं मध्यतो दधे यदिदं किञ्च तस्मान् माध्यमास्तस्मान्माध्यमा इत्याचक्षत एतमेव सन्तं(२) (३)प्राणो वै गृत्सोऽपानो मदः स यत् प्राणो गृत्सोऽपानो मदस्तस्माद्गृत्समदस्तस्माद्गृत्समद इत्याचक्षत एतमेव सन्तं(३) (४)तस्येदं विश्वं मित्रमासीद्यदिदं किञ्च तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किञ्च तस्माद्विश्वामित्रस्तस्माद् विश्वामित्र इत्याचक्षत एतमेव सन्तं(४) (५)तं देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तस्माद्वामदेवस्तस्माद्वामदेव इत्याचक्षत एतमेव सन्तं(५) (६)स इदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च स यदिदं सर्वं पाप्मनोऽत्रा-

यत यदिदं किञ्च तस्मादन्नयस्तस्मादन्नय इत्याचक्षत एतमेव सन्तं(६) ॥ १ ॥

ऐतरेयारण्यकभाष्यम् ।

उक्थे ध्यातव्यस्य प्राणस्य परस्परविलक्षणा बहव उपास्यगुणाः प्रथमाध्याये दर्शिताः। द्वितीये तु प्रथममण्डलादिद्रष्टृमुनिरूपत्वादयो बहवो गुणा वक्तव्याः। तत्रैकङ्गुणं विधत्ते। (१)"एष इमं लोकमभ्यार्चत् पुरुषरूपेण य एष तपति प्राणो वाव तदभ्यार्चत् प्राणो ह्येष य एष तपति तं शतं वर्षाण्यभ्यार्चत्तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति तं यच्छतं वर्षाण्यभ्यार्चत्तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षत एतमेव सन्तम्"(१) इति। 'य एषः' आदित्यः, मण्डले 'तपति', सः 'एषः' 'पुरुषरूपेण' प्राणोपासकजीवरूपेण, 'इमं' लोकं, अवलोक्यमानमिममुपासकदेहं 'अभ्यार्चत्' स्वप्रवेशेनाभितोऽर्चनीयमकरोत्। पुरुषरूपाभावे हि शवरूपो देहोऽयमपूज्यः स्यात्। न च प्रस्तुतं प्राणं परित्यज्य किमित्यादित्यो वर्ण्यत इति शङ्कनीयं। यस्मादादित्यरूपेण प्राण एव तच्छरीरमर्चनयोग्यमकरोत्। 'य एषः' मण्डलस्थोऽस्माभिर्दृश्यमानः,'तपति','सः' 'एषः','प्राणो हि'। न खल्वादित्यप्राणयोर्भेदोऽस्ति। अध्यात्ममधिदैवं चेत्येवं स्थानभेदमात्रं। अत एवादित्यो ह वै बाह्यः प्राण उदय इत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णान इति श्रुत्यन्तरे पठ्यते। एक एव पदार्थो देहं प्रवर्त्तयितुमन्तः स्थितो दृष्टिमनुग्रहीतुं बहिः स्थित इत्येतावदेव द्वयोर्वैषम्यम्। स प्राणः 'तं' मनुष्यदेहं,

शतसङ्ख्यान् संवत्सरान् पूजनीयमकरोत्। 'तस्मात्' कारणात्, 'पुरुषायुषः' मनुष्याणामायूंषि, शतसङ्ख्याकाः संवत्सराः 'भवन्ति'। यस्मादयं प्राणः 'तं' मनुष्यदेहं, वर्षशतमर्चितवान्। 'तस्मात्', तयैव व्युत्पत्त्या प्राणस्यावतारभूताः प्रथममण्डलद्रष्टारो मुनयः 'शतर्चिसञ्ज्ञकाः सम्पन्नाः। यस्मात् प्राणनिष्पादितार्चनवशात् 'शतर्चिनामका मुनयः 'तस्मात्', उपासकाः 'एतमेव' प्राणरूपं, 'सन्त', 'शतर्चिनामका मुनयः,* 'इत्याचक्षते'। प्राणस्य तन्मुनिरूपत्वं ध्यायेदित्यर्थः॥

द्वितीयं गुणं विधत्ते। (२)"स इदं सर्वं मध्यतो दधे यदिदं किञ्च स यदिदं सर्वं मध्यतो दधे यदिदं किञ्च तस्मान् माध्यमास्तस्मान्माध्यमा इत्याचक्षत एतमेव सन्त"(२) इति। 'सः' प्राणदेवः, 'यत्', किञ्चित् देहजातमस्ति, तत् 'इदं सर्वं', स्वयं 'मध्यतः', अवस्थाय धारितवान्। 'तस्मात्', प्राणावतारविशेषाः केचिदृषयः 'माध्यमनामकाः सम्पन्नाः। तद्रूपत्वं प्राणस्य ध्यायेत्॥

तृतीयं गुणं विधत्ते। (३)"प्राणो वै गृत्सोऽपानो मदः स यत् प्राणो गृत्सोऽपानो मदस्तस्माद् गृत्समदस्तस्माद् गृत्समद इत्याचक्षत एतमेव सन्त"(३) इति। यः 'प्राणः', अस्ति 'सः', एव स्वापकाले वागादीनां निगरणात् 'गृत्सः', इत्युच्यते। 'अपानवृत्तिश्च रेतोविसर्गकारणमदहेतुत्वात् 'मदः', इत्युच्यते। तदुभयावतारो मुनिः 'गृत्समद'नामकः॥

चतुर्थं विधत्ते। (४)"तस्येदं विश्वं मित्रमासीद्यदिदं

---

* शतामनय इति क०, ग० च।

किञ्च तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किञ्च तस्माद्विश्वामित्र-स्तस्माद्विश्वामित्र इत्याचक्षत एतमेव सन्तं"(४) इति। 'तस्य' प्राणदेवस्य भोक्तुः, 'इदं विश्वं', भोग्यत्वेन 'मित्रमासीत्' ॥

पञ्चमं विधत्ते । (५)"तं देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तस्माद् वाम-देवस्तस्माद् वामदेव इत्याचक्षत एतमेव सन्तं"(५) इति । वागा-दयः 'देवाः', सर्वे, 'तं' प्राणं, उद्दिश्य परस्परमेवं 'अब्रुवन्'। 'अयं वै' प्राण एव, 'नः' अस्माकं, 'सर्वेषां', मध्ये 'वामः' ह्वव-नीयः, सम्भजनीय इति देवेषु मध्ये 'वामः', 'इति' व्युत्पत्त्या 'वामदेव'नाम सम्पन्नम् ॥

षष्ठं विधत्ते । (६)"स इदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च स यदिदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च तस्मादत्रय-स्तस्मादत्रय इत्याचक्षत एतमेव सन्तं"(६) इति । 'यत्', 'कि-ञ्चिन्मनुष्यजातमस्ति, तत् सर्वं 'सः' प्राणः, 'पाप्मनः', सका-शात् 'अत्रायत' रक्षितवान् । 'तस्मात्', 'अत्रायत', इति 'अत्रि-रिति निर्वचनं सम्पन्नम् ॥ १ ॥

(१)एष उ एव बिभ्रद्वाजः प्रजा वै वाजस्तं एष बिभर्त्ति यद्बिभर्त्ति तस्माद्भरद्वाजस्तस्माद्भरद्वाज इत्याचक्षत एतमेव सन्तं(१) (२)तं देवा अब्रुवन्नयं वै नः सर्वेषां वसिष्ठ इति तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वसिष्ठ इति तस्माद्वसिष्ठ स्तस्माद्वसिष्ठ इत्याचक्षत एतमेव सन्तं(२)

(३)स इदं सर्वमभिप्रागाद्यदिदं किञ्च स यदिदं सर्वमभि-
प्रागाद्यदिदं किञ्च तस्मात्प्रगाथास्तस्मात्प्रगाथा इत्याचक्षत
एतमेव सन्तं(३) (४) स इदं सर्वमभ्यपवयत यदिदं किञ्च
स यदिदं सर्वमभ्यपवयत यदिदं किञ्च तस्मात्पावमान्य-
स्तस्मात्पावमान्य इत्याचक्षत एतमेव सन्तं(४) (५)सोऽ-
ब्रवीदहमिदं सर्वमसानि यच्च क्षुद्रं यच्च महदिति ते क्षुद्र-
सूक्ताश्चाभवन्महासूक्ताश्च तस्मात् क्षुद्रसूक्तास्तस्मात्
क्षुद्रसूक्ता इत्याचक्षत एतमेव सन्तं(५) (६)सूक्तं वताबो-
चतेति तत् सूक्तमभवत्तस्मात् सूक्तं तस्मात् सूक्तमित्याच-
क्षत एतमेव सन्तं(६) (७)एष वा ऋगेष ह्येभ्यः सर्वेभ्यो
भूतेभ्योऽर्चत स यदेभ्यः सर्वेभ्यो भूतेभ्योऽर्चत तस्मादृक्
तस्मादृगित्याचक्षत एतमेव सन्तं(७) (८)एष वा अर्द्धर्च एष
ह्येभ्यः सर्वेभ्योऽर्द्धेभ्योऽर्चत स यदेभ्यः सर्वेभ्योऽर्द्धेभ्योऽर्चत
तस्मादर्द्धर्चस्तस्मादर्द्धर्च इत्याचक्षत एतमेव सन्तं(८)
(९)एष वै पदमेष हीमानि सर्वाणि भूतानि पादि स
यदिमानि सर्वाणि भूतानि पादि तस्मात् पदन्तस्मात् पद-
मित्याचक्षत एतमेव सन्तं(९) (१०)एष वा अक्षरमेष
ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति
स यदेभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति
तस्मादक्षरं तस्मादक्षरमित्याचक्षत एतमेव सन्तं(१०)

(११)ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्(११) ॥ ॥ २ ॥

ऐतरेयारण्यकभाष्यम्।

पूर्वत्र शतर्चिप्रभृतिमुनिस्वरूपलक्षणाः षड्गुणा अभिहिताः। अथ भरद्वाजस्वरूपत्वादयो दशगुणा उच्यन्ते। तत्र प्रथमं गुणं विधत्ते। (१)"एष उ एव बिभ्रद्वाजः प्रजा वै वाजस्ता एष बिभर्त्ति यद्बिभर्त्ति तस्माद्भरद्वाजस्तस्माद्भरद्वाज इत्याचक्षत एतमेव सन्त"(१) इति। यः प्राणोऽस्ति, सः 'एषः', 'एव', 'बिभ्रद्वाज'नामकः। वजिधातुर्गत्यर्थः। गतिमत्वात् प्रजानां देहः 'वाज'शब्देनोच्यते। अथवा श्रुतौ अन्नं वै वाज इत्युक्तेरन्नसम्बन्धात् 'वाजशब्देन 'प्रजाः',विवक्षिताः, तं प्रजारूपं वाजं 'एषः' प्राणः, स्वप्रवेशेन 'बिभर्त्ति' पोषयति, इति। 'बिभ्रद्वाजः प्रजा वै', इत्यादिना 'भरद्वाज'नामनिर्वचनमुक्तं॥

द्वितीयं गुणं विधत्ते। (२)"तं देवा अब्रुवन्नयं वै नः सर्वेषां वसिष्ठ इति तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वसिष्ठ इति तस्माद्वसिष्ठस्तस्माद्वसिष्ठ इत्याचक्षत एतमेव सन्तं"(२) इति। 'अयं' एव प्राणः, अस्माकं 'सर्वेषां', स्वप्रवेशेनात्यन्तं निवासहेतुः सन् 'वसिष्ठः', 'इति', 'देवाः', 'अब्रुवन्' ॥

तृतीयं विधत्ते। (३)"स इदं सर्वमभिप्रागाद्यदिदं किञ्च स यदिदं सर्वमभिप्रागाद् यदिदं किञ्च तस्मात् प्रगाथास्तस्मात् प्रगाथा इत्याचक्षत एतमेव सन्त"(३) इति। 'सः' प्राणः,

'इदं सर्वं" शरीरजातं, स्वानुप्रवेशेन 'अभिप्रागात्' सर्वतः प्रगतवान्। 'तस्मात्', प्राणदेवताया मूर्त्तिविशेषप्रतिपादका ऋग्द्वयात्मकाः सूक्तरूपा मन्त्रविशेषाः 'प्रगाथाः', इत्युच्यन्ते। तन्मन्त्रद्रष्टारो महर्षयोऽपि 'प्रगाथ'नामकाः ॥

चतुर्थं विधत्ते। (४)"स इदं सर्वमभ्यपवयत यदिदं किञ्च स यदिदं सर्वमभ्यपवयत यदिदं किञ्च तस्मात्पावमान्यस्तस्मात्पावमान्य इत्याचक्षत एतमेव सन्तं"(४) इति। 'यत्', 'किञ्चित्, 'इदं' जगत्, अस्ति, तत् 'सर्वं', 'सः' प्राणः, 'अभ्यपवयत' अभितः पूतं शुद्धमकरोत्। ततस्तन्मूर्त्तिविशेषप्रतिपादका ऋचस्तद्द्रष्टारो महर्षयश्च 'पावमान्यः', इत्युच्यन्ते॥

पञ्चमं विधत्ते। (५)"सोऽब्रवीदहमिदं सर्वमसानि यच्च क्षुद्रं यच्च महदिति ते क्षुद्रसूक्ताश्चाभवन्महासूक्ताश्च तस्मात् क्षुद्रसूक्तास्तस्मात् क्षुद्रसूक्ता इत्याचक्षत एतमेव सन्तं"(५) इति। लोके 'क्षुद्रं' पिपीलिकादिरूपं, 'यत्', अस्ति, 'महच्च' गजाश्वादिरूपं, 'यत्', अस्ति। तत् 'सर्वं', 'अहं', एव भवानि 'इति' एवं, 'सः' प्राणदेवः, कदाचित् 'अब्रवीत्'। अतस्तत्प्राणप्रतिपादका मन्त्रसङ्घाः 'क्षुद्रसूक्ताः', 'महासूक्ताः', इत्येतन्नामानः 'अभवन्'। जातवेदस इति सूक्तमेकर्चत्वात् क्षुद्रसूक्तरूपं। अस्य वामस्येत्येतत् सूक्तं द्विपञ्चाशदृचत्वान्महासूक्तं। एवमुदाहरणान्तराणि द्रष्टव्यानि। तद्द्रष्टारो महर्षयश्च 'क्षुद्रसूक्तमहासूक्त'नामभ्यामुच्यन्ते। 'तस्मात्', 'क्षुद्रसूक्ताः', इति वाक्यं महासूक्तानामप्युपलक्षणं॥

षष्ठं विधत्ते। (६)"सूक्तं वतावोचतेति तत् सूक्तमभवत्त-

स्मात् सूक्तं तस्मात् सूक्तमित्याचक्षत एतमेव सन्तं"(६) इति। कदाचिदयं प्राणदेवः स्वमहिमप्रतिपादकमन्त्रजातस्य वक्तारं कञ्चिन्महर्षिं दृष्ट्वेत्थमुवाच। अयं महर्षिः 'सूक्तं' शोभनं वचनं, 'अवोचत', आश्चर्यमेतदिति। 'वत'शब्द आश्चर्यवाची। यस्मादयं देवो मन्त्रजातं 'सूक्त'शब्देन व्याजहार, सुष्ठु वचनमवोचत, 'तस्मात्', मन्त्रजातं 'सूक्तनामकं 'अभवत्'। तद्द्रष्टापि सूक्तनामकोऽभूत्॥

सप्तमं विधत्ते। (७)"एष वा ऋगेष ह्येभ्यः सर्वेभ्यो भूतेभ्योऽर्चत स यदेभ्यः सर्वेभ्यो भूतेभ्योऽर्चत तस्मादृक् तस्मादृगित्याचक्षत एतमेव सन्तं"(७) इति। योऽयं प्राणदेवोऽस्ति 'एषः', एव 'ऋक्'शब्देनाभिधीयते। यस्मात् 'एषः' प्राणः, सर्वभूतार्थन्तं तं देहं 'अर्चत' स्वप्रवेशेन पूजितमकरोत्। 'तस्मात्', प्राणप्रतिपादको मन्त्रस्तद्द्रष्टापि 'ऋक्'शब्देनाभिधीयते॥

अष्टमं विधत्ते। (८)"एष वा अर्द्धर्च एष ह्येभ्यः सर्वेभ्योऽर्द्धेभ्योऽर्चत स यदेभ्यः सर्वेभ्योऽर्द्धेभ्योऽर्चत तस्मादर्द्धर्चस्तस्मादर्द्धर्च इत्याचक्षत एतमेव सन्तं"(८) इति। ऋचो भागः 'अर्द्धर्चः', सोऽपि 'एषः' प्राण एव। 'अर्द्ध'शब्दः स्थानवाची। देवमनुष्यादीनां लोकविशेषरूपाणि यानि स्थानानि सर्वाणि तदर्थमयं प्राणः 'अर्चत' तत्स्थानवासिप्राणिजातं पूजितमकरोत्। 'तस्मात्', तादृशप्राणमहिमवाची मन्त्रभागस्तद्द्रष्टा च 'अर्द्धर्च'-शब्देनोच्यते॥

नवमं विधत्ते। (९)"एष वै पदमेष हीमानि सर्वाणि भूतानि पादि स यदिमानि सर्वाणि भूतानि पादि तस्मात्पदं

तस्मात्पदमित्याचक्षत एतमेव सन्तं"(९) इति। 'पद'शब्देन सुबन्ततिङन्तादिरूपस्य कस्यचिदर्थस्य वाचकः शब्दो विवक्षितः। तथैवार्द्धर्चस्य भागः 'पाद'शब्दस्याभिधेयोऽपि विवक्षितः। तदुभयं 'एषः' प्राण एव। यस्मात् 'सर्वाणि भूतानि', असौ प्राणः 'पादि' स्वप्रवेशेन प्राप्तवान्, 'तस्मात्', तन्महिमप्रतिपादकोऽर्द्धर्चभागः शब्दविशेषस्तद्द्रष्टा च 'पद'शब्देनोच्यते ॥

द्वयमं विधत्ते। (१०)"एष वा अक्षरमेष ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति स यदेभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति तस्मादक्षरन्तस्मादक्षरमित्याचक्षत एतमेव सन्तं"(१०) इति। अकारादिरूपं यत् 'अक्षरं', लोकप्रसिद्धन्तत् 'एषः' प्राण एव। यस्मात् 'एषः', सर्वभूतानामनुष्ठातॄणामर्थं 'क्षरति' क्षरणं फलप्रदानरूपं करोति। प्राणादन्ये पुरुषाः 'एनं' 'न', एव 'अतिक्षरन्ति' प्राणमतिलङ्घ्य क्षरणे फलप्रदाने स्वयं न समर्थाः। अत एव च्छन्दोगा आमनन्ति। प्राणः प्राणाय ददातीति। न खलु प्राणरहितः शवदेहोऽन्यस्मै शवदेहाय किञ्चिदन्नादिकं दातुं प्रभवति। अतोऽयं प्राणमतिलङ्घ्य क्षरणं नास्ति। तस्य प्राणस्य वाचकं वर्णजातन्तद्द्रष्टा च 'अक्षर'शब्देनोच्यते। तदेवं सर्वमन्त्रसर्वमहर्षिस्वरूपत्वं प्राणस्य ध्येयमितितात्पर्यार्थः॥

तमिमं सङ्क्षिप्य दर्शयति। (११)"ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्"(११) इति। अग्निमीळे पुरोहितमित्या-

रभ्य यथा वः सुसहा सतीत्यन्ताः समाम्नाताः 'ऋचः', याः सन्ति 'ता एताः सर्वाः', अपि 'एकैव व्याहृतिः' एकशब्दात्मकाः। तथा च ऋग्वेदादयो ये 'वेदाः', सन्ति, ये च 'घोषाः' झभघढधादयो घोषयुक्ता वर्णाः, सन्ति, ते 'सर्वे', अपि 'एकैव व्याहृतिः'। कोऽसावेकशब्द इति स उच्यते। 'प्राण एव' प्राणशब्देनैव, सर्वं शब्दजातं सङ्गृहीतं, प्राणशक्तौ च सर्वेषामुच्चार्यमाणतया प्राणेऽन्तर्भावात्। तस्मात् 'प्राण ऋचः' ऋगुपलक्षितं सर्वं शब्दजातं महर्षिजातं च प्राणस्वरूपमित्येवोपासीत ॥ २ ॥

(१)विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपनिषससाद सहान्नमित्यभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय(१) (२)तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स वा ऋषे द्वितीयं शंसेति स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय(२) (३)तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स वा ऋषे तृतीयं शंसेति सहान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय(३) (४)तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागा वरन्ते ददामीति सहोवाच त्वामेव जानीयामिति तमिन्द्र उवाच प्राणो वा अहमस्म्यृषे प्राणस्त्वं प्राणः सर्वाणि भूतानि प्राणो ह्येष य एष तपति स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि

तस्य मेऽन्नं मित्रं दक्षिणं तद्वैश्वामित्रमेष तपन्नेवास्मीति होवाच(४) ॥ ३ ॥

ऐतरेयारण्यकभाष्यम् ।

एवं प्राणस्य कृत्स्नशब्दार्थरूपत्वध्यानमभिधाय शस्त्रगतासु ऋचाशीतिषु इन्द्रसम्बन्ध्यन्नत्वदृष्टिं विदधात उपाख्यानमाह । (१)"विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपनिषससाद स हान्नमित्यभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियन्धामोपेयाय"(१) इति । कदाचिन्महाव्रताख्ये कर्मणि विश्वामित्रो महर्षिर्होता सन् 'एतत्' महाव्रताख्यं, 'अहः', 'शंसिष्यन्तं' शंसितुमुपक्रमङ्करोति, तदानीं 'इन्द्रः', अन्नार्थी सन् तं, 'विश्वामित्रं', 'उपनिषससाद' उपेत्य समीपे स्थितवान् । अधिकः सकारश्छान्दसः । 'सः' च विश्वामित्रः, इन्द्रस्याभिप्रायं ज्ञात्वा तव अन्नभूतमेतन्मन्त्रजातं 'इति', इन्द्रस्याग्रे कथयित्वा 'बृहतीच्छन्दस्कं मन्त्रसहस्रं' शंसित्वा 'तेन' शंसनेन, 'इन्द्रस्य', यत् 'प्रियं' स्थानं स्वर्गरूपं, तत् प्राप्तवान् । अत्र महाव्रताख्ये कर्मणि माध्यन्दिनसवने निष्केवल्याख्यं किञ्चिच्छस्त्रं पठ्यते । तस्य च शस्त्रस्य पक्षिरूपतां परिकल्प्य तदवयवरूपाः शस्त्रभागविशेषाः क्रमेण पठ्यन्ते । पक्षिणश्च मध्यदेहो ग्रीवा शिरः पक्षमूलं दक्षिणः पक्ष उत्तरः पक्षः पुच्छम् उदरस्थानम् उरू जरू इत्येवं दशावयवाः सन्ति । अतः शस्त्रेऽपि दशावयवरूपत्वेन तदिदास भुवनेषु ज्येष्ठमित्यादिका बहुविधाः सूक्तविशेषाः प्रथमारण्यकेऽभिहिताः । ते च पञ्चमारण्यके शौनकेन सम्यग्विस्तृत्योदा-

ह्वताः। यद्यपि तेषु सर्वेषु नानाविधच्छन्दस्का मन्त्रा आम्नातास्तथापि तेषु सर्वेष्वक्षराणि गणयित्वा षट्त्रिंशदक्षरोपेतानां बृहतीनां सहस्रं द्रष्टव्यं॥

पुनरपि पूर्ववदाख्यानमाह। (२)"तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स वा ऋषे द्वितीयं शंसेति स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस तेन इन्द्रस्य प्रियं धामोपेयाय"(२)इति। 'तं' विश्वामित्रं प्रति, 'इन्द्रः', एवं 'उवाच'। हेमहर्षे, त्वं मदीयान्नबुद्धा शंसित्वा मदीयं 'प्रियं', स्थानं प्राप्तवानसि। हेमहर्षे, 'सः' तादृशस्त्वं, शस्त्रं पुनरपि 'द्वितीयं शंसेति'। अन्यत् पूर्ववद्व्याख्येयं। ननु कृत्स्नेऽपि निष्कैवल्यशस्त्रेऽक्षरगणनया 'बृहतीसहस्रं', एकमेव सम्पद्यते, न तु द्वितीयमस्ति, तत् कथं द्वितीयं शंसेत्यभिधीयते। नायं दोषः। अत्र बृहतीसहस्रशब्देन तदवयवानां विवक्षितत्वात् तृचाशीतयोऽन्नत्वेनाभिहिताः। अन्नमशीतय इत्युक्तत्वाद् अत्रापि त्रिवारमन्नत्वेनोपन्यस्यते। अतो बृहतीसहस्रशब्देनात्र प्रथमपर्याये गायत्रीतृचाशीतिर्विवक्षिता। द्वितीयपर्याये बार्हती तृचाशीतिः॥

तृतीयं पर्यायमाह। (३)"तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स वा ऋषे तृतीयं शंसेति स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस तेन इन्द्रस्य प्रियं धामोपेयाय"(३) इति। औष्णिही तृचाशीतिरत्र 'बृहतीसहस्र'शब्देन विवक्षिता। अन्यत् पूर्ववद्व्याख्येयं॥

तृचाशीतिष्विन्द्रसम्बन्ध्यन्नदृष्टिं विधाय प्राणस्य सर्वात्मत्वं

दर्शयन्नाख्यायिकामुपसंहरति। (४)"तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागा वरन्ते ददामीति स होवाच त्वामेव जानीयामिति तमिन्द्र उवाच प्राणो वा अहमस्म्यृषे प्राणस्त्वं प्राणः सर्वाणि भूतानि प्राणो ह्येष य एष तपति स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि तस्य मेऽन्नं मित्रं दक्षिणं तद्वैश्वामित्रमेष तपन्नेवास्मीति होवाच"(४) इति। 'इन्द्रः', हि यथोक्तप्राणात्मध्यानेन तत्साक्षात्कारं प्राप्य स्वानुभवसिद्धं सर्वात्मत्वमुपदिश्य सर्वात्मनः स्वस्य तृप्त्याशीतिरूपं यत् 'अन्नं', ध्यातव्यं 'तत्', मित्रादिविशेषणैः प्रशशंस। लौकिकमित्रवत् प्रीतिजनकत्वात् अन्नस्य 'मित्रत्वं'। अभिवृद्धिहेतुत्वात् 'दक्षिणत्वं'। दक्षवृद्धाविति धातुः। विश्वामित्रेण शंसनकाले सम्पादितत्वादिदं 'वैश्वामित्रं', तादृक् 'अन्नं', प्राप्यादित्यरूपेण सर्वदा लोके 'तपन्नेष एवास्मि', 'इति' एवं ध्यानदृष्टिसिद्धं स्वकीयं रूपं, 'इन्द्रः', प्रोवाच', ॥ ३ ॥

(१)तद्वा इदं वृहतीसहस्रं सम्पन्नं तस्य यानि व्यञ्जनानि तच्छरीरं यो घोषः स आत्मा य ऊष्माणः स प्राणः (१) (२)एतद्ध स्म वै तद्विद्वान् वसिष्ठो वसिष्ठो बभूव तत एतं नामधेयं लेभे(२)(३)एतदु हैवेन्द्रो विश्वामित्राय प्रोवाचैतदु हैवेन्द्रो भरद्वाजाय प्रोवाच तस्मात् स तेन बन्धुना यज्ञेषु हूयते(३) (४)तद्वा इदं वृहतीसहस्रं सम्पन्नं तस्य वा एतस्य वृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति

व्यञ्जनैरेव रात्रीराप्नुवन्ति स्वरैरहानि(४) (५)तद्वा इदं वृहतीसहस्रं सम्पन्नं तस्य वा एतस्य वृहतीसहस्रस्य सम्पन्नस्य परस्तात् प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः सम्भूय देवता अप्येति य एवं वेद(५) (६)तद्योऽहं सोऽसौ योऽसौ सोऽहं(६) (७)तदुक्तमृषिणा सूर्य आत्मा जगतस्तस्थुषश्च(७) (८)इत्येतद्ु हैवोपेक्षेतोपेक्षेत(८) ॥ ४ ॥

इत्यैतरेयद्वितीयारण्यके द्वितीयोऽध्यायः ॥

ऐतरेयारण्यकभाष्यम्।

तिसृषु ऋचाशीतिष्वन्नदृष्टिं विधाय वर्णविशेषेषु शरीरादिदृष्टिं विधत्ते। (१)"तद्वा इदं वृहतीसहस्रं सम्पन्नं तस्य यानि व्यञ्जनानि तच्छरीरं यो घोषः स आत्मा य ऊष्माणः स प्राणः"(१) इति। तदिदास भुवनेष्वित्यादिकं यन्मन्त्रजातं निष्केवल्ये शस्त्रे विहितं तदेवमक्षरगणनरूपेण बुद्धिकौशलेन 'वृहतीसहस्रं,' सम्पाद्य ध्यातव्यम्। 'तस्य' वृहतीसहस्रस्य मध्ये, 'यानि', ककारादीनि, 'व्यञ्जनानि', सन्ति, तेषु 'शरीरदृष्टिं' कुर्यात्। ककारादीनां हलिति पाणिनीयसञ्ज्ञा। व्यञ्जनमिति श्रौतसञ्ज्ञा। तामेवोपजीव्य कौमारव्याकरणे कादीनि व्यञ्जनानीति सूचितं। 'यो घोषः' झकारघकारादिवर्णः, 'स आत्मा' मध्यशरीरं। 'ये' तु 'ऊष्माणः' शकारषकारादयः,* ते 'प्राणवायुस्वरूपाः। घोषोष्मादिसञ्ज्ञापि कौमारे

* शषसहा इति ग०।

सूचिता। वर्गप्रथमद्वितीयाः शषसाश्चाघोषा घोषवन्तोऽन्ये। शषसहा ऊष्माण इति॥

तदेतच्छरीरादिध्यानं प्रशंसति। (२)"एतद्ध स्म वै तद्विद्वान् वसिष्ठो बभूव तत एतं नामधेयं लेभे(२)" इति। 'वसिष्ठ'-नामको यो महर्षिरस्ति, सोऽयं, 'तत्' एतत् व्यञ्जनादीनां शरीरादिरूपत्वं, 'विद्वान्', 'वसिष्ठ'शब्दाभिधेयो 'बभूव'। अतिशयेन निवासहेतुत्वमाच्छादयितृत्वं वा वसिष्ठत्वं। प्राणो हि स्वप्रवेशेन निवासहेतुर्भवति, स्वव्याप्त्या सर्वमाच्छादयति। तादृशप्राणात्मत्वं ध्यानेन प्राप्तवान्। मुनिरप्यर्थद्वयवत्त्वेन वसिष्ठनामकत्वं लब्धवान्॥

पुनरपि प्रकारान्तरेण प्रशंसति। (३)"एतदु हैव इन्द्रो विश्वामित्राय प्रोवाचैतदु हैवेन्द्रो भरद्वाजाय प्रोवाच तस्मात् स तेन बन्धुना यज्ञेषु ह्वयते"(३) इति। 'एतत्' एव व्यञ्जनादिषु शरीरत्वादिदर्शनं,'इन्द्रः', 'विश्वामित्रभरद्वाजाभ्यामुपदिष्टवान्। 'तस्मात्', 'सः' इन्द्रः, 'तेन' शिष्यरूपेण, 'बन्धुना', सोमयागेषु सुब्रह्मण्यायामिन्द्रागच्छ हरिव आगच्छेत्येवं समाह्वयते'। महता इन्द्रेण महद्भ्यामुपदिष्टत्वात् प्रशस्तमित्यर्थः॥

पुनरपि व्यञ्जनानि स्वरांश्च विभज्य तत्र रात्रिध्यानमहर्ध्यानं च विधत्ते। (४)"तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति व्यञ्जनैरेव रात्रीराप्नुवन्ति स्वरैरहानि"(४)इति। विशेषविधिसम्बन्धार्थं तद्वा इत्यादेः पुनरनुवादः। षट्त्रिंशदक्षरा बृहती तस्यां च

सहस्रगुणितायामक्षराण्यपि 'षट्त्रिंशत्सङ्ख्याकैः सहस्रै-र्युक्तानि 'भवन्ति'। संवत्सरस्य षष्ट्युत्तरशतत्रयदिनात्मकः, तस्मिन् संवत्सरे शतगुणिते सति दिनान्यपि 'षट्त्रिंशत्सहस्रसङ्-ख्याकानि 'भवन्ति'। ततः सङ्ख्यासाम्ये सत्यक्षरगतेषु ताव-त्सङ्ख्याकेषु व्यञ्जनेषु तावत्सङ्ख्याकरात्रिदृष्टिं कुर्यात्। तथा स्वरेषु अहर्दृष्टिं कुर्यात्। अकारमारभ्य मातृकायामौका-रपर्यन्ता वर्णाः स्वराः। अत एव कुमारेणैवं सूत्रितं। सिद्धो वर्णसमाम्नायस्तत्र चतुर्दशादौ स्वरा इति॥

यथोक्तसर्वविशेषणविशिष्टस्य प्राणदेवताध्यानस्य प्रधान-फलं दर्शयति। (५)"तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य परस्तात् प्रज्ञामयो देवता-मयो ब्रह्ममयोऽमृतमयः सम्भूय देवता अप्येति य एवं वेद"(५) इति। 'प्रज्ञामयत्वादिगुणचतुष्टयेन फलेन सम्बन्धार्थं 'तद्वा इदं', इत्याद्यनुवादः। बुद्धिविशेषणसम्पादितस्य 'बृहतीसहस्रस्य', स्व-रूपभूतः प्राणदेवः 'प्रज्ञामयः' चित्स्वरूपः, सर्वज्ञ इत्यर्थः। 'देव-तामयः' अग्निवाय्वादिसर्वदेवतासमष्ट्यात्मकः, 'ब्रह्ममयः' सर्ववे-दात्मकः, 'अमृतमयः' तत्त्वज्ञानोत्पादनेन मोक्षहेतुत्वात् मुक्ति-रूपः। 'यः' पुमान्, 'एवं', उपास्ते, स पुमान् 'देवताः', अग्निवा-य्वादिकाः, 'सम्भूय' सर्वा अप्येकीकृत्य, 'अप्येति' तद्देवतास-मष्टिरूपं हिरण्यगर्भं प्राप्नोति॥

तस्य चोपासकस्याध्यात्ममधिदैवञ्च व्यतिहारेण ध्यानं विधत्ते। (६)"तद्योऽहं सोऽसौ योऽसौ सोऽहं"(६) इति। 'तत्' तस्मिन् सर्वात्मके प्राणदेवतास्वरूपे, 'योऽहं', उपासकशरीरवर्त्ती, 'सोऽसौ',

स एवादित्यमण्डलस्थः पुरुषः। तथा 'योऽसौ' अधिदैवमादित्यमण्डलस्थो ध्येयः पुरुषः, 'सोऽहं' स एव उपासकशरीरस्थोऽहमस्मि, इत्येवमन्योन्यतादात्म्यं ध्यायेत्, अध्यात्ममधिदैवञ्च॥

अथ तत्र एतस्मिन् संवादार्थं मन्त्रमुदाहरति। (७)"तदुक्तमृषिणा सूर्य्य आत्मा जगतस्तस्थुषश्चेति"(७) इति। कृत्स्नमन्त्रस्य प्रतीकदर्शनाय चतुर्थः पादः पठितः। स च मन्त्रः संहितायामेवमाम्नातः। चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च इति*। अनीकशब्दो मुखवाची सैन्यवाची वा। यदेतदादित्यमण्डलं तदेतद्देवानां मुखं सर्वव्यवहारहेतुत्वाद्देवानां मध्ये मुखमित्यर्थः। सैन्यपक्षे बहुविधरश्मीनां समूहरूपमिति व्याख्येयं। तच्च मण्डलं चित्रञ्चायनीयं पूजनीयं। यद्वा सर्वदिक्षु रश्मिप्रसारणेन विचित्रं। देवानां मुखमित्येतदेव चक्षुरित्यादिना प्रपञ्च्यते। मित्रवरुणादीनां चक्षुःस्थानीयमिदं मण्डलमेतदीयेन हि प्रकाशेन सर्वे देवाः पश्यन्ति। तच्च मण्डलं लोकत्रयं, आप्राः सर्वतः पूर्णं सद्वर्त्तते। तन्मण्डलस्थः सूर्यो जगतः जङ्गमस्य तस्थुषश्च स्थावरस्यापि प्राणिजातस्य आत्मा प्रत्यक्स्वरूपमिति मन्त्रस्यार्थः॥

एतद्विज्ञानमुपसंहरति। (८)"एतदु हैवोपेक्षेतोपेक्षेत"(८) इति। 'एतदेव' सर्व्वात्मकमादित्यस्वरूपं, गुरुमुखादुपेत्य साक्षात् कुर्य्यात्। अभ्यासोऽध्यायसमाप्त्यर्थः।

---

* ऋग्वेद म०१सू०११५, ऋ०१।

तयोऽहमित्यत्र यो व्यतिहार उक्तः सोऽयं तृतीयाध्यायस्य तृतीयपादे चिन्तितः ।

व्यतिहारे स्वात्मरव्योरेकधा धीरुत द्विधा ।
वस्त्वैक्यादेकधैकस्य दार्ढ्याय व्यतिहारगीः ॥
ऐक्येऽपि व्यतिहारोक्त्या धीर्द्वेधेशस्य जीवता ।
युक्तोपास्त्यै वाचनिकी मूर्त्तिवद्दार्ढ्यमार्थिकं ॥

ऐतरेयके पठ्यते । तयोऽहं सोऽसौ योऽसौ सोऽहमिति । अस्यायमर्थः । य एष देहेन्द्रियसाक्षी जीवात्मा स एवादित्यमण्डलवर्त्ती परमात्मा । यो मण्डलवर्त्ती स एवास्मद्देहादिवर्त्तीति । तत्र स्वदेहरविमण्डलयोरन्योन्यव्यतिहारे श्रूयमाणेऽपि जीवब्रह्मैक्यलक्षणस्य वस्तुन एकत्वादेकधैव बुद्धिः कर्त्तव्या । न च व्यतिहारवैयर्थ्यं । एकस्यापि वस्तुनो दार्ढ्याय तदुपपत्तेरिति प्राप्ते ब्रूमः । न खल्विदन्तत्त्वावबोधप्रकरणं येनैकत्वप्रतिपत्तिदार्ढ्यमपेक्षेत । किन्तर्हि गुणोपास्तिप्रकरणं* । उपास्तिश्च यथावचनमनुष्ठेया । ततो व्यतिहारेण द्वेधा बुद्धिः कर्त्तव्या । नन्वेवं सति जीवस्य ब्रह्मैक्यमुत्कर्षाय कल्पते, ब्रह्मणस्तु जीवैक्यमपकर्षायेति † चेन्नायं दोषः । यथा देहादिरहितस्याप्युपासकचित्तस्थैर्यार्थं चतुर्भुजाष्टभुजादिमूर्त्तिव्यपदेशेनापकर्षः । तथा वचनबलादीश्वरस्य जीवत्वोपासने का तव हानिः । यद्यप्युपासनाय व्यतिहारेऽनुष्ठीयमाने ऽर्थाज्जी-

* सगुणोपास्तिप्रकरणमिति क०, ग० च ।
† जीवैक्यमपकर्षाय स्यादितीति क०, ग० च ।

वब्रह्मणोरेकत्वप्रतिपत्तिर्दृढा भवेत्। तर्हि चरितार्थाः सम्प-द्यामहे। तस्मादप्रतिहारेण द्विधा बुद्धिः कर्त्तव्या॥ ४॥

इति माधवीये वेदार्थप्रकाशे ऐतरेयारण्यके द्वितीया-रण्यके द्वितीयोऽध्यायः॥

## अथ तृतीयोऽध्यायः।

(१)यो ह वा आत्मानं पञ्चविधमुक्थं वेद यस्मादिदं सर्वमुत्तिष्ठति स सम्प्रतिवित् पृथिवी वायुराकाश आपो-ज्योतींषीत्येष वा आत्मोक्थं पञ्चविधमेतस्माद्धीदं सर्व-मुत्तिष्ठत्येतमेवाप्येत्ययनं ह वै समानानां भवति य एवं वेद(१) (२)तस्मिन् योऽन्नञ्चान्नादञ्च वेदाहास्मिन्नन्ना-दो जायते भवत्यस्यान्नमापश्च पृथिवी चान्नमेतन्मयानि ह्यन्नानि भवन्ति ज्योतिश्च वायुश्चान्नादमेताभ्यां हीदं सर्वमन्नमत्त्यावपनमाकाश आकाशे हीदं सर्वं समोप्य-त आवपनं ह वै समानानां भवति य एवं वेद(२) (३)तस्मिन् योऽन्नञ्चान्नादञ्च वेदाहास्मिन्नन्नादो जायते भवत्यस्यान्नमोषधिवनस्पतयोऽन्नं प्राणभृतोऽन्नादमोषधि-वनस्पतीन् हि प्राणभृतोऽदन्ति(३)(४)तेषां य उभयतोदन्ताः पुरुषस्यानुविधां विहितास्तेऽन्नादा अन्नमितरे पशवस्त

स्मात्त इतरान्पशूनधीव चरन्त्यधीव ह्यन्नेऽन्नादो भवति(४) (५)अधीव ह समानानां जायते य एवं वेद(५) ॥ १ ॥

ऐतरेयारण्यकभाष्यम् ।

द्वितीये महर्षिमन्त्ररूपत्वादिगुणा उक्ताः। तृतीये पञ्चविधत्वादीनि गुणान्तराण्युच्यन्ते। तत्रोक्थस्य भूतपञ्चकरूपत्वं विधत्ते। (१)"यो ह वा आत्मानं पञ्चविधमुक्थं वेद यस्मादिदं सर्वमुत्तिष्ठति स सम्प्रतिवित् पृथिवी वायुराकाश आप ज्योतींषीत्येष वा आत्मोक्थं पञ्चविधमेतस्माद्धीदं सर्वमुत्तिष्ठत्येतमेवाप्येत्ययनं ह वै समानानां भवति य एवं वेद"(१) इति। 'यस्मात्' प्राणदेवस्य प्रतीकभूतादुक्थात्, 'इदं' सर्वं जगत्, 'उत्तिष्ठति', उक्थानुष्ठानतदुपासनफलभूतत्वाज्जगदुत्पत्तेस्तादृशं 'उक्थं' निष्केवल्याख्यं शस्त्रं,'पञ्चविधमात्मानं', वक्ष्यमाणपृथिव्यादिपञ्चप्रकारेण उपासकस्य स्वरूपभूतं 'यः' पुमान्, उपास्ते 'सः', पुमान्, 'सम्प्रतिवित्' सम्यगभिज्ञः। के ते पञ्चप्रकारा इति चेत्तदुच्यते। 'पृथिव्यादीनि यानि पञ्च भूतानि सन्ति, तद्रूप उपासकस्य 'आत्मा', 'पञ्चविधमुक्थं'। 'एतस्मात्' पञ्चभूतात्मकादुक्थात्, एव 'सर्वमिदं' शरीरजातं, उत्पद्यते। पुनरपि 'एतमेव' उक्थं, 'अप्येति' संहारकाले प्रविशति। न ह्युक्थस्वरूपत्वेन प्रतिपादितानि पञ्चभूतानि विहाय भौतिकस्य शरीरस्योत्पत्तिर्लयो वा सम्भवति। 'यः' पुमान्, 'एवं', एव तस्योक्थस्य पञ्चविधत्वं उपास्ते, स पुमान् 'समानानां' ज्ञातीनां, 'अयनं' आश्रयः, 'भवति' ॥

तेषामुक्थस्वरूपाणां पञ्चभूतानामन्नादिरूपत्वध्यानं विधत्ते । (२)"तस्मिन्योऽन्नञ्चान्नादञ्च वेदाहास्मिन्ननादो जायते भवत्यस्यान्न-मापश्च पृथिवी चान्नमेतन्मयानि ह्यन्नानि भवन्ति ज्योतिश्च वायुश्चान्नादमेताभ्यां हीदं सर्वमन्नमत्त्यावपनमाकाश आकाशे हीदं सर्वं समोप्यत आवपनं ह वै समानानां भवति य एवं वेद"(२) इति । 'तस्मिन्' पञ्चभूतात्मके उक्थे, 'यः' पुमान्, इदं 'अन्न' भोग्यं, इदं 'च','अन्नादं' भोक्तृरूपं, इति विभज्योपास्ते। 'अस्मिन्' उपासके, 'अन्नादः' भोक्तुं समर्थो रोगरहितः पुत्रः, 'आजायते ह'। 'अस्य' च उत्पन्नस्य, अनपेक्षितं सर्वं सम्पद्यत एव। किन्त-दन्नं किं वान्नादमितिचेत् तदुच्यते । पञ्चभूतेषु मध्ये 'आपश्च पृथिवी च', इत्युभयं 'अन्न', यस्माद्व्रीहियवादीनि 'अन्नानि', भूम्युदकविकाररूपाणि 'भवन्ति'। तस्माद्भूम्युदकयोरन्नत्वं युक्तं। तेजश्च 'वायुश्च', इति भूतद्वयं भोक्तृरूपं प्राणवायुना जाठराग्नौ प्रदीपिते सति 'एताभ्यां' अग्निवायुभ्यां, 'सर्वमिदं' अन्नजातं, जनो भक्षयति। तस्माज्ज्योतिर्वाय्वोरन्नादत्वं युक्तं। न च भूत-चतुष्टयस्यैवोपयोगो न त्वाकाशस्येति शङ्कनीयं। आकाशस्य 'आवपनरूपत्वात् । यस्मात् 'आकाशे', 'सर्वमिदं' भोक्तृभोग्य-जातं, 'समोप्यते' सम्यगासमन्तात् प्रक्षिप्यते । तस्मादाकाश-स्यावपनत्वं। 'यः' पुमान्, 'एवं' आकाशस्यावकाशप्रदानेन भोक्तृभोग्याधारत्वं, उपास्ते, स पुमान् 'समानानां' ज्ञातीनां, 'आवपनं' आधारः, 'भवति', एव ॥

उक्थस्वरूपेषु* भूतेषु भोक्तृभोग्यध्यानं विधाय भौतिकेषु

* उक्थस्वरूपेणेति क० ।

तद्ध्यानं विधत्ते। (३)"तस्मिन्योऽन्नञ्चान्नादञ्च वेदाहास्मिन्नन्नादो जायते भवत्यस्यान्नमोषधिवनस्पतयोऽन्नं प्राणभृतोऽन्नादमोषधिवनस्पतीन् हि प्राणभृतोऽदन्ति"(३)इति। ओषधिवनस्पतीनामन्नत्वं प्राणभृतां मनुष्यगवाश्वादीनां भोक्तृत्वञ्च लोके प्रसिद्धमिति द्योतयितुं 'हि' शब्दः॥

अथ प्राणभृत्स्वेव भोक्तृभोग्यविभागध्यानं विधत्ते। (४)"तेषां य उभयतोदन्ताः पुरुषस्यानुविधां विहितास्तेऽन्नादा अन्नमितरे पशवस्तस्मात्त इतरान् पशूनधीव चरन्त्यधीव ह्यन्नेऽन्नादो भवति" (४)इति। 'तेषां' प्राणभृतां, मध्ये, 'ये' केचिदश्वादयः, 'उभयतोदन्ताः' अधोभागे चोर्ध्वभागे च दन्तपङ्क्तियुक्ताः, 'पुरुषस्य विधामनु' मनुष्यस्य प्रकारमनुसृत्य, 'विहिताः' उत्पादिताः। यथा मनुष्यस्य अध ऊर्ध्वञ्च दन्तपङ्क्ती विद्येते, तद्वदश्वादीनामपि। 'ते' मनुष्याश्वादयो भोक्तृरूपाः, तेभ्यः 'इतरे' अधोभाग एव दन्तपङ्क्तियुक्ता गोमहिष्यादयः, 'पशवः',ये सन्ति 'ते','अन्नरूपाः। यस्मादेवं 'तस्मात्', लोके 'ते' उभयतोदन्ताः मनुष्याश्वादयः, 'इतरान्' गोमहिष्यादीन् प्रति, 'अधीव चरन्ति' अधिका इव वर्त्तन्ते। अश्वादीनां मूल्यबाहुल्यात् प्रयत्नातिशयेन रक्ष्यमाणत्वाच्चाधिक्यं। यस्माल्लोकेऽपि व्रीहियवादिकार्ये 'अन्ने', पात्रे प्रक्षिप्ते सति 'अन्नादः' भोक्ता मनुष्यः, 'अधिकः 'इव', 'भवति'। तत्र मनुष्यस्य स्वातन्त्र्यादधिकत्वं। अन्नस्य पारतन्त्र्यान्न्यूनत्वं॥

भोक्तुराधिक्यध्यानस्य फलमाह। (५)"अधीव ह समानानां जायते य एवं वेद"(५) इति॥ १॥

(१)तस्य य आत्मानमाविस्तरां वेदाश्नुते हाविर्भूयः(१) (२)ओषधिवनस्पतयो यच्च किञ्च प्राणभृत्स आत्मानमाविस्तरां वेदौषधिवनस्पतिषु हि रसो दृश्यते चित्तं प्राणभृत्सु(२)(३)प्राणभृत्सु त्वेवाविस्तरामात्मा तेषु हि रसोऽपि दृश्यते न चित्तमितरेषु(३) (४)पुरुषे त्वेवाविस्तरामात्मा स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं सम्पन्नः(४) (५)अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकौ त एतावन्तो भवन्ति यथाप्रज्ञं हि सम्भवाः(५) ॥ २ ॥

ऐतरेयारण्यकभाष्यम् ।

अन्नादिध्यानमुक्त्वा पुरुषस्योक्थरूपस्यात्मचैतन्याविर्भावातिशययुक्तत्वध्यानं विधत्ते। (१)"तस्य य आत्मानमाविस्तरां वेदाश्नुते हाविर्भूयः" इति। 'तस्य' उक्थरूपस्य, पुरुषस्य, शरीरे वर्त्तमानं चिद्रूपं 'आत्मानं', 'आविस्तरां' अतिशयेन प्रकटं, इति 'यः' पुमान्, उपास्ते, स पुमान् 'भूय आविः' अतिशयेन प्रकटत्वं, 'अश्नुते ह' व्याप्नोत्येव, विद्यैश्वर्यादिकीर्त्तिं बहुलां प्राप्नोतीत्यर्थः॥

चैतन्यस्योपाधिविशेषेषु तारतम्येनाविर्भावं दर्शयितुमादावेकमुपाधिमुदाहरति। (२)"ओषधिवनस्पतयो यच्च किञ्च प्राणभृत्स आत्मानमाविस्तरां वेदौषधिवनस्पतिषु हि रसो

दृश्यते चित्तं प्राणभृत्सु"(२) इति । सच्चिदानन्दरूपस्य जगत्कारणस्य परमात्मनः कार्यभूताः सर्वेऽपि पदार्थाः 'आविर्भावोपाधयस्तत्राचेतनेषु मृत्पाषाणादिषु सत्तामात्रमाविर्भवति, न चात्मनो जीवरूपत्वं । ये तु 'ओषधिवनस्पतयः' जीवरूपाः स्थावराः, ये च श्वासरूपप्राणधारिणो जीवरूपा जङ्गमाः, ते उभये अतिशयेनाविर्भावस्थानमिति यो निश्चिनोतीत्यध्याहारः । 'सः' पुमान्, 'आत्मानं', अतिशयेन 'आविर्भूतमुपास्ते । कथं स्थावरजङ्गमजीवयोराविर्भावातिशय इति चेत् तदुच्यते । योऽयं 'ओषधिवनस्पतिषु' स्थावरजीवशरीरेषु, 'रसः' -आर्द्रत्वं, तदेतज्जीवात्मनो लिङ्गं । न हि काष्ठपाषाणादिषु रसोऽस्ति । यदपि 'प्राणभृत्सु' जङ्गमजीवशरीरेषु, 'चित्तं' अन्तःकरणं, तदपि जीवात्मनो लिङ्गं । तच्च मृत्पाषाणादिषु न दृश्यते । अतो रसचित्तयोर्जीवलिङ्गयोर्दर्शनादोषधिध्यानादिषु अतिशयेनाविर्भावः सिद्धः ॥

उदाहृतोपाधावपि स्थावरेभ्यो जङ्गमेषु आविर्भावातिशयं दर्शयति । (३)"प्राणभृत्सु त्वेवाविस्तरामात्मा तेषु हि रसोऽपि दृश्यते न चित्तमितरेषु"(३) इति । 'तु'शब्द ओषधिवनस्पतिव्यावृत्यर्थः । 'प्राणभृत्सु' मनुष्यगवादिषु, 'एव', चिदात्मनः 'आविर्भावातिशयो न त्वोषध्यादिषु । तत्र हेतुरुच्यते । 'तेषु' प्राणभृच्छरीरेषु, रक्तरूपः 'रसः', 'दृश्यते' । 'अपि'शब्देन पूर्वोक्तं चित्तं समुच्चिनोति । अतो लिङ्गद्वयसद्भावादाविर्भावातिशयः । 'इतरेषु' ओषधिवनस्पतिशरीरेषु, 'चित्तं न दृश्यते' । किन्तु रसरूपमेकमेव लिङ्गं । तस्मान्नास्त्यतिशयः ॥

प्राणभृदुपाधिष्वपि तारतम्यं दर्शयति । (४)"पुरुषे त्वेवा-विस्तरामात्मा स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्स-त्येवं सम्पन्नः"(४) इति । मनुष्या गवाश्वादयश्च प्राणभृतः, तेषां मध्ये 'पुरुषे' मनुष्ये, 'एव', अतिशयेनात्माविर्भावो न तु गवा-श्वादिषु । यस्मात् 'सः' मनुष्यः, अत्यन्तं प्रकृष्ट'ज्ञानेन', 'सम्पन्नः'। तदेव कथमिति चेत्तदुच्यते । पूर्वेद्युर्यद्दृष्टं 'विज्ञातं', तत्सर्वमद्य स्मृत्वा ममेदं विदितमिति जनानामग्रे वदितुं समर्थः। तथा पूर्वेद्युर्यद्दृष्टं समीचीनं 'विज्ञातं', तदद्य स्मृत्वा तस्मिन् देशे गत्वा द्रष्टुं समर्थः । यद्यपि गवाश्वादीनां दर्शनसाम-र्थ्यमस्ति, तथापि विवेकाभावान्न साकल्येन दर्शनं । किञ्च यथातीतस्य कथनं तथा 'श्वस्तनं' भविष्यत्कर्त्तव्यमपि,जानाति । तथा 'लोकालोकौ' उत्तमं स्वर्गलोकमधमं नरकलोकं च शा-स्त्रेण विविच्य जानाति । तथा 'मर्त्येन' विनश्वरेण ज्ञानेन कर्मरूपसाधनेन, 'अमृतं' अविनश्वरं मुक्तिपदं, 'ईप्सति', प्राप्तुमिच्छति । 'एवं' अनेन प्रकारेण, मनुष्योऽत्यन्तविवेकेन 'सम्पन्नः' ॥

गवादिपशुषु उक्तवैपरीत्यं दर्शयति । (५)"अथेतरेषां पशूनामशनापिपासे एवाभि विज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकौ त एतावन्तो भवन्ति यथाप्रज्ञं हि सम्भवाः"(५) इति । मनुष्यवैलक्षण्यद्योत-नार्थः 'अथ'शब्दः । तदेव वैलक्षण्यं प्रपञ्च्यते । 'अशना'शब्दे-नाशितुमिच्छोच्यते, अशनायेति पदे यकारस्य लुप्तत्वात् । या च

क्षुधा या च 'पिपासा', ते 'एव', उभे 'अभिलक्ष्य पशूनां 'विज्ञानं', अस्ति। न तु मनुष्यवत् पूर्वविज्ञातकथनादिकं। 'ते' गवादिपशवः, 'एतावन्तः' एतावन्मात्रविज्ञानाः, तात्कालिक-क्षुधादिज्ञानमात्रोपेताः 'भवन्ति'। तत्र हेतुरुच्यते, 'यथाप्रज्ञं'। पूर्वस्मिन् ज्ञानकर्म्मानुष्ठानाधिकारयुक्ते जन्मनि यादृशी प्रज्ञा शास्त्रीया लौकिकी वा अभ्यस्ता, कर्म्मणोऽप्येतदुपलक्षणं। कर्म्मापि विहितं प्रतिषिद्धं वा यादृशमनुष्ठितं तादृशीं प्रज्ञां तादृशं कर्म्म चानतिक्रम्य यस्मात् 'सम्भवाः' प्राणिनां जन्मानि भवन्ति, तस्माज् ज्ञानकर्मानुसारेण पशूनां बुद्धिमान्द्यं युक्तं। एतदेवाभिप्रेत्य परलोकगामिनं जीवं प्रति वाजसनेयिन आमनन्ति। तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च इति। पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन इति च। तदेवं मनुष्यदेहस्योत्तमोपाधित्वात् तस्मिन्नेवात्मन आविर्भावातिशयं ध्यायेत्। यद्यपि देवादिदेहा इतोऽप्युत्तमोपाधयस्तथापि मनुष्यस्यैव प्रायेण शास्त्राधिकारित्वात् पुरुष एवोक्थमयमेव महान् प्रजापतिरिति प्रस्तुतत्वाच्च तस्मिन्नेव ध्यानमुचितं ॥ २ ॥

(१)स एष पुरुषः समुद्रः सर्वं लोकमति यद्व किञ्चाश्नुतेऽत्येनं मन्यते यद्यन्तरिक्षलोकमश्नुतेऽत्येनं मन्यते यद्यमुं लोकमश्नुवीतात्येवैनं मन्येत(१) (२)स एष पुरुषः पञ्चविधस्तस्य यदुष्णन्तज्ज्योतिर्यानि खानि स आकाशोऽथ यल्लोहितं श्लेष्मा रेतस्ता आपो यच्छरीरं सा पृथिवी यः प्राणः स वायुः(२) (३)स एष वायुः पञ्चविधः

प्राणोऽपानो व्यान उदानः समानस्ता एता देवताः प्राणापानयोरेव निविष्टाश्चक्षुः श्रोत्रं मनो वागिति प्राणस्य ह्यन्वपायमेता अपि यन्ति(३) (४)स एष वाचश्चित्तस्योत्तरोत्तरिक्रमो यद्यज्ञः स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः स एष यज्ञानां सम्पन्नतमो यत्सोम एतस्मिन् ह्येताः पञ्चविधा अधिगम्यन्ते यत् प्राक् सवनेभ्यः सैकाविधा त्रीणि सवनानि यदूर्ध्वं सा पञ्चमी(४) ॥ ३ ॥

ऐतरेयारण्यकभाष्यम् ।

पूर्वत्रात्माविर्भावध्यानमुक्तमत्र समुद्ररूपत्वादिध्यानमुच्यते । तत्रादौ पुरुषस्य समुद्ररूपत्वादिध्यानं विधत्ते । (१)"स एष पुरुषः समुद्रः सर्वं लोकमति यद्ध किञ्चाश्नुतेऽत्येनं मन्यते यद्यन्तरिक्षलोकमश्नुतेऽत्येनं मन्यते यद्यमुं लोकमश्नुवीतात्येवैनं मन्येत"(१) इति । पुरुष एवोक्थमिति प्रस्तरूपत्वेन यः पुरुषः प्रक्रान्तः 'स एष पुरुषः', 'समुद्ररूपः । यथा समुद्रस्तटाकनद्यादिकं सर्वमतिक्रम्य प्रौढो वर्त्तते । तथायं पुरुषोऽपि 'सर्वलोकं', 'अतिक्रम्य वर्त्तते । स एवातिक्रमः कथमितिचेत्तदुच्यते । 'यद्ध किञ्च' भूलोके यत्किञ्चिद्भोग्यजातं, 'अश्नुते' व्याप्नोति, तं 'एनं' भोग्यपदार्थं, 'अतिक्रम्य 'मन्यते' 'अन्तरिक्षलोकगतमपि भोग्यं मे भूयादिति कामयते । यदा तु 'अन्तरिक्षलोकगतं प्राप्नोति, तदानीं 'एनं' अपि भोग्यपदार्थं, 'अति-

क्रम्य स्वर्गभोगोऽपि* मे भूयादिति कामयते। तस्यापि प्राप्तौ तमप्यतिक्रम्य सत्यलोकादिभोगोऽपि मे भूयादिति कामयते। एतदेवाभिप्रेत्य शाखान्तरे मन्त्रतद्ब्राह्मणे एवमाम्नायते। कामं समुद्रमाविशेत्याह। समुद्र इव हि कामः। नैव हि कामस्यान्तोऽस्ति न समुद्रस्य इति। अतः समुद्रसमानत्वात् पुरुषे समुद्रध्यानं युक्तं॥

पुरुषशरीरावयवेषु पञ्चभूतध्यानं विधत्ते। (२)"स एष पुरुषः पञ्चविधस्तस्य यदुष्णन्तज्ज्योतिर्यानि खानि स आकाशोऽथ यल्लोहितं श्लेष्मा रेतस्ता आपो यच्छरीरं सा पृथिवी यः प्राणः स वायुः"(२) इति। 'उष्णं' जाठराग्न्यादिरूपं। 'खानि' मुखनासिकादिच्छिद्राणि 'शरीरशब्देन काठिन्यं विवक्षितं। यत् कठिनं सा पृथिवीति श्रुत्यन्तरात्॥

पुरुषशरीरगतस्य प्राणवायोः पञ्चवृत्तिभेदध्यानं विधत्ते। (३)"स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानस्ता एता देवताः प्राणापानयोरेव निविष्टाश्चक्षुः श्रोत्रं मनो वागिति प्राणस्य ह्यन्वपायमेता अपि यन्ति"(३) इति। हृदयादूर्ध्वं मुखनासिकयोः सञ्चरन् 'वायुः' 'प्राणः'। अधोद्वारे सञ्चरन् 'अपानः'। सर्वासु नाडीषु व्याप्य वर्त्तमानः 'व्यानः'। जीवोत्क्रान्त्यादिकं कर्त्तुमूर्ध्वभागे कण्ठेऽवस्थितः 'उदानः'। अन्नपाने साम्येन कृत्स्नशरीरे नेतुं नाभिसमीपेऽवस्थितः 'समानः'। तदेव तद्वायोः पञ्चविधत्वं ध्यायेत्। 'चक्षुःश्रोत्रमनोवागादि'देवताः', अप्यत्र पृथग् ध्यातव्या इति न शङ्कनीयं।

* स्वर्गलोके भोगोऽपि इति क०, ग० स।

तासां देवतानामूर्ध्वाधोभागवर्त्तिनोः 'प्राणापानयोरेव', अन्त-र्भावात्। तदेव कथमितिचेत् तदुच्यते। यस्मात् प्राणस्य 'हि', 'अपायं' देहादपगमनं, 'अनु', सर्वाः 'एताः' चक्षुरादिदेवताः, 'अपियन्ति' लीयन्ते, न देहे तिष्ठन्ति। तस्मादन्तर्भूतत्वान्न पृथग् ध्यानं॥

यज्ञस्य तदवान्तरभेदरूपेण ध्यानं विधत्ते। (४)"स एष वाचश्चित्तस्योत्तरोत्तरिक्रमो यद्यज्ञः स एष यज्ञः पञ्चविधोऽग्नि-होत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः स एष यज्ञानां सम्पन्नतमो यत्सोम एतस्मिन् ह्येताः पञ्चविधा अधिगम्यन्ते यत्प्राक् सवनेभ्यः सैका विधा त्रीणि सवनानि यदूर्ध्वं सा पञ्च-मी"(४) इति। 'वाचः' मन्त्रोच्चारणादिव्यापृतायाः, 'चित्तस्य' शास्त्रविहितार्थपर्य्यालोचने व्यापृतस्यान्तःकरणस्य च, 'उत्तरो-त्तरिक्रमः' एकस्यादितरस्योत्तरत्वं तस्मादप्यन्यस्योत्तरत्वम् इत्ये-वम् उत्तरोत्तरभावो यस्य क्रमस्यास्ति सोऽयं 'उत्तरोत्तरिक्रमः'। क्रमः क्रमणं व्यापार इत्यर्थः। तूष्णीमवस्थानाद् उत्तरभावी मनसा शास्त्रार्थपर्यालोचनव्यापारः। ततोऽप्युत्तरभावी वाचा मन्त्रोच्चारणव्यापारः। तदुभयव्यापाररूपः 'यज्ञः', इति 'यत्', अस्ति, 'स एषः' उक्थात्मकपुरुषरूपः प्राणदेवः, 'सः' च यज्ञा-त्मकः प्राणः, 'अग्निहोत्रादिभेदैः 'पञ्चविधः', इति ध्यायेत्। न च सोमादप्यधिकं किञ्चित् कर्मान्तरं कुतो नोच्यत इति वाच्यं। अत्यधिकस्य कर्मान्तरस्याभावात्। 'सोम'याग इति यदस्ति, 'स एषः', 'यज्ञानां', मध्ये अतिशयेन 'सम्पन्नः, यस्मात् 'एत-स्मिन्' सोमयागे, 'पञ्चप्रकारमनुष्ठानं दृश्यते। सुत्यादिने-

ऽनुष्ठेयेभ्यः 'सवनेभ्यः', प्राचीनं दीक्षणीयादिकं 'यत्', अस्ति, सोऽयमेकः प्रकारः। प्रातःसवनं माध्यन्दिनसवनं तृतीयसवनञ्चेति प्रकारत्रयं। 'सवनेभ्यः', 'ऊर्ध्व'' अवभृथमारभ्योदवसानीयान्तं, 'यत्' कर्मजातं, अस्ति, सोऽयं 'पञ्चमः प्रकारः। एतेषां पञ्चप्रकाराणां सोमयागादन्यत्रासम्भवात् सोमयाग एव 'सम्पन्नतमः' ॥ ३ ॥

(१)यो ह वै यज्ञे यज्ञं वेदाहन्यहर्दैवेषु देवमध्यूळ्हं स सम्प्रतिविदेष वै यज्ञे यज्ञोऽहन्यहर्दैवेषु देवोऽध्यूळ्हो यदेतन्महदुक्थं(१) (२)तदेतत् पञ्चविधं त्रिवृत्पञ्चदशं सप्तदशमेकविंशं पञ्चविंशमिति स्तोमतो गायत्रं रथन्तरं बृहद् भद्रं राजनमिति सामतो गायत्र्युष्णिग् बृहती त्रिष्टुब् द्विपदेतिच्छन्दस्तः शिरो दक्षिणः पक्ष उत्तरः पक्षः पुच्छमात्मेत्याख्यानं(२) (३)पञ्चकृत्वः प्रस्तौति पञ्चकृत्व उद्गायति पञ्चकृत्वः प्रतिहरति पञ्चकृत्व उपद्रवति पञ्चकृत्वो निधनमुपयन्ति तत् स्तोभसहस्रं भवति(३) (४)एवं होताः पञ्चविधा अनुशस्यन्ते यत् प्राक् तृचाशीतिभ्यः सैका विधा तिस्रस्तृचाशीतयो यदूर्ध्वं सा पञ्चमी(४) (५)तदेतत् सहस्रं तत् सर्वं तानि दश दशेति वै सर्वमेतावती हि सङ्ख्या दश दशतस्तच्छतं दशशतानि तत् सहस्रं तत् सर्वं तानि त्रीणि छन्दांसि भवन्ति

त्रेधा विहितं वा इदमन्नमशनं पानं खादस्तदेतैराप्नोति(५) ॥ ४ ॥

ऐतरेयारण्यकभाष्यम् ।

पूर्वत्र समुद्ररूपत्वादिध्यानमुक्तं । अत्र स्तोमपञ्चकादिरूपत्वध्यानमुच्यते। तस्मिन् ध्याने प्ररोचनार्थं प्राणरूपमुक्थं प्रशंसति। (१)"यो ह वै यज्ञे यज्ञं वेदाहन्यहर्देवेषु देवमध्यूढ्हं स सम्प्रतिविदेष वै यज्ञे यज्ञोऽहन्यहर्देवेषु देवोऽध्यूढ्हो यदेतन् महदुक्थं"(२) इति। यथा हस्तिनोऽप्यत्यन्तश्रेष्ठो राजा हस्तिनमारोहति। एवमत्र श्रेष्ठ यज्ञ इतरं 'यज्ञं', अधिरूढ इत्युपचर्य्यते। तथैव उत्कृष्टं 'अहः', इतरस्मिन् 'अहनि', अधिरूढं। उत्तमश्च देव इतरेषु 'देवेषु', अधिरूढः। तथा सति 'यः' पुमान्, अधमयज्ञादिषु 'अध्यूढ्हं' उपर्य्यवस्थितमुत्तमयज्ञादिरूपं, उपास्ते, 'सः' पुमान्, 'सम्प्रतिवित्' सम्यगभिज्ञः। कोऽसावुत्तमयज्ञादिरूपः पदार्थ इति चेदुच्यते। 'यदेतत्', 'महदुक्थं' प्रौढं निष्केवल्यशस्त्रं, 'एषः', एव उत्तमयज्ञादिरूपः। सोमयागस्य सम्पन्नतमत्वं पूर्वमुक्तं। अतो वर्त्तमानः संवत्सरसत्राख्योऽयं सोमयाग इतरयज्ञेऽग्निहोत्रादावधिरूढः। तथा महद् व्रतं महतो व्रतमित्यादिनिर्वचनविशेषस्य पूर्वमेव दर्शितत्वान् महाव्रताख्यमेतदहरितरस्मिन् 'अहनि', अधिरूढं। 'देवः' च प्राणरूपः, श्रेष्ठत्वाद् वागादिदेवेषु, अधिरूढस्तद्रूपत्वात् 'उक्थं', अधिकम् ॥

तस्योक्थस्य पञ्चविधत्वध्यानं विधत्ते। (२)"तदेतत्पञ्च-

विधन्निवृत्पञ्चदशं सप्तदशमेकविंशं पञ्चविंशमिति स्तोमतो गायत्रं रथन्तरं बृहद्भद्रं राजनमिति सामतो गायत्र्युष्णिग् बृहती त्रिष्टुब् द्विपदेतिच्छन्दस्तः शिरो दक्षिणः पक्ष उत्तरः पक्षः पुच्छमात्मेत्याख्यानं"(२) इति। गीयमानऋचावस्थिता- नामृग्विशेषाणां समूहः 'स्तोमः', स च सामगैः 'त्रिवृदादिनाम्ना व्यवह्रियते। तत्र त्रिवृत्स्तोमस्य स्वरूपं सामब्राह्मणे समाम्नातं। तिसृभ्यो हिङ्करोति स प्रथमया तिसृभ्यो हिङ्करोति स मध्य- मया तिसृभ्यो हिङ्करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिरिति। अयमर्थः। उपास्मै गायतेत्यादीनि ऋचात्मकानि त्रीणि सूक्तानि सन्ति, तेषु तिसृभिर्ऋग्भिर्हिङ्करोति गायेत्। काभि- स्तिसृभिः। प्रथमया त्रिष्वपि सूक्तेषु या या प्रथमा तया स उद्गाता गायेत्। तथा सति तिसृभिर्गीतं भवति। सोऽयं प्रथमः पर्यायः। द्वितीये सूक्तत्रयगतया मध्यमया गायेत्। तृतीये* सूक्तत्रयगतयोत्तमया गायेत्। अनेन प्रकारेण त्रिवृत्- स्तोमसम्बन्धिनी विशिष्टा स्तुतिः सम्पद्यते। सेयं स्तुतिरुद्य- तीति नाम्नाभिधीयत इति। पञ्चदशस्तोम एवमाम्नातः। पञ्चभ्यो हिङ्करोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया पञ्चभ्यो हिङ्करोति स एकया स एकया स तिसृभिः पञ्चपञ्चिनी पञ्चदशस्य विष्टुतिरिति। पूर्वोक्तत्रिवृत्स्तोम एक एव सूक्तत्रयनिष्पाद्यः। अन्ये तु स्तोमा एकेनैव ऋचात्मकेन सूक्तेन निष्पाद्यन्ते। तत्रायं क्रमः। प्रथमपर्याये आवृत्तिसहिताभिः पञ्चभिर्ऋग्भिर्गा-

* तृतीये पर्याये इति क०, ग० च।

येत्। तद्यथा, प्रथमामृचन्त्रिर्गायेत्। इतरे द्वे सकृत् सकृद्गायेत्। द्वितीयपर्याये मध्यमान्त्रिर्गायेत्। तृतीयपर्याये उत्तमान्त्रिर्गायेत्। सेयं पञ्चदशस्तोमस्य सम्बन्धिनी विष्टुतिरिति। पञ्चपञ्चिनीति नाम्ना व्यवह्रियते। सप्तदशस्तोम एवमाम्नातः। पञ्चभ्यो हिङ्करोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिर्दशसप्तसप्तदशस्य विष्टुतिरिति। प्रथमपर्याये प्रथमामृचं त्रिर्गायेत्। द्वितीयपर्याये मध्यमान्त्रिर्गायेत्। तृतीयपर्याये मध्यमामुत्तमाञ्च निर्गायेत्। सेयं सप्तदशस्तोमसम्बन्धिनी विष्टुतिः। सेयं दशसप्तेत्युच्यते। एकविंशस्तोम एवमाम्नातः। सप्तभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स एकया सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिः सप्तभ्यो हिङ्करोति स तिसृभिः स एकया स तिसृभिः सप्तसप्तिन्येकविंशस्य विष्टुतिरिति। प्रथमपर्याये उत्तमां सकृद्गायेत्। द्वितीयपर्याये प्रथमां सकृद्गायेत्। तृतीयपर्याये मध्यमां सकृद्गायेत्। सेयमेकविंशस्तोमस्य सम्बन्धिनी विष्टुतिः सप्तसप्तिनीति नाम्ना व्यवह्रियते। पञ्चविंशस्तोमस्य त्वावृत्तिप्रकारभेदः सामसूत्रे द्रष्टव्यः। पञ्चविंशस्तोमस्यैवं विष्टुतिः। अष्टाभ्यो हिङ्करोति स तिसृभिः स चतसृभिः स एकया। अष्टाभ्यो हिङ्करोति स एकया स तिसृभिः स चतसृभिः। नवभ्यो हिङ्करोति स पञ्चभिः स एकया स तिसृभिः इति। ध्यानजप्यमनेनैकपञ्चः। नवभ्यो हिङ्करोति स चतसृभिः स द्वाभ्यां स तिसृभिरिति।

यदि चरमावापपक्षो गौतमीयः, तदेवमुक्थं स्तोमवशात् 'पञ्च

विधं', ध्यायेत्। तत्सवितुर्वरेण्यमित्यस्यामृच्युत्पन्नं* साम 'गायत्रनामकं। अभि त्वा शूरेत्यस्यामृच्युत्पन्नं† 'रथन्तरं'। त्वामिद्धि हवामह इत्यस्यामृच्युत्पन्नं 'बृहत्'। इमा नु कमित्यस्यामृच्युत्पन्नं 'भद्रं'। इन्द्रं नरो नेमधितेत्यस्यामृच्युत्पन्नं 'राजनं'। एवमुक्थस्य 'सामतः', पञ्चविधत्वं। चतुर्विंशत्यक्षरा 'गायत्री'। अष्टाविंशत्यक्षरा 'उष्णिक्'। षट्त्रिंशदक्षरा 'बृहती'। चतुश्चत्वारिंशदक्षरा 'त्रिष्टुप्'। पादद्वयेनैव निष्पन्ना 'द्विपदा'। इत्येवं छन्दोवशात् पञ्चविधत्वं। यथा पक्षिणः शिरःपक्षाद्यवयवास्तथा निष्केवल्यशस्त्रस्येन्द्रमिद्गाथिन इत्यादिमन्त्रसमूहः 'शिरः'। अभि त्वा शूरेत्यादिको 'दक्षिणः पक्षः'। त्वामिद्धीत्यादिकः 'उत्तरः पक्षः'। इमानुकमित्यादिसमूहः 'पुच्छं'। तदिदासेत्यादिको मध्यशरीररूपः 'आत्मा'। 'इति' एवं पक्षिरूपं, ब्राह्मणेनाख्यायते। तदेतदाख्यायमानं पञ्चविधं पक्षिरूपं उक्थे ध्यायेदित्यर्थः॥

प्रकारान्तरेण पञ्चविधत्वध्यानं विधत्ते। (२) "पञ्चकृत्वः प्रस्तौति पञ्चकृत्व उद्गायति पञ्चकृत्वः प्रतिहरति पञ्चकृत्व उपद्रवति पञ्चकृत्वो निधनमुपयन्ति तत् स्तोभसहस्रं भवति" (२) इति। सामगा महाव्रते राजनेन साम्ना स्तुवते। साम्नि पञ्चभागाः सन्ति। प्रस्ताव उद्गीथः प्रतिहार उपद्रवो निधनम् इत्येते भागाः। तत्र प्रस्तावभागं गायन् प्रस्तोता 'पञ्चकृत्वः', आवृत्तं गायति। एवमुद्गातृप्रतिहर्त्तारौ स्वस्वभागं 'पञ्च-

---

* ऋग्वेदे म०३, सू०६२, ऋ०१०।

† ऋग्वेदे म०७, सू०३२, ऋ०२२।

त्वः', 'उद्गायतः'। ऋत्विगन्तराभावाद् उपद्रवभागमुद्गातैव गायति। सोऽपि 'पञ्चकृत्वः', गायति। सर्वे 'निधनमुपयन्ति', इतिविधानात् प्रस्तोत्रादयः सर्वेऽपि 'पञ्चकृत्वः', 'निधनभागं गायन्ति। एवं सत्यत्र भागभेदेन यत्पञ्चविधत्वं यच्चैकैकस्या-वृत्त्या पञ्चविधत्वं तदुभयमुक्थे ध्यातव्यं। प्रस्तावादिभागानां यत्पञ्चकृत्वो गानमस्ति, तस्मिन् गाने स्तोभानां सहस्रं सम्पद्यते। ऋगक्षरव्यतिरेकेण गीतिपूरणार्थं येऽक्षरसमूहाः प्रक्षिप्यन्ते ते 'स्तोभसञ्ज्ञकाः, तेषां सहस्रत्वसम्पादनं सामसूत्रे द्रष्टव्यं। सेयं सहस्रसङ्ख्या यथोक्तपञ्चविधत्वप्रशंसार्थमुपन्यस्यते॥

प्रकारान्तरेण पञ्चविधत्वध्यानं विधत्ते। (४)"एवं ह्येताः पञ्चविधा अनुशस्यन्ते यत् प्राक् तृचाशीतिभ्यः सैका विधा तिस्रस्तृचाशीतयो यदूर्ध्वं सा पञ्चमी"(४) इति। यथा प्रस्ता-वादिभागैस्तदावृत्तिभिश्च पञ्चविधं स्तोत्रं सामगाः सम्पादय-न्ति। 'एवं', एव, 'एताः' निष्केवल्यगता ऋचः, होत्रा 'पञ्च-विधा अनुशस्यन्ते'। कथं पाञ्चविध्यमितिचेत् तदुच्यते। महाँ इन्द्रो य ओजसेत्यादिका येयं गायत्री तृचाशीतिः, या च माचिदन्यदित्यादिका बार्हती तृचाशीतिः। यापि य इन्द्र सोमपातम इत्यादिकौष्णिही तृचाशीतिः। तास्तिस्रस्तृचा-शीतयः शस्त्रपक्षिणोऽङ्गरूपाः, ताभ्यः प्राचीनं आत्मशिरःपक्षा-दिभागरूपं 'यत्' मन्त्रजातमस्ति, 'सा', इयं 'एक विधा'। 'तृचा-शीतयः', तु त्रिविधाः। ताभ्यः 'ऊर्ध्वं", उदरभाग ऊरुभा-गश्चेत्येवं रूपं, 'यत्' मन्त्रजातं, अस्ति 'सा', 'पञ्चमी', विधा। तदेतत् शस्त्रस्य पञ्चविधत्वं ध्यायेत्॥

तदेतच्छस्त्रगतं पञ्चविधत्वं प्रशंसति। (५)"तदेतत् सहस्रं तत्सर्वन्तानि दश दशेति वै सर्वमेतावती हि सङ्ख्या दश-दशतस्तच्छतं दशशतानि तत् सहस्रं तत् सर्वन्तानि त्रीणि छन्दांसि भवन्ति त्रेधाविहितं वा इदमन्नमशनं पानं खादस्तदेतैराप्नोति"(५) इति। यथोक्तपञ्चविधे शस्त्रे यदेतत् मन्त्रजातं अस्ति, 'तत् सर्वं', मिलित्वा बुद्धिकौशलेनाक्षरगणनया बृहतीसहस्रं सम्पद्यते। पूर्वोक्तस्तोभद्वारा बृहतीद्वारा च यत् 'सहस्रं', सम्पन्नं 'तत्सर्वं', न हि सहस्रव्यतिरेकेण किञ्चिज् जगदस्ति। अशेषसङ्ख्यायाः सहस्रेऽन्तर्भावात्। सङ्ख्येयस्य च वस्तुजातस्य सङ्ख्यायामन्तर्भावात् कथमशेषसङ्ख्यायाः सहस्रे-ऽन्तर्भाव इति चेत्। उच्यते। 'तानि' सङ्ख्यापर्वाणि, 'दश-दशेति', एव व्यवह्रियन्ते। अतस्तत्सङ्ख्याजातं 'सर्वं', सहस्रेऽस्ति। दशशब्देन यावत्युच्यते 'एतावती', एव लोके विद्यमाना सर्वा सङ्ख्या। न ह्यितोऽधिका काचिदस्ति। तथाहि एकं द्वे त्रीणि एवङ्गणनायां दशपर्यन्ता नूतना 'सङ्ख्या', तत-ऊर्ध्वन्तस्या एव सङ्ख्याया आवृत्तिर्गण्यते। एकादश द्वादशे-त्येवं दशकादूर्ध्वमेकादिसङ्ख्याया एव व्यवह्रियमाणत्वात्। शतं सहस्रमयुतमित्यादिकं सङ्ख्यान्तरं विद्यत इति चेन्न। तस्या अप्यावृत्तायां दशसङ्ख्यायामन्तर्भावात्। 'दशदशतः', इत्यादिनान्तर्भाव एवोदाहृत्य प्रदर्श्यते। नकारान्तो दशञ्छब्दो दशानां समूहं ब्रूते। पञ्चदशतौ वर्गे वेति पाणिनिना सूचित-त्वात्। दशसङ्ख्याकानि वर्गरूपाणि दशकानि यानि सन्ति तानि मिलित्वा शतशब्देनोच्यन्ते। तथा दशसङ्ख्याकानि

शतानि यानि सन्ति तानि मिलित्वा 'सहस्रशब्देनोच्यन्ते'। एवं दशत्वसङ्ख्यावृत्तिबलादेवायुतलक्षादिनिष्पत्तेः 'तत् सर्वं' सङ्ख्याजातं, यथोक्तेष्वेव दशशतसहस्ररूपेषु सङ्ख्यापर्वस्वन्तर्भवति। यद्यपि दशसङ्ख्यायामेवान्तर्भावस्तथापि तद्व्युत्पत्तये शतसङ्ख्या सहस्रसङ्ख्या च उदाहरणीया। तस्मात् 'तानि' सङ्ख्यापर्वाणि, 'त्रीणि', 'छन्दांसि' छादकानि सर्वसङ्ख्याव्यापकानि, 'भवन्ति'। तच्च पर्वत्रयन्त्रेधेत्यादिना प्रशस्यते। लोके प्राणिभिर्भुज्यमानं यत् 'इदमन्नं', अस्ति, 'तत्', 'त्रेधाविहितं'। 'अशनं' ओदनरूपं, 'पानं' जलक्षीरादिरूपं, 'खादः' लड्डुकादिः, 'तत्' च त्रिविधमन्नं, 'एतैः' दशशतं सहस्रमित्येवंरूपैस्त्रिभिः सङ्ख्यापर्वभिः प्राप्नोति। फलेन प्रशस्यमानत्वात् पर्वत्रयमध्यातव्यम् ॥ ४ ॥

(१)तद्वा इदं बृहतीसहस्रं सम्पन्नं(१) (२)तद्वैतदेके नानाच्छन्दसां सहस्रं प्रतिजानते किमन्यत् सदन्यद् ब्रूयामेति(२) (३)त्रिष्टुप्सहस्रमेके जगतीसहस्रमेकेऽनुष्टुप्सहस्रमेके(३) (४)तदुक्तमृषिणा(४) (५)अनुष्टुभमनुचर्चूर्यमाणमिन्द्रं निचिक्युः कवयो मनीषेति वाचि वै तदैन्द्रं प्राणं न्यचायन्नित्येतत्तदुक्तं भवति(५) (६)सद्वेश्वरो यशस्वी कल्याणकीर्त्तिर्भवितोः(६) (७)ईश्वरो ह तु पुरायुषः प्रैतोरिति ह स्माहाकृत्स्नो ह्येष आत्मा यद्वागभि हि प्राणेन मनसेऽस्यमानो वाचा नानुभवति(७) (८)बृह-

तीमभिसम्पादयेदेष वै कृत्स्न आत्मा यद्बृहती(८) (९)सोऽयमात्मा सर्वतः शरीरैः परिवृतस्तद्यथायमात्मा सर्वतः शरीरैः परिवृत एवमेव बृहती सर्वतश्छन्दोभिः परिवृता(९) (१०)मध्यं ह्येषामङ्गानामात्मा मध्यं छन्दसां बृहती(१०) (११)स हेश्वरो यशस्वी कल्याणकीर्त्तिर्भवितोरीश्वरो ह तु पुरायुषः प्रैतोरिति ह स्माह कृत्स्नो ह्येष आत्मा यद्बृहती तस्माद्बृहतीमेवाभिसम्पादयेत्(११) ॥ ५ ॥

ऐतरेयारण्यकभाष्यम्।

उक्थस्य पञ्चविधत्वादिध्यानमभिधाय बृहतीसहस्ररूपत्वध्यानं विधत्ते। (१)"तद्वा इदं बृहतीसहस्रं सम्पन्नम्"(१) इति। यन्निष्केवल्यं शस्त्रम् उपासनायां प्रतीकत्वेन प्रकृतं 'तत्', एव, 'इदं', अक्षरगणनया 'बृहतीच्छन्दस्कानामृचां 'सहस्रं', 'सम्पन्नं', इति ध्यायेत्॥

तदेतत् स्वमतं प्रशंसितुं परमतमुपन्यस्यति। (२)"तद्धैतदेके नानाच्छन्दसां सहस्रं प्रतिजानते किमन्यत् सदन्यद् ब्रूयामेति"(२) इति। 'एके' शाखिनः, 'नानाविधानां 'छन्दसां', 'सहस्ररूपं निष्केवल्यशस्त्रमिति 'प्रतिज्ञां कुर्वन्ति। तत्र सहस्रसम्पादन एव नियमो न तु बृहतीछन्दसि इति तेषामभिप्रायः। ते हि परस्परं विचार्य निश्चिन्वन्ति प्रकृतात् बृहतीसहस्रात् 'अन्यत्' छन्दोन्तरयुक्तं सहस्रं', 'किं', 'सत्' समीचीनं, 'इति' एवं, एकस्य प्रश्नः। अन्येतरस्योत्तरार्थं 'सत्-

शब्द आवर्त्तनीयः। प्रश्नोत्तराभ्यां मतान्तरस्य सम्यक्त्वनिश्चयाद् बृहतीसहस्रात् 'अन्यत्' छन्दोऽन्तरयुक्तं सहस्रं, 'ब्रूयामेति' परस्परमुक्तवन्तः॥

अन्यत्र पक्षेऽप्यवान्तरमतभेदान् दर्शयति। (३)"त्रिष्टुप्सहस्रमेके जगतीसहस्रमेकेऽनुष्टुप्सहस्रमेके"(३) इति॥

तत्रानुष्टुब्वादिनः स्वमतप्रशंसार्थं मन्त्रमुदाहरन्ति। (४)"तदुक्तमृषिणा"(४)इति। स च मन्त्रः संहितायामेवमाम्नातः। "बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तं। अनुष्टुभमनुचर्चूर्य्यमाणमिन्द्रं निचिक्युः कवयो मनीषा" इति*। योऽयं इन्द्रोऽस्ति तमिन्द्रमभिज्ञाः पुरुषा हंसमाहुः। हन्ति वर्षणाय मेघं भिनत्तीति हंसः। कीदृशमिन्द्रं। दिव्यानां द्युलोकवर्त्तिमेवस्थितानामपां सख्ये चरन्तं। आपो हि स्वप्रवर्त्तकत्वेन इन्द्रं सखायं मन्यन्ते। कीदृशीनामपां बीभत्सूनां। बन्धनसम्बन्धमिच्छन्त्यो बीभत्सवः। मेघगता ह्यापः स्थावर-जङ्गमप्राणिनामुपकारं कर्त्तुन्तैः प्राणिभिः सह भूमौ सम्बन्धमिच्छन्ति। अतस्तादृशीनामपां भूमौ प्रेरणाय इन्द्रस्ताभिरद्भिः सह युज्यते। तादृशं सयुजमाहुरित्यन्वयः। अनुष्टुप्शब्देन मेघगर्जनरूपात् वागुपलक्ष्यते। वाग्वा अनुष्टुप् इति श्रुतेः। तादृशीमनुष्टुप्शब्दोपलक्षितां गर्जनरूपां वाचमनुसृत्य चर्चूर्यमाणं पुनः पुनश्चरन्तमिन्द्रं परमैश्वर्य्ययुक्तं प्राणदेवं कवयो मेधाविन उपासका मनीषा मननेन विवेकज्ञानेन निचिक्युर्नितरामुपचितवन्तो ध्यातवन्त इत्यर्थः॥

---

* ऋग्वेदे म०१०, सू०१२४, ऋ० ९।

अस्य मन्त्रस्योत्तरार्द्धं प्रकृतस्यानुष्टुप्पक्षस्योपयुक्तं व्याचष्टे। (५)"अनुष्टुभमनुचर्चूर्य्यमाणमिन्द्रं निचिक्युः कवयो मनीषिणि वाचि वै तदैन्द्रं प्राणन्न्यचायन्नित्येतत्तदुक्तं भवति"(५)इति। अनुष्टुप्शब्दोपलक्षितायां 'वाचि', एव 'तदा' उपासनकाले, 'प्राणं', इन्द्रसम्बन्धिनं, 'न्यचायन्' नितरां ध्यातवन्त इत्यर्थः। 'एतत्' अर्थजातं, 'तत्' तेन उत्तरार्द्धेन, 'उक्तं भवति'॥

अस्मिन्पक्षे पूर्ववादिनोऽभिमतं गुणं दर्शयति। (६)"स हेश्वरो यशस्वी कल्याणकीर्त्तिर्भवितोः"(६) इति। 'सः'नुष्टुप्सहस्रेण शंसिता होता, 'यशोयुक्तः पुण्यकीर्त्तियुक्तश्च 'भवितोरीश्वरः' भवितुं प्रभुः, भवति। यशः, धनादिनिमित्तं लौकिकं, 'कल्याणकीर्त्तिः', यागादिनिमित्ता वैदिकी। त्रिष्टुब्जगतीपक्षयोरप्ययं गुणो द्रष्टव्यः॥

इदानीं सिद्धान्ती तस्मिन् अनुष्टुप्पक्षे दोषं दर्शयति। (७)"ईश्वरो ह तु पुरायुषः प्रैतोरिति ह स्माहाकृत्स्नो ह्येष आत्मा यद्वागभि हि प्राणेन मनसेऽस्यमानो वाचा नानुभवति"(७) इति। 'तु'शब्देन अनुष्टुप्पक्षो निराक्रियते। अनुष्टुप्सहस्रेण शंसन् होता, क्रमात् 'आयुषः', 'पुरा', 'प्रैतोरीश्वरः' भवति मर्त्तुं प्रभुर्भवति, अपमृत्युना म्रियत इत्यर्थः। इत्येवं अभिज्ञः पुरुषः 'आहस्म' युक्तश्चैतदभिज्ञस्य वचनं। अनुष्टुबुत्पन्नस्यात्मनोऽकृत्स्नत्वात्। कथमकृत्स्नत्वमिति चेत् तदुच्यते। 'यत्' यदा, 'वागभि हि' वाग्रूपत्वेन स्तुतामनुष्टुभमेवाभिलक्ष्य, शस्त्रे प्रवर्त्तते न तु प्राणत्वेन स्तुते बृहतीसहस्रे प्रवर्त्तते। वाग्वा अनुष्टुप् प्राणो बृहतीत्येवं हि तद्ब्रू-

पेण* स्तुतिः। तदानीं प्राणरूपां बृहतीमुपेक्ष्य वागूपायां अनुष्टु-ब्येव 'मनसेऽस्यमानः' स्वचित्तेनास्यमानः प्रेर्य्यमाणः, होता, स्वकीयया 'वाचा', तच्छस्त्रं 'नानु भवति'। न हि वाचि प्राणशक्तिसाहाय्यमन्तरेण केवलमानसेच्छामात्रेण होता वाचा शस्त्रं वक्तुं क्षमते। सर्वस्य इन्द्रियव्यापारस्य प्राणाधीन-त्वात्॥

एवमकृत्स्नत्वदोषेण इतरपक्षं निन्दित्वा स्वपक्षं समर्थयते। (८)"बृहतीमभि सम्पादयेदेष वै कृत्स्न आत्मा यत् बृहती"(८) इति। अक्षरगणनया 'बृहतीं', 'सम्पाद्य 'यत्' यदा, ध्यायेत् तदानीं 'बृहती', इति यदस्ति प्राणरूपः 'एषः', एव प्राणः, 'कृत्स्नः' सम्पूर्णः, 'आत्मा'। प्राणो बृहतीत्युक्तत्वात् बृहत्याः प्राणरूपत्वं। प्राणस्याभिवदनादिसर्वेन्द्रियव्यापारनिष्पादकत्वात् सम्पूर्ण आत्मा॥

लौकिकजीवात्मदृष्टान्तेन बृहतीं प्रशंसति। (९)"सोऽय-मात्मा सर्वतः शरीरैः परिवृतस्तद्यथायमात्मा सर्वतः शरीरैः परिवृतः एवमेव बृहती सर्वतश्छन्दोभिः परिवृता"(९) इति। देहमध्यवर्त्ती लोकप्रसिद्धो यो जीवात्मा 'सोऽयं परिवृतः' सर्वासु दिक्षु शरीरावयवैर्वेष्टितः, वर्त्तते। 'तत्' तथा सति, जीवात्मवदेव 'बृहती', अपि सहस्रत्वेन सम्पादिता सती 'सर्वतः' शस्त्रमध्ये सर्वेषु स्थानेषु, 'छन्दोभिः' अध्ययनकालीनैस्तत्तदृक्गतैर्गायत्र्या-दिभिः, सर्वतो वेष्टिता।

जीवात्मदृष्टान्तेन प्रशस्य मध्यशरीरदृष्टान्तेनापि प्रशंस-

* तत्तद्रूपेणेति क॰, ग॰ घ।

ति। (१०)"मध्यं ह्येषामङ्गानामात्मा मध्यं छन्दसां बृहती"(१०) इति। जीवात्मनोऽवस्थानप्रदेशत्वात् हृदयरूपो मध्यदेहभागोऽत्रात्मशब्देन विवक्षितः। स च 'अङ्गानां' एतेषां हस्तपदादीनां, 'मध्यं', भवति। तथा 'छन्दसां', मध्ये, 'बृहती मध्यं' न्यूनानां गायत्र्यादीनामधिकानां त्रिष्टुबादीनाञ्च बृहत्या अभितो विद्यमानत्वात्।

अनुष्टुप्पक्षोक्तदोषं स्मरते तत्परिहारश्चानूद्य स्वमतमुपसंहरति। (११)"स हेश्वरो यशस्वी कल्याणकीर्त्तिर्भवितोरीश्वरो ह तु पुरायुषः प्रैतोरिति ह स्माह कृत्स्नो ह्येष आत्मा यद्बृहती तस्मात् बृहतीमेवाभि सम्पादयेत्"(११) इति॥ ५॥

(१)तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्यैकादशानुष्टुभां शतानि भवन्ति पञ्चविंशतिश्चानुष्टुभ आत्तं वै भूयसा कनीयः(१) (२)तदुक्तमृषिणा(२)(३)वाचमष्टापदीमहमित्यष्टौ हि चतुरक्षराणि भवन्ति(३) (४)नवस्रक्तिमिति बृहती सम्पद्यमाना नवस्रक्ति(४) (५)ऋतस्पृशमिति सत्यं वै वागृचा स्पृष्टा(५) (६)इन्द्रात्परि तन्वं मम इति तद्यदेवैतद् बृहतीसहस्रमनुष्टुप्सम्पन्नं भवति तस्मात्तदैन्द्रात् प्राणाद् बृहत्यै वाचमनुष्टुभं तन्वं सन्निर्मिमीते(६) (७)स वा एष वाचः परमो विकारो यदेतन्महदुक्थं तदेतत् पञ्चविधं मितममितं

स्वरः सत्यानृते इति(७) (८)ऋग्गाथा कुम्बना तन्मितं यजु-
र्निगदो वृथा वाक्तदमितं सामाथो यः कश्च गेष्णः सः स्वर
ओ३मिति सत्यन्नेत्यनृतं(८) (९)तदेतत् पुष्पं फलं वाचो
यत् सत्यं स हेश्वरो यशस्वी कल्याणकीर्त्तिर्भवितोः पुष्पं
हि फलं वाचः सत्यं वदति(९) (१०)अथैतन्मूलं वाचो
यदनृतं तद्यथा वृत्त आविर्मूलः शुष्यति स उद्वर्त्तत एव-
मेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स
उद्वर्त्तते तस्मादनृतन्नवदेद्दयेत त्वेनेन(१०) (११)परागवा
एतद्रिक्तमक्षरं यदेतदो३मिति तद्यत् किञ्चोमित्याहा-
त्रैवास्मै तद्रिच्यते स यत् सर्वमोङ्कुर्याद्रिञ्च्यादात्मानं
स कामेभ्यो नालं स्यात्(११) (१२)अथैतत् पूर्णमभ्यात्मं
यन्नेति स यत् सर्वन्नेति ब्रूयात् पापिकास्य कीर्त्तिर्जा-
येत सैनं तत्रैव हन्यात्(१२) (१३)तस्मात्काल एव दद्यात्
कालेन दद्यात् तत् सथ्यानृते मिथुनीकरोति तयोर्मि-
थुनात् प्रजायते भूयान् भवति(१३) (१४)यो वै तां वाचं वेद
यस्या एष विकारः स सम्प्रतिविदकारो वै सर्वा वाक्
सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति(१४)
(१५)तस्यै यदुपांशु स प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मा-
त्तत्तिर इव तिर इव ह्यशरीरमशरीरो हि प्राणोऽथ यदुच्चै-
स्तच्छरीरं तस्मात्तदाविराविर्हि शरीरं(१५) ॥ ६ ॥

यथा बृहतीसहस्रं सम्पाद्य ध्यानमुक्तं तथैवानुष्टुप्सम्पादनेनापि ध्यानमुच्यते। यद्वानुष्टुबन्तर्भावसम्पादने बृहती प्रशस्यते। (१)"तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्यैकादशानुष्टुभां शतानि भवन्ति पञ्चविंशतिश्चानुष्टुभः आप्तं वै भूयसा कनीयः"(१)इति। षट्त्रिंशदक्षरायां एकैकस्यां बृहत्यां द्वात्रिंशदक्षराया अनुष्टुभ ऊर्ध्वमक्षराणि चत्वार्य्यतिरिच्यन्ते तेषाञ्चातिरिक्तानामक्षराणां सहस्रेऽपि शस्ते सहस्रचतुष्टयं भवति। तत्रानुष्टुप्सम्पादने सति 'पञ्चविंशत्युत्तरशतसङ्ख्याकाः 'अनुष्टुभः', भवन्ति। लोकेऽपि 'भूयसा' अधिकेन सङ्ख्याविशेषेण, न्यूनसङ्ख्यास्वरूपं 'आप्तं वै' स्वीकृतमेव व्याप्तमेव। तद्यथा शते पञ्चाशत्सङ्ख्यान्तर्भवति। सहस्रादौ शतादिसङ्ख्यान्तर्भवति। तस्मात् षट्त्रिंशदक्षरायां बृहत्यां द्वात्रिंशदक्षराया अनुष्टुभोऽन्तर्भावो युक्त इत्यर्थः॥

बृहत्यामनुष्टुबन्तर्भावे कञ्चिन्मन्त्रमुदाहरति। (२)"तदुक्तमृषिणा"(२) इति। स च मन्त्रः संहितायामेवमाम्नातः। वाचमष्टापदीमहं नवस्रक्तिमृतस्पृशं इन्द्रात्परि तन्वं ममे* इति। अत्र मन्त्रद्रष्टा कश्चिन् महर्षिः स्वयं मन्त्ररूपः सन्नेवं ब्रूते। अहं मन्त्रात्मा वाचं अनुष्टुप् ब्रूयां इन्द्रात् परमैश्वर्य्ययुक्तात् बृहतीरूपात् प्राणात् तन्वं परिममे तस्यैव इन्द्रस्य तनुं शरीरं परितो निर्म्मितवानस्मि। बृहती तावद्यथोक्तध्यानानुसारेण इन्द्र-

* ऋग्वेद म०८, सू०७६, ऋ०१२।

शब्दाभिधेयस्य प्राणस्य शरीरभूता तस्यां बृहत्यामनुष्टुभमन्त-र्भाव्य इन्द्रनिमित्तं तस्या अप्यनुष्टुभः इन्द्रशरीरत्वं सम्पा-दितवानस्मीत्यर्थः। कीदृशीं वाचं। अष्टापदीं चतुरक्षरैरष्टभिः पादैरुपेतां तथा नवस्रक्तिं अष्टभ्यः पादेभ्य ऊर्ध्वं बृहतीत्व-सम्पत्तये पुनरप्येकेन चतुरक्षरेण पादेन योगे सति नवसङ्ख्या-कस्रक्तियुक्ता भवति। स्रक्तयः कोणाः तद्युक्ता। तथा ऋत-स्पृशं ऋतं सत्यं प्राणं बृहत्यात्मकं स्पृशतीति ऋतस्पृक् तादृश्यां बृहत्यामन्तर्भावात् तद्रूपप्राणस्पर्श उपपद्यते॥

एतस्य मन्त्रस्य प्रथमपादं व्याचष्टे। (३)"वाचमष्टापदीमह-मित्यष्टौ हि चतुरक्षराणि भवन्ति"(३) इति। द्वात्रिंशदक्षरायाम-नुष्टुभि समभागैरष्टभिर्विभज्यमानायां 'चतुरक्षरपादाः 'अष्टौ', सम्पद्यन्ते॥

द्वितीयपादे पूर्वभागं व्याचष्टे। (४)"नवस्रक्तिमिति बृहती सम्पद्यमाना नवस्रक्ति"(४) इति। पूर्वोक्ताष्टापदी या वागनु-ष्टुप् सैवान्येन चतुरक्षरपादेन संयोगे सति षट्त्रिंशदक्षरा 'बृहती','सम्पद्यमाना', सती नवभिः स्रक्तिभिः चतुरक्षरपादरूपैः कोणैरुपेता भवति। 'नवस्रक्ति', इति विसर्गलोपश्छान्दसः॥

उत्तरभागं व्याचष्टे। (५)"ऋतस्पृशमिति सत्यं वै वागृचा स्पृष्टा"(५) इति। येयमनुष्टुब्रूपा 'वाक्' अस्ति, सेयं 'ऋचा' बृहत्या, 'स्पृष्टा' संयुक्ता, सती 'सत्यं' कदाचिदपि बाधरहितं प्राणदेवं बृहतीरूपत्वेन ध्यातव्यं, स्पृशति इति शेषः॥

तृतीयपादं व्याचष्टे। (६)"इन्द्रात्परि तन्वं मम इति तद्यदेवैतद् बृहतीसहस्रमनुष्टुप् सम्पन्नं भवति तस्मात् तदैन्द्रात्

प्राणाद् बृहत्यै वाचमनुष्टुभं तन्वं सन्निर्मिमीते"(६) इति। 'यत्' यस्मात् कारणात्, 'तदेवैतत् बृहतीसहस्रं', पूर्वोक्तरीत्या पञ्चविंशत्यधिकशतीपेतं 'अनुष्टुप्' सहस्रं सम्पद्यते, सहस्रशब्द-मध्याहृत्यानुष्टुप्सहस्रं सम्पन्नमिति व्याख्येयं। 'तत्' तस्मात् बृहत्यामनुष्टुबन्तर्भावात् कारणात्, 'अनुष्टुब्रूपां 'वाचं', 'तस्मात्' पूर्वमुपास्यत्वेनोक्तात् 'ऐन्द्रात्' परमैश्वर्य्यसम्बन्धात्, 'प्राणदेवात्'। 'बृहतीरूपात् निमित्तात्, 'तन्वं' तनुं शरीरं, अयं होता 'सन्नि-र्मिमीते' सम्यङ् निष्पादयति, बृहत्यात्मकप्राणस्य तदन्त-र्भूतानुष्टुबपि शरीरं भवतीत्यर्थः। तदेवमनुष्टुबन्तर्भावेन बृहती प्रशस्ता॥

तादृशबृहतीसहस्ररूपस्योक्थस्य प्रकारान्तरेण पञ्चवि-धत्वध्यानं विधत्ते। (७)"स वा एष वाचः परमो विकारो यदे-तन्महदुक्थन्तदेतत्पञ्चविधं मितममितं स्वरः सत्यानृते इति"(७) इति। बृहतीसहस्रात्मकं 'यदेतत्' प्रौढं शस्त्रं, 'स एषः', अक्ष-रसमष्टिरूपायाः 'वाचः', 'परमो विकारः' उत्तमकार्य्यं, त्रिष्टुप्-सहस्रादिभ्य उत्तमत्वं पूर्वमेव दर्शितं। तादृशं 'एतदुक्थं', 'मि-तादिभिर्वाग्विशेषैः 'पञ्चविधं', इति ध्यायेत्। अक्षरसङ्ख्याप्रयु-क्तच्छन्दोविशेषैर्युक्तं 'मितं'। तद्रहितं 'अमितं'। गीतिनिष्पादकः 'स्वरः'। अबाध्यन्तत्त्वं 'सत्यं'। बाध्यं मिथ्याभूतं 'अनृतं'। 'इति' एते वाग्विशेषाः, ध्येयाः॥

तान् विशेषान् स्पष्टमुदाहृत्य प्रदर्शयति। (८)"ऋग्गाथा कुम्व्या तन्मितं यजुर्निगदो वृथा वाक् तदमितं सामाथो यः कश्च गेष्णः सः स्वर ओमिति सत्यन्नेत्यनृतं" इति। अर्द्धपादव्यवस्थो-

पेतो मन्त्रः 'ऋक्', उच्यते, अग्निमीळे पुरोहितमित्यादिका*। तस्यामृग्जातौ सर्वलोकप्रसिद्धार्थप्रतिपादिका प्रातः प्रातरनृतन्ते वदन्तीत्यादिका 'गाथा', ऋगेव। आचारशिक्षारूपा 'कुम्ब्या'। तद्यथा ब्रह्मचार्यस्यापोशानं कर्म कुरु दिवा मा स्वाप्सीरित्यादिः। अत्र यदेतदृक्सामान्यं, यौ च 'गाथाकुम्ब्या'रूपावृग्विशेषौ 'तत्' एतत्त्रयं, छन्दोरूपेण नियतपरिमाणत्वात् 'मितं', इत्युच्यते। इषे त्वेत्यादिमन्त्रजातं 'यजुः', तद्विशेषरूपोऽग्ने महाँ असि ब्राह्मण भारतेत्यादिकः 'निगदः'। ब्राह्मणगता येऽर्थवादा या च राजसभादौ परिहासादिरूपेणोच्यते सा सर्वा 'वृथा वाक्'। 'तत्' एतत्त्रयं, नियतपरिमाणाभावात् 'अमितं', इत्युच्यते। क्रुष्टप्रथमद्वितीयादिस्वरैर्निष्पाद्यं रथन्तरवामदेव्यादिरूपं यत् 'साम', अस्ति, 'अथ' अपि च, 'यः कः', अपि 'गेष्णाः' सामभागः, सामगैः पर्वशब्देन व्यवह्रियमाणः, तत् सर्वमत्र 'स्वरशब्देन विवक्षितं। सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिसिद्धस्यात्यन्तमबाध्यस्य वस्तुनः प्रतिपादको योऽयं 'ओम्', 'इति', शब्दः, तदेतदत्र वाचःसम्बन्धि 'सत्य', इति विवक्षितं। सर्वप्रपञ्चस्य निष्पादको योऽयं 'न', 'इति', शब्दः, तदेतदभावपर्यवसायित्वात् 'अनृतशब्देन विवक्षितं। इत्थन्त्याज्या मिताद्याः पञ्चविधा निरूपिताः॥

तत्र सत्यध्यानं प्रशंसति। (९)"तदेतत्पुष्पं फलं वाचो यत्सत्यं स हेश्वरो यशस्वी कल्याणकीर्त्तिर्भवितोः पुष्पं हि फलं वाचः सत्यं वदति"(९) इति। ओमित्येवं रूपं 'यत्सत्य',

* ऋग्वेदे म०१, सू०१, ऋ०१।

'तदेतत्', वाग्रूपस्य वृक्षस्य 'पुष्पफलस्थानीयं। काण्डद्वयप्रतिपाद्यं कर्म ज्ञानञ्च शब्दसम्बन्धित्वात् 'वाग्वृक्षस्य पुष्परूपन्तदुभयसाध्यं देवताजन्म मुक्तिश्चेत्युभयन्तस्य वृक्षस्य 'फलरूपं। तयोः पुष्पफलयोर्हेतुत्वादोङ्कारस्तद्रूपत्वेनोपचर्यते। एवन्ध्याता पुमान् यस्मात् 'वाचः', सम्बन्धि 'पुष्पं फलं', च 'वदति', तस्मादयं लौकिकधनसम्पत्त्यादियशोयुक्तो वैदिकपुण्यानुष्ठानकीर्त्तियुक्तश्च भवितुं समर्थः॥

प्रसङ्गात् बुद्धिस्थमनृतवदननिषेधं पुरुषार्थतया दर्शयति। (१०)"अथैतन्मूलं वाचो यदनृतं तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्त्तत एवमेवानृतं वदन्नाविर्मूलमात्मानङ्करोति स शुष्यति स उद्वर्त्तते तस्मादनृतं न वदेद्दयेत त्वेनेन"(१०) इति। प्रकृतादुपासनात्तत्प्रशंसारूपाद्वाक्यादर्थान्तरकथनार्थः 'अथ शब्दः। न प्रकृतमुपासनाङ्गमुच्यते। किन्त्वन्यः कश्चित् प्रासङ्गिकोऽनृतनिषेध इत्यर्थः। 'यत्', 'अनृतं' मिथ्याभाषणं, अस्ति, 'तत्', 'एतत्', 'वाग्वृक्षस्य 'मूलस्थानीयं। सत्यस्य पुष्पफलस्थानीयत्वे सति तद्विपरीतस्यानृतस्य मूलत्वं युक्तं। तथा मूलत्वे सति लोके 'यथा', कश्चित् 'वृक्षः', भूमेरुत्खातः सन् 'आविर्भूतमूलो भूत्वा प्रथमं 'शुष्यति', पश्चात् 'उद्वर्त्तते' विनश्यति च। 'एवमेवानृतं वदन्', पुरुषो वाग्वृक्षरूपं 'आत्मानं', 'आविर्मूलङ्करोति'। मूलभूतस्यानृतवदनस्य परिणामश्च प्रकटीकृतत्वात्तेन पापेन 'सः', पुरुषः, 'शुष्यति'। सर्वैस्तिरस्कार्यत्वमेवास्य शोषः। अयमनृतवादी न तु प्रामाणिक इत्येवं सर्वे तिरस्कुर्वन्ति। 'सः' तादृशः पुरुषः, 'उद्वर्त्तते' विनश्यति, नरकं प्राप्नोतीत्यर्थः।

मिलित्वा युग्मङ्करोति। 'तयोः' दानप्रतिषेधयोः, सत्यानृतयोः, 'मिथुनात्', 'प्रजायते'। इह लोके निन्दारहितः प्रकृष्टो भवति। परलोके च 'भूयान्' उत्कृष्टजन्मा, 'भवति'। यथा लोके ओङ्कारनकारौ मिलितौ प्रशस्तौ, तथाचापि मिलितौ ध्येयावित्यर्थः॥

मितादिपञ्चविधध्यानमुक्त्वा केवलस्याकारस्य ध्यानं विधत्ते। (१४)"यो वै तां वाचं वेद यस्या एष विकारः स सम्प्रतिविद्कारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति"(१४) इति। पूर्वत्र स वा एष वाचः परमो विकारो यदेतत् महदुक्थं इति अभिहितं। तत्र यस्य यस्याः वाचो विकारः 'तां वाचं,' 'यः' पुमान्, वक्ष्यमाणप्रकारेण उपास्ते। 'सः' पुमान्, 'सम्प्रतिवित्' सम्यक् अभिज्ञः। कोऽयं प्रकारः सोऽभिधीयते। 'अकारः', एव 'सर्ववागात्मकः, 'सा' इयमकाररूपा वाङ्मातृका, मन्त्रैः ककारादिमकारान्तैः स्पर्शैः शषसहैरूष्मभिश्च 'व्यज्यमाना', सती बहुरूपा नानाविधा च 'भवति'। पूर्वमेकस्य सत इदानीमनेकत्वं बहुत्वं। तेषाञ्च बहुभेदानां परस्परवैलक्षण्यं नानारूपत्वं। एक एवाकाशो यथा सूचीच्छिद्रं गृहच्छिद्रम् इत्येवम् उपाधिभेदाद्बहुत्वं प्राप्य न्यूनाधिकभावेन परस्परवैलक्षण्यमपि प्राप्नोति। एवमेक एवाकारः क ख ग घ ङ इत्यादिभिरुपाधिभिरनेकत्वं प्राप्य परस्परमप्यघोषाक्षरयुक्ताश्च इति वैलक्षण्यं प्रतिपद्यते। तदेवमकारस्य ककारादिषु सर्वेष्वनुगतत्वाद् भेदप्रतीतेरौपाधिकत्वाच्च सर्ववागात्मकत्वं सिद्धं॥

अकारस्य ध्यानमुक्त्वा तदीयध्वनिभेदयोर्ध्यानं विधत्ते।

(१५)"तस्यै यदुपांशु स प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मात् तिर इव तिर इव ह्यशरीरमशरीरो हि प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मात् तदाविराविर्हि शरीरं"(१५) इति। 'तस्यै' पूर्वोक्ताया अकाररूपायास्तस्या वाचः, 'यदुपांशु' यन्मन्दध्वनियुक्तमुच्चारणं, 'स प्राणः' इति ध्यायेत्। 'अथ' अनन्तरं, 'यत्' उच्चध्वनियुक्तमुच्चारणं,'तच्छरीरं', इति ध्यायेत्। यस्मात् मन्दोच्चारणस्य प्राणरूपत्वं 'तस्मात्', मन्दोच्चारणं 'तिरोभूतं 'इव', भवति। व्यवहितैः पुरुषैरश्रूयमाणत्वात्। लोके यद्यत् 'अशरीरं', तत् तन्नेत्रेणादृश्यत्वात् 'तिरोहितं 'इव', भवति। 'प्राणः', अपि अशरीरत्वात् तिरोभूत इति तद्रूपस्य मन्दध्वनेः परैरश्रवणं युक्तं। वैलक्षण्यार्थः 'अथ'शब्दः। मन्दध्वनेर्विलक्षणो योऽयमुच्चध्वनिः 'तत्', 'शरीररूपं'। 'तस्मात्' शरीररूपत्वात्, उच्चध्वनियुक्तमुच्चारणं 'आविः' प्रकटं भूत्वा, परैः श्रूयते। यस्मात् शरीरं परैर्दृश्यमानत्वात् 'आविर्भूतं, तस्माच्छरीररूपस्य ध्वनेराविर्भावो युक्तः ॥ ६ ॥

(१)तदा इदं वृहतीसहस्रं सम्पन्नं तद्यशः स इन्द्रः स भूतानामधिपतिः स य एवमेतमिन्द्रं भूतानामधिपतिं वेद विस्रसा हैवास्माल्लोकात् प्रैतीति ह स्माह महिदास ऐतरेयः प्रेत्येन्द्रो भूत्वैषु लोकेषु राजति(१) (२)तदाऽऽहुर्यदनेन रूपेणामुं लोकमभिसम्भवती३ अथ केन रूपेणेमं लोकमाभवती३(२) (३)तद्यदेतत् स्त्रियां लोहितं भवत्यग्नेस्तद्रूपं तस्मात्तस्मान्न बीभत्सेताथ यदेतत् पुरुषे रे-

तो भवत्यादित्यस्य तद्रूपं तस्मात्तस्मान्न बीभत्सेत सोऽय-
मात्मेममात्मानममुष्मा आत्मने सम्प्रयच्छत्यसावात्मा-
मुमात्मानमिमस्मा आत्मने सम्प्रयच्छति तावन्योन्यम-
भिसम्भवतोऽनेनाह रूपेणामुं लोकमभिसम्भवत्यमुनो
रूपेणेमं लोकमाभवति(३) ॥ ७ ॥

ऐतरेयारण्यकभाष्यम् ।

उक्थमुक्थमित्यारभ्य आविर्हि शरीरमित्यन्तेन ग्रन्थेन बृहतीसहस्ररूपे उक्थे प्राणदेवताया नानाविधगुणविशिष्टत्वेनोपासनमभिधाय पूर्वमेव सम्भूय देवता अप्येतीति समष्टिरूपं हिरण्यगर्भप्राप्तिलक्षणं फलमुक्तं । तदेवात्र कृत्स्नोपास्त्यावालस्याभावेन श्रद्धामुत्पादयितुं पुनर्दर्शयति । (१)"तद्वा इदं बृहतीसहस्रं सम्पन्नं तद्यशः स इन्द्रः स भूतानामधिपतिः स य एवमेतमिन्द्रं भूतानामधिपतिं वेद विस्रसा हैवास्माल्लोकात् प्रैतीति ह स्माह महिदास ऐतरेयः प्रेत्येन्द्रो भूत्वैषु लोकेषु राजति"(१) इति । प्राणस्वरूपं निष्केवल्याख्यं यदुक्थं 'तत्' एव 'इदं', अक्षरगणनया 'बृहतीसहस्रं सम्पन्नं', 'तत्' च प्राणरूपं सगुणं ब्रह्म, 'यशोनामकं'। अत एव श्रुत्यन्तरे श्रूयते । न तस्येशे कश्च न तस्य नाम महद् यश इति । 'सः' च बृहतीसहस्ररूपः प्राणदेवः, 'इन्द्रः' परमैश्वर्ययुक्तः, अत एव ब्रह्मादिस्तम्बान्तानां प्राणिनां 'अधिपतिः' तादृशं 'यः' पुमान्, उपास्ते । 'सः' पुमान्, 'विस्रसाहैव' जीवन्नेव, विस्रस्य मनुष्यत्वाद्यभिमानं सर्वात्मना परित्यज्य प्राणदेवो हिरण्य- इति । 'तत्' तत्र शरीरग्रहणविषये, 'आहुः' जिज्ञासवः

गर्भोऽस्मीत्याभिमानिकं साक्षात्कारं प्राप्य, 'अस्माल्लोकात्',* 'प्रैति' निर्गच्छति,'इति' एवं, इतरायाः पुत्रः 'महिदास'नामको मुनिः स्वशिष्यान् प्रति 'आहस्म','प्रेत्य' मरणादूर्ध्वं, स्वयं 'इन्द्रः' जगदीश्वरो हिरण्यगर्भः, 'भूत्वा', 'एषु लोकेषु' ब्रह्माण्डान्तर्गतेषु चतुर्दशसु भुवनेषु व्याप्य, 'राजति' दीप्यते। मरणात् प्रागेव भावनाजनितो देवभावः श्रुत्यन्तरेऽपि श्रूयते। देवो भूत्वा देवानप्येति इति। यद्यप्युक्थप्रस्तस्य प्रतीकस्य इदमुपासनमित्यहङ्ग्रहस्याभावाद् भावनाजनितसाक्षात्काररूपो देवभावो युक्त्या न सम्भवति। तथापि वाचनिकस्याहङ्ग्रहस्य विद्यमानत्वात् सम्भवत्येव देवभावः। प्रतीकोपासकानामर्चिरादिमार्गे गच्छतां द्युलोकादूर्ध्वं ब्रह्मलोकप्राप्तिर्नास्ति इति मीमांसायां चतुर्थाध्यायस्य तृतीयपादान्ते यत् निर्णीतं तदप्यत्र न प्रसरति। अहङ्ग्रहसद्भावेन हिरण्यगर्भोऽहमस्मीत्येवं सङ्कल्पस्य विद्यमानत्वात्। सूत्रकारोऽपि तत्क्रतुश्चेति सूत्रावयवेन ध्यातव्यदेवतात्मभावसङ्कल्पमेव ब्रह्मलोकप्राप्तौ हेतुमवोचत्। स च सङ्कल्पोऽत्राहं उक्थमस्मीति विद्याद् इत्येवं विहितः। तस्माद् हिरण्यगर्भप्राप्तिद्वारा क्रममुक्तौ न कोऽपि विघ्नोऽस्ति। अर्वाचीनजन्मसु वैराग्यमन्तरेण यथोक्तोपासनायां प्रवृत्त्यसम्भवात्॥

तद्वैराग्यसिद्ध्यर्थं जुगुप्सितस्य मनुष्यदेहस्य स्वीकारप्रकारं दर्शयितुं जिज्ञासूनां प्रश्नं दर्शयति। (२)"तदाहुर्यदनेन रूपेणामुं लोकमभि सम्भवतीं३ अथ केन रूपेणेमं लोकमाभवतीं३"(२) पृच्छन्ति। 'यत्' यस्मात् कारणात्, 'अनेन रूपेण' इहतीसह-

* अस्माल्लोकाद् दृश्यमानादिति क०, ग० च।

स्वात्मकप्राणदेवोऽस्मीत्येतादृशध्यानेन, 'अमुं लोकं' हिरण्यगर्भरूपं, प्राप्नोति। इत्येतत् तावद् अनुगतमेव। तन्निश्चयद्योतनार्था श्रुतिः। 'अथ' एतन्निश्चयानन्तरं, जिज्ञासितोऽर्थः पृच्छ्यत इति शेषः। स एव प्रश्नोऽभिधीयते। 'केन रूपेण' देवताव्यतिरिक्तेन, कीदृशेनाकारेण समीचीनेन जुगुप्सितेन वा, 'इमं', मनुष्य'लोकं', 'आभवति' प्राप्नोति। विचारार्था श्रुतिः॥

अभिज्ञानामुत्तरं दर्शयति। (२)"तद्यदेतत् स्त्रियां लोहितं भवत्यग्नेस्तद्रूपं तस्मात् तस्मान्न बीभत्सेताथ यदेतत् पुरुषे रेतो भवत्यादित्यस्य तद्रूपं तस्मात् तस्मान्न बीभत्सेत सोऽयमात्मेममात्मानममुष्मा आत्मने सम्प्रयच्छत्यसावात्मामुमात्मानमिमस्मा आत्मने सम्प्रयच्छति तावन्योन्यमभिसम्भवतोऽनेनाह रूपेणामुं लोकमभिसम्भवत्यमुनो रूपेणेमं लोकमाभवति"(२) इति। 'तत्' तत्र प्रश्ने, स्पष्टमुत्तरमुच्यत इति शेषः। 'स्त्रीशरीरे 'यत्', एव 'लोहितं' सप्तमधातुरूपं, शोणितमस्ति तत् 'एतत्', 'अग्नेस्तद्रूपं, लोहितवर्णसाम्यात्। यस्मादग्निरूपं 'लोहितं', 'तस्मात्' कारणात्, अग्निरूपात् 'तस्मात्' स्त्रीलोहितात्, 'न बीभत्सेत' अशुचित्वबुद्ध्या बीभत्सां न कुर्यात्। यद्यपि रागवशादेव प्राणिनां बीभत्सा नास्ति, तथापि कस्य चिच्छ्रौतस्मार्त्तकर्मानुष्ठानशीलस्य श्रद्धाजाड्यात् कथञ्चित् बीभत्सा स्यादिति तन्निषिध्यते। ऋतौ भार्यामुपेयादितिनियमविधिः स्मर्यमाणत्वाच्छास्त्रीयत्वेन श्रद्धालुनापि बीभत्सा न कर्त्तव्या। 'अथ'शब्दो वैलक्षण्यार्थः। स्त्रीलोहिताद्विलक्षणं 'यदेतत्', 'पुरुषशरीरे 'रेतः' सप्तमधातुरूपं, अस्ति, 'तत्' एतत्, शुक्लवर्णसाम्यात् 'आदित्यस्य', 'रूपं'।

'तस्मात्' कारणात्, तादृशादादित्यरूपात् रेतसः 'न बीभत्सेत'। अत्र पृथिवीवदधोवर्त्तित्वादिदंशब्देन उच्यते। पुरुषदेहो द्युलोकवदुपरिवर्त्तित्वाददम्शब्देन उच्यते। षाट्कौशिके पुनश्शरीरे मातृलोहितात् त्वगसृङ्मांसरूपं कोशत्रयं निष्पद्यते। लोहितवर्णस्य तत्रानुगमात्। पितृरेतसो मेदोऽस्थिमज्जारूपं कोशत्रयं निष्पद्यते। शुक्लवर्णस्य तस्मिन्ननुगमात्। तथासति 'सोऽयमात्मा', स्त्रीदेहे इमं 'आत्मानं' स्वकीयन्त्वगादिधातुत्रयभागं, 'अमुष्मै आत्मने' पुरुषसम्बन्धिने मेदोऽस्थिमज्जाभागाय, 'सम्प्रयच्छति', तेन संयुज्यत इत्यर्थः। 'असावात्मा' उपरितनः पुरुषदेहोऽपि, 'अमुमात्मानं' स्वकीयमेदोऽस्थिमज्जाभागं, 'इमस्मा आत्मने', अधोवर्त्तिस्त्रीसम्बन्धित्वगसृङ्मांसभागाय, 'सम्प्रयच्छति' तेन संयुज्यते। इत्थं 'तौ' उभौ भागौ 'अन्योन्यं' अत्यन्तमैक्यं, प्राप्नुतः। 'अह'शब्द एवकारार्थः। 'अनेनाह रूपेण' स्त्रीलोहितजनितत्वगादिरूपेणैव, 'अमुं लोकमभिसम्भवति' उपरितनं पुरुषभागं प्राप्नोति। 'उकारोऽपिशब्दार्थः। 'अमुना रूपेण' पुरुषसम्बन्धिमेदोऽस्थिमज्जारूपेणापि, 'इमं लोकमाभवति' स्त्रीजनितत्वगादिभागं प्रत्यागच्छति। इत्थं मनुष्यदेहस्य शुक्लशोणितजनितत्वेन अत्यन्तं जुगुप्सितत्वात् तत्प्राप्तिनिवारणार्थं ततो विरक्तो हिरण्यगर्भप्राप्तये यथोक्तोपासनायां प्रवर्त्तेतेत्यर्थः॥ ७॥

(१)तत्रैते श्लोकाः(१)। (२)यदक्षरं पञ्चविधं समेति युजो युक्ता अभि यत् संवहन्ति। सत्यस्य सत्यमनु यत्र

युज्यत तत्र देवाः सर्व एकं भवन्ति(२) ॥ (३)यद्क्षराद्-क्षरमेति युक्तं युजो युक्ता अभि यत् संवहन्ति । सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति(३) ॥ (४)यद्वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणि-ष्णु । तद्वियूया कवयो अन्वविन्दन्नामायत्ता समतृप्यञ्-छ्रुतेऽधि(४) ॥ (५)यस्मिन्नामा समतृप्यञ्छ्रुतेऽधि तत्र देवाः सर्वयुजो भवन्ति । तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गं लोकमप्येति विद्वान्(५) ॥ (६)नैनं वाचा स्त्रियं ब्रुवन्नैनम-स्त्रीपुमान् ब्रुवन् ॥ पुमांसन्न ब्रुवन्नेनं वदन् वदति कश्चन(६) ॥ (७)अ इति ब्रह्म तत्रागतमहमिति(७)(८)तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति जीवाक्षरेणैव जीवाह्न-राप्नोति जीवाह्ना जीवाक्षरमिति(८) (९)अनकाममारो-ऽथ देवरथस्तस्य वागुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनः सङ्ग्रहीता तदयं प्राणोऽधितिष्ठति(९) (१०)तदु-क्तमृषिणा(१०) (११)आ तेन यातं मनसो जवीयसा निमि-षश्चिज्जवीयसेति जवीयसेति(११) ॥ ८ ॥

इत्यैतरेयारण्यके द्वितीयारण्यके तृतीयोऽध्यायः ॥

---

ऐतरेयारण्यकभाष्यम्।

अथोपास्तिफलप्रशंसार्थं मन्त्रानुदाहरति। (१)"तदेते श्लोकाः"(१) इति। 'तत्र' तस्मिन् हिरण्यगर्भप्राप्तिलक्षणे फले, 'एते' वक्ष्यमाणाः, 'श्लोकाः' पदार्थव्यवस्थोपेता मन्त्राः, सन्ति॥

तत्र प्रथमं मन्त्रमाह,

(२)"यदक्षरं पञ्चविधं समेति युजो युक्ता अभि यत् संवहन्ति।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्वं एकं भवन्ति"(२)

इति। न क्षरति न विनश्यति इति 'अक्षरं' प्राणदेवतात्वं, सोऽयं प्राणदेवः पञ्चभूतकार्यत्वेन 'पञ्चविधं', 'यत्' शरीरं, 'समेति' सम्यक् प्राप्नोति। उपासकस्य शरीरमध्ये वर्तत इत्यर्थः। युज्यन्ते शरीराख्यरथे बध्यन्ते इति 'युजः' इन्द्रियाश्वाः। इन्द्रियाणि हयानाहुरिति च श्रुत्यन्तरं। ते चेन्द्रियाश्वाः परमेश्वरेण शरीररथे संयोजिताः सन्तः 'यत्' शरीरं, 'अभिसंवहन्ति' अभितः सर्वासु दिक्षु सम्यक् नयन्ति। किञ्च 'यत्र' शरीरे, 'सत्यस्य', 'सत्य' परब्रह्मस्वरूपं, 'अनुयुज्यते' प्राणदेवतामनु शरीरेऽवस्थाप्यते। द्वितीयसत्यशब्दस्य ब्रह्मपरत्वं बृहदारण्यके ब्रह्मप्रकरणे पठ्यते। अथ नामधेयं सत्यस्य सत्यमिति। प्राणा वै सत्यन्तेषामेष सत्यमिति च। परब्रह्मणः प्राणदेवतामनु शरीरेऽवस्थानमाथर्वणिकैः पठ्यते। स ईक्षाञ्चक्रे कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतेति। अतः प्राणदेवतामनु परं ब्रह्म 'यत्र' शरीरे, 'युज्यते', 'तत्र' उपासकशरीरे, 'सर्वे' वागाद्यभिमानिनोऽग्न्यादिदेवाः, 'एकं भवन्ति' एकत्वं प्रतिपद्यन्ते। उपा-

सक्तो हि स्वशरीरे वर्त्तमानः सर्वदेवतात्मकप्राणरूपोऽहमस्मी-त्येवं ध्यायति ॥

द्वितीयं मन्त्रमाह,

(३)"यदक्षरादक्षरमेति युक्तं युजो युक्ता अभि यत्सम्वहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति"(३) ॥ इति ।

पञ्चम्यन्तेनाक्षरशब्देन कदाचिदपि विनाशरहितो द्वितीय-सत्यशब्दवाच्यः परमात्मोच्यते । प्रथमान्तेनाक्षरशब्देन व्यवहार-काले बाधरहितः प्रथमसत्यशब्दवाच्यः प्राणोऽभिधीयते । सोऽयं परमात्मन उत्पन्नः प्राण इन्द्रियैः 'युक्तं', उपासकस-म्बन्धि, 'यत्' शरीरं, 'एति' प्राप्नोति । 'युजो युक्ताः', इत्यादि पूर्ववत् । उपासकशरीरे सर्वदेवतासमष्टिरूपः परमात्मोपाधि-रूप उपास्यः प्राणो वर्त्तत इत्येतस्यार्थस्य दार्ढ्याय पूर्वोक्तस्यैव पुनरप्युक्तिः ॥

तृतीयं मन्त्रमाह,

(४)"यद्वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्व-णिष्णु ।
तद्वियूया कवयो अन्वविन्दन्नामायत्ताः समतृप्यन्क्रुतेऽधि"(४)॥ इति ।

याचकाय सर्ववस्त्वनुज्ञाप्रदानवाचकं 'वाचः', सम्बन्धि 'यत्' एतत्, 'ओमिति' अक्षरं, दारिद्र्यकारणमस्ति, 'यत्', अपि दातव्यवस्तुप्रतिषेधवाचकं 'न', 'इति' एतदक्षरं, अपकीर्त्ति-कारणमस्ति । 'यत्', अपि अन्यत् 'अस्याः' वाचः सम्बन्धि,

'क्रूरं' खट्फडित्यादिरूपं, अस्ति। तथाचान्यत्र श्रूयते। खट् फड् जहि छिन्धि भिन्धि हन्धि कट् इति वाचः क्रूराणि इति। 'यद्‌ु च' यदपि,अन्यत् 'उल्बणिष्णु' अत्युल्बणं वाचः-स्वरूपं आक्रोशादिकं, 'तत्' सर्वं, 'कवयः' मेधाविन उपासकाः, 'वियूय' परित्यज्य, प्राणतत्त्वं 'अन्वविन्दन्' ध्यानेन अन्विष्य लब्धवन्तः। ते कवयः 'नामायत्ताः' प्राणदेवतानाम्नो-ऽकारस्याधीनाः, सन्तः। अकारो वै सर्वा वागित्याद्युक्तप्रकारेण प्राणरूपमकारमेव ध्यायन्तः। 'श्रुते' यथोक्तश्रुतिप्रोक्ते प्राणतत्त्वे 'अधि समतृप्यन्' आधिक्यं यथा भवति तथा तृप्तिं प्राप्ताः॥

चतुर्थं मन्त्रमाह,

(५)"यस्मिन्नामा समतृप्यञ्छ्रुतेऽधि तत्र देवाः सर्वयुजो भवन्ति।

तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गं लोकमप्येति विद्वान्"(५)॥ इति।

'श्रुते' श्रुतिप्रोक्ते, 'यस्मिन्' प्राणतत्त्वे, 'नामा' पूर्वोक्तस्य नाम्नोऽकाररूपस्याधीनाः कवयः, 'अधिसमतृप्यन्'। 'तत्र' तस्मिन् प्राणतत्त्वे, 'देवाः' अग्न्यादयः, 'सर्वयुजः' सर्वेणापि प्रकारेण युक्ताः, 'भवन्ति'। सर्वेऽपि देवा निःशेषेण प्राणस्वरूपा इत्येवं उपासकेन चिन्त्यमानत्वात्। 'तेन' प्राणोपाधिकेन, 'ब्रह्मणा', 'पाप्मानं' हिरण्यगर्भप्राप्तिप्रतिबन्धकं सर्वं कर्मजातं, 'अपहत्य' विनाश्य, 'विद्वान्', उपासकः, 'स्वर्गं लोकं' हिरण्यगर्भस्वरूपभूतं, 'अपि', 'एति' प्राप्नोति॥

पञ्चमं मन्त्रमाह,

(६)"नैनं वाचास्त्रियं ब्रुवन्नैनमस्त्रीपुमान् ब्रुवन्।
पुमांसं न ब्रुवन्नेनं वदन् वदति कश्चन"(६) इति।

'एनं' प्राणदेवं, 'वदन् कश्चन' वदिष्यामीत्येवमुद्युक्तः कोऽपि पुरुषः, 'वाचा' स्वकीयजिह्वागतेन शब्देन, 'स्त्रियं ब्रुवन्' स्त्रीशरीररूपोऽयमिति वदन् अपि, 'एनं' प्राणदेवं, 'न वदति'। तथैव 'अस्त्रीपुमान्' स्त्रीपुरुषव्यतिरिक्तो नपुंसकं, इत्येवं वदन्नपि 'एनं', 'न वदति'। तथा 'पुमांसं ब्रुवन्' पुमानयमित्येतं ब्रुवन्नपि 'एनं' प्राणं, 'न वदति'। अयमर्थः। लोके पुमान् स्त्री नपुंसकञ्च इत्येवं तिस्र एव स्थूलशरीरव्यक्तयः। तत्र तत्तच्छरीरस्वीकारात् प्राणदेवस्तेन पुमानित्यादिशब्देनोपचर्यते। न तु वस्तुतः प्राणदेवस्य पुन्देहादिकमस्ति। तथा च श्वेताश्वतरा आमनन्ति।

नैव स्त्री न पुमानेष नैव चायं नपुंसकः।
यद्यच्छरीरमादत्ते तेन तेन स चोच्यते॥ इति।

एवं सति प्राणदेवं तद्वाचकेन शब्देन वदिष्यामीत्येवमुद्युक्तः पुरुषो यदि पुमान् स्त्री नपुंसकमित्येतेषामन्यतमेन शब्देन ब्रूयात्, तदानीमेनं प्राणदेवं न वदत्येव। एतेषां त्रयाणां स्थूलदेहवाचित्वेन प्राणवाचित्वाभावात्। किं बहुना प्राणदेवतासाक्षात्कारयुक्तः पुरुषः शिष्यान् प्रति प्राणदेवस्य स्थूलदेहरूपत्वं यथा न प्रतीयते तथैव ब्रूयात् इति॥

यदि स्त्री पुमान् नपुंसकमित्येतैः शब्दैः प्राणो नाभिधीयते केन तर्ह्यभिधीयत इत्याशङ्क्य स्त्रीकरूपत्वं परित्यज्य ब्रह्मरूपेण

अन्येनाह। (७)"अ इति ब्रह्म तत्रागतमहमिति"(७) इति। प्रथमाविभक्त्यन्तो योऽयं 'अकारः', सोऽयं प्राणोपाधिकब्रह्मणो वाचकनामत्वेन निर्दिश्यते। यथा हिरण्यगर्भः सर्वप्राणिषु अनुगतः। सर्वाहम्मानी हिरण्यगर्भ इति श्रुतेः। तथैवायमकारः सर्वेषु ककारादिषु अनुगतत्वेन हिरण्यगर्भं वक्तुं योग्यः। तस्मादकारेण प्राणोपाधिकं 'ब्रह्म', अनुसन्धाय 'तत्र' तस्मिन् ब्रह्मणि, 'अहमिति' एतदुपासकस्वरूपवाचकं पदं, 'आगतं' प्राप्तं, यथा भवति तथा प्राणदेवं व्यवहरेत्। अत एवाहमुक्थमस्मीति विद्यादिति विधिः पूर्वमुदाहृतः॥

उपास्यस्वरूपं सङ्क्षिप्य दर्शयित्वा तत्फलं सङ्क्षिप्य दर्शयति। (८)"तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति जीवाक्षरेणैव जीवाहराप्नोति जीवाह्ना जीवाक्षरमिति"(८) इति। 'तद्वै' इत्यारभ्य 'अह्नां सहस्राणि भवन्ति' इत्यन्तं पूर्वमेव व्याख्यातं। तच्च वक्ष्यमाणस्याक्षरस्य प्रशंसार्थं पुनरनूद्यते। बृहतीसहस्रगतानामक्षराणां मध्येऽनुगतं यदेतदकाराख्यमक्षरं तदेतज्जीवरूपं। सति ह्यकारे तद्युक्ततया ककारादीनि सर्वाण्यपि विस्पष्टमुच्चारयितुं शक्यन्ते। तथा गवामयनगतानां सर्वेषामह्नां मध्ये महाव्रताख्यमहर्जीवरूपं। अयनसम्पूर्तिहेतुत्वात्। एवं सति अकाररूपेण 'एव', 'जीवाक्षरेण', महाव्रताख्यं 'जीवाहः', प्राप्नोति'। महाव्रताङ्गभूतबृहतीसहस्ररूपप्राणस्याकाररूपत्वेनोपासितत्वात्। तेन च 'जीवाह्ना' महाव्रताहर्गतबृहतीसहस्ररूपप्राणो-

पासनेन, 'जीवाक्षरं' सर्वप्राणिजीवनहेतुभूतं अविनश्वरं प्राणत्वं, प्राप्नोति'। 'इति'शब्दः फलवचनसमाप्त्यर्थः॥

यथोक्तफलसाधनं प्राणविज्ञानं रथरूपकल्पनया प्रशंसति, (९)"अनकाममारोऽथ देवरथस्तस्य वागुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनः सङ्ग्रहीता तदयं प्राणोऽधितिष्ठति"(९) इति। 'अथ' यथोक्तोपासनफलकथनानन्तरं, तत्फलप्राप्तये कश्चित् 'देवरथः' सम्पाद्यते। देवस्य प्राणस्य हिरण्यगर्भस्य रथः 'देवरथः',स च कीदृशः। 'अनकाममारः' हिरण्यगर्भपदादर्वाचीनानिन्द्रलोक-चन्द्रलोकभूलोकादिगतान् कामान् मारयतीति काममारः। न काममारोऽकाममारः, कामसम्पादक इत्यर्थः। तद्विपरीतः 'अन-काममारः', सर्वथा कामानाशयत्येवेत्यर्थः। न खलु हिरण्यगर्भं प्राप्तः कश्चिदप्यर्वाचीनं लोकं कामयते। 'तस्य' तादृशस्य देव-रथस्य, अवयवाः सम्पाद्यन्ते। येयमुपासकस्य 'वाक्', सैव रथस्य 'उद्धिः', ऊर्ध्वं धीयते स्थाप्यते युगमनेति रथस्य मुखमीषयोर ग्रं 'उद्धिः' इत्युच्यते। पुरुषस्य 'श्रोत्रे', रथस्य 'पक्षसी' पार्श्व-द्वयवर्तिनी चक्रे। पुरुषस्य 'चक्षुषी', रथस्य 'युक्ते' युगपार्श्वद्वये बद्धयोरश्वयोः स्वरूपे। पुरुषस्य यत् 'मनः', सोऽयं रथस्य 'सङ्ग्रहीता' सारथिः। 'तत्' एतद्रथस्वरूपं, 'प्राणाख्यो देवः, 'अधितिष्ठति' उपर्यारोहति, एतादृशेन प्राणोपासनरूपेण रथेन हिरण्यगर्भं प्राप्नोतीत्यर्थः॥

अथ रथप्रशंसार्थं मन्त्रद्वयमुदाहरति। (१०)"तदुक्तमृषि-णा"(१०) इति। मन्त्रद्वयेनेत्यर्थः। प्रथममन्त्रः संहितायामेवसा-म्नातः। आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रु-

श्विना। यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः इति*। अश्विना हे अश्विनौ देवौ, वां युवयोर्यं रथमृभवो देवरूपाः तत्त्वाणस्त्वङ्गुर्निर्मितवन्तः। लोकेऽत्यन्त-वेगवत्त्वेन प्रसिद्धं यन्मनस्तस्मान्मनसोऽपि जवीयसा अतिशयेन वेगवता तेन रथेनायातमस्मदनुग्रहार्थमागच्छतं। यस्य रथस्य योगे अश्वयोजने सम्पन्ने सति दिवो दुहिता द्युलोकदेव-तायाः पुत्री काचित् उषा जायते। प्राच्यान्दिशि सूर्यरथसंयोगे सम्पन्ने सति उषःकालो भवतीति प्रसिद्धं। सूर्यरथसहभावि-त्वमभ्युपेत्याश्विरथेऽपि तदुपचर्यते। उषःकालसम्पत्तौ सत्यां विवस्वतः सूर्यस्य सम्बन्धिनी ये अहनी ते उभे सुदिने प्रजानां सुखचेष्टास्थापनहेतू भवतः। तत्र रात्रिरप्यहःशब्दार्थत्वमभिप्रेत्य द्विवचनमुक्तं। उभयोरप्यहःशब्दार्थत्वं मन्त्रान्तरेऽपि दृश्यते। अहश्च कृष्णमहरर्जुनञ्चेति। अन्धकारोपेता रात्रिः कृष्णम् अहरर्जुनं श्वेतं प्रकाशोपेतमहः प्रसिद्धमेव। द्वितीयो मन्त्रः संहितायामेवमाम्नातः। निमिषश्चिज्जवीयसा रथेना यातम-श्विना। अन्ति षद्भूतु वामव इति†। अश्विना हे अश्विनौ देवौ निमिषश्चिन्निमिष इव यथा निमेषो विलम्बं न करोति तथा जवीयसा अत्यन्तवेगयुक्तेन रथेनायातमागच्छतं। वां युवयोः अवो रक्षणं। अन्ति अस्माकमन्तिके सत् सर्वदा वर्त्तमानं भूतु भवतु॥

एतयोर्मन्त्रयोः प्रदर्शनार्थं प्रथमपादावुदाहरति। (११)"आ ते

* ऋग्वेदे म०१०, सू०३९, ऋ० १२। † ऋग्वेदे म०८, सू०७३, ऋ० २।

न यातं मनसो जवीयसा निमिषश्चिज्जवीयसेति जवीयसेति" (११) इति। 'इति' शब्दो मन्त्रद्वयप्रतीकोदाहरणार्थः। हिरभ्यासोऽध्यायसमाप्त्यर्थः। उक्थमुक्थमित्यारभ्य जवीयसेत्यन्तेन ग्रन्थेन प्रतिपाद्यमेकमेव प्राणोपासनमुपास्तिभेदप्रतिपादकयोः पृथगुपक्रमोपसंहारयोरभावाद्यानि तत्र तत्र पृथक्फलश्रवणानि तानि सर्वाणि गुणफलानि द्रष्टव्यानि। यत्र त्वेकमेव फलं पुनः श्रूयते तत्र गुणान्तरे रुच्युत्पादनाय फलानुवादो द्रष्टव्यः। ननु छान्दोग्यबृहदारण्यकादिष्वपि प्राणविद्या समाम्नाता, अतस्तत्त्या गुणा अत्रोपसंहर्त्तव्याः। शाखाभेदेऽपि पञ्चाग्निविद्यादौ विद्यैक्यस्य गुणोपसंहारस्य च मीमांसायां निर्णीतत्वात्। मैवं। असाधारणगुणप्रत्यभिज्ञाराहित्येन विद्यैक्याभावे सति गुणोपसंहारासम्भवात्। अत्र कर्माङ्गमुक्थं प्राणदृष्ट्या उपासनीयं। तत्र तु प्राण एवोपासनीय इति वेद्यभेदाद्विद्याभेदः। एतच्छान्दोग्यबृहदारण्यकयोः देवासुराख्यायिकामुदाहृत्य भिन्नेवोद्गीथविद्येति निर्णयात्। तद्दृष्टान्तेन विद्यानानात्वमवगम्यते। न च प्राणदेवस्यैकत्वेन विद्यैक्यं शङ्कनीयं। तथा सति ब्रह्मण एकत्वेन सर्वेषां ब्रह्मोपासनानां एकत्वप्रसङ्गात्। तदेकत्वञ्च नानाशब्दादिभेदादित्यधिकरणे निराकृतं। यद्यप्येतत् प्रतीकोपासनं, तथापि वाचनिकाहङ्ग्रहस्य विद्यमानत्वादितरब्रह्मोपासनवत् साक्षात्कारपर्यन्तमुपासितव्यं। ततो जातस्य साक्षात्कारस्य रक्षणार्थं मरणपर्यन्तमावर्त्तनीयं। अन्यथा चित्तविक्षेपेण साक्षात्कारे नष्टे सति देवो भूत्वा देवानप्येतीत्येतादृशं फलं नोपपद्यते। श्रूयते चात्र तादृशं फलं।

प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः सम्भूय देवता अप्येति य एवं वेदेति। यद्यप्यत्र कर्माङ्गावबद्धमुपासनं कर्मकाल एवानुष्ठेयं। तथापि अत्र यावज्जीवमावर्त्तनीयत्वात् कर्मानुष्ठानरहितेऽपि काले मनसैव बृहतीसहस्ररूपमुक्थं सम्पाद्योपासनीयं। अत एव कर्मपारतन्त्र्याभावादितरब्रह्मोपासनेष्विव नास्त्यासननियमः। दिग्देशकालनियमस्तु चित्तैकाग्र्यं प्रत्यनुपयुक्तत्वान्नास्तीति निर्णीतः। एवमामरणमुपासकस्य इतरप्राणिवन्मार्गोपक्रमपर्यन्तमुत्क्रान्तिः समाना द्रष्टव्या। तत्रादौ वागादीन्द्रियाणां वृत्तिर्मनसि विलीयते, मनोवृत्तिश्च प्राणे लीयते, प्राणश्च जीववृत्त्यां लीनो भवति, जीवोऽपि प्राणसहितः तेजःप्रधानेषु पञ्चभूतेषु लीयते, तच्च भूतपञ्चकं परमात्मनि बीजावशेषं प्रलीयते। तावता पूर्वस्य जन्मनः समाप्तिः। अथ परमात्मनि सावशेषत्वेन लीनन्तल्लिङ्गशरीरं हृदयपुण्डरीके पुनरुद्भूय मूर्द्धन्यया नाड्या निर्गत्य रात्रावहनि वा सूर्यरश्मिं प्राप्य उत्तरायणे दक्षिणायने वार्चिरादिमार्गेणैव गच्छति। अर्चिरादयः सर्वेऽपि आतिवाहिकदेवास्तैस्तत्र तत्र नीतः क्रमेण ब्रह्मलोकं प्राप्य तत्र स्वसङ्कल्पादेव भोग्यजातं सृजति। स्थूलशरीरं स्वेच्छया सृष्ट्वा तेन च शरीरेण जागरणवद् भोगान् भुक्त्वा कदाचित् स्थूलदेहसृष्टिमन्तरेण स्वप्नवन्मनसैव सर्वान् भोगान् भुङ्क्ते। यदा स्वेच्छया बहून् देहान् सृजति तदा तेषु सर्वेषु देहेषु पृथक् पृथगन्तःकरणोपाधिकान् जीवान् सृष्ट्वा तद्रूपेण यथेच्छं विहरति। तदेवं जगत् सृष्टिव्यतिरिक्तं सर्वमैश्वर्यमस्य योगिनः परमेश्वरेण समानं। ततस्तत्रोत्पन्नज्ञानः सन् ब्रह्मलोकावसाने तेन ब्रह्मणा

सह मुच्यते । तदेतत् सर्वं मीमांसायां तृतीयचतुर्थयोरध्याययोर्द्रष्टव्यम् ॥ ८ ॥

इति सायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयारण्यके द्वितीयारण्यके तृतीयाध्यायस्याष्टमः खण्डः ॥

## अथ चतुर्थोऽध्यायः ।

—:○:—

(१)ॐ आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्(१) (२)स ईक्षत लोकान्नु सृजा इति स इमांल्लोकानसृजत(२) (३)अम्भो मरीचीर्मरमापः(३) (४) अदोऽम्भः परेण दिवन्द्यौः प्रतिष्ठान्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आपः(४)(५)स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्(५) (६)तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डं मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतामक्षीभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशः त्वङ् निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्र-

स नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः(६) ॥ १ ॥

ऐतरेयारण्यकभाष्यम्।

इत्थमध्यायत्रयेण प्राणविद्या प्रपञ्चिता। तावता ब्रह्मविद्यायां पुरुषस्य मुख्याधिकारः सम्पन्नः। कर्म्मकाण्डोक्तैः कर्म्मभिर्विविदिषायाः उत्पन्नत्वात्, उपासनया चित्तैकाग्रस्य सम्पन्नत्वाच्च। तत्सम्पत्तौ शमदमादयो गुणा अर्थसिद्धाः। ते चात्मविद्यायामन्तरङ्गभूताः। शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यतीति श्रुतेः। अतो मुख्याधिकारिणमुपलभ्य श्रुतिः। अध्यायत्रयेण ब्रह्मतत्त्वं विस्पष्टमुपदेष्टुमादौ तत्त्वं सङ्क्षेपेण सूचयति। (१)"ॐ आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्"(१) इति। आत्मशब्दस्यार्थो महर्षिभिरेवं स्मर्य्यते।

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते*। इति।

द्विविधो हि 'आत्मा', व्यवहारविशिष्टः केवलश्चेति। विशिष्टव्यवहारोऽपि त्रिविधः। जागरणं स्वप्नः सुषुप्तिश्चेति। तत्र सुषुप्तावयं जीवः स्वोपाधिविलये सति परमानन्दरूपं ब्रह्म प्राप्नोति। तथा च कैवल्योपनिषदि श्रूयते। सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेतीति। तस्मादाप्नोतीत्यात्मेति स्मर्य्यमाणं प्रथमनिर्वचनं द्रष्टव्यं। स्वप्नावस्थायामयं जीवो

* गीयत इति क०, ग० च।

जागरणस्य पदार्थवासनाः सर्वा आदत्ते। तथा च वाजसनेयिनः समामनन्ति*। स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति इति। अस्यायमर्थः। यदायं जीवो वाक्चक्षुरादिद्दशविधबाह्यकरणोपरतिरूपं स्वापं प्राप्नोति तदानीं सर्वावतो गिरिनदीसमुद्रमनुष्यपश्वादिसर्वपदार्थोपेतस्य लोकस्येन्द्रियैरवेक्ष्यमाणस्यास्य जगतो मात्रां लेशरूपां वासनामपादाय तत्तत्परिमाणपदार्थेभ्योऽपच्छिद्य स्वीकृत्य ततो जागराभिमानस्वयं विहत्य स्वयमेव विनाश्य स्वप्नजगद्रूपञ्च स्वयमेव निर्माय जगदाकारेण परिणतेन स्वेन भासा स्वकीयेनान्तःकरणेन तथा स्वेन ज्योतिषा स्वरूपचैतन्येन कल्पितपदार्थावभासकेन युक्तः सन् प्रस्वपिति इति। तस्मात् वासनानां स्वीकारादादत्त इत्यात्मेति द्वितीयं निर्वचनं द्रष्टव्यं। जागरणावस्थायां चक्षुरादिबाह्येन्द्रियैर्बाह्यरूपादिविषयानत्ति भुङ्क्ते। तथा च आथर्वणिकैरेवमाम्नायते। स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति इति। ततो बाह्यविषयभोगानत्तीत्यात्मेति तृतीयं निर्वचनं द्रष्टव्यं। उपाधिविशिष्टस्यावस्थात्रयमुपजीव्य निर्वचनत्रयमुक्तं। अथ केवलस्य निर्वचनमुच्यते। यद्यस्मात् कारणादस्यात्मनो भावः स्वभावविशेषः सन्ततः परिच्छेदरहितः। तथाच सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र श्रुत्यन्तरे देशपरिच्छेदकालपरिच्छेदराहित्यलक्षणमानन्त्यमभिहितं। तस्मादनतिसातत्येन सर्वत्र

* पठन्तीति क०, ग० च।

गच्छतीत्यात्मेति चतुर्थं निर्वचनं द्रष्टव्यमिति। एवं सत्यत्र तत्त्वनिर्देशस्य प्रस्तुतत्वादखण्डैकरसत्वेन सन्ततत्व-मात्मशब्दप्रवृत्तिनिमित्तं। यदि धातुप्रत्ययजन्यमवयवार्थमुपेक्ष्य रूढिमाश्रित्य स्वरूपवाचित्वमुच्यते तदाप्यध्यस्तस्य निखिलस्य जगतोऽधिष्ठानत्वेन स्वरूपत्वमस्ति, नह्यारोपितानां सर्पधारा-दण्डमालावलीवर्दमूर्त्तितत्त्वादीनामधिष्ठानभूतां रज्जुमन्तरेण किञ्चिदन्यद्वास्तवं स्वरूपमस्ति, किम्बहुना। यद्ययमात्मशब्दो यौगिको यदि वा रूढः सर्वथापि सन्ततोऽखण्डकरसः सर्वज-गदधिष्ठानत्वेन तदीयवास्तवस्वरूपभूतः पदार्थ आत्मशब्देन विव-क्षितः। 'वै'शब्दोऽवधारणार्थः। 'इदं' इदानीं सार्वजनी-नप्रत्यक्षादिप्रमाणैः सर्वैरपि प्रतीयमानं जगत्, 'अग्रे' सृष्टेः पूर्वं, 'आत्मैवासीत्'। न तु तत्कार्य्यभूतं नामरूपात्मकं जगत्, 'आसीत्'। नाप्यात्मनो गोचरौ शब्दप्रत्ययावास्तां। लोके हि मृत्कार्यभूतघटशरावाद्युत्पत्तेः पूर्वं मृदेवास्ति न तु घटादिकं। अथापि मृद्गोचरौ शब्दप्रत्ययौ विद्येते एव। तद्व-दत्रापि प्रसक्तौ सत्यां शब्दप्रत्ययावपि 'वै'शब्देन व्यावर्त्त्येते। देहेन्द्रियादीनामभावेन जिह्वानिष्पाद्यस्य शब्दस्य मनोनिष्पा-द्यस्य प्रत्ययस्य चाभावः सुतरामुपपद्यते। ननु 'इदमात्मासीत्', इति सामानाधिकरण्येन जगद्वैशिष्ट्यमात्मनः प्रतीयते नील-मुत्पलमिति सामानाधिकरण्यश्रवणे सत्युत्पलद्रव्यस्य नीलत्वगु-णवैशिष्ट्यस्य प्रतिभासात्। मैवं। वैशिष्ट्ये सत्यग्रशब्दस्य वैयर्थ्य-प्रसङ्गात्। इदानीं जगद्विशिष्ट आत्मा प्रतिभासत इत्यनुपपत्त्या स्थितिकालं परित्यज्य केवलमात्मानं वक्तुं 'अग्र'शब्देन सृष्टेः

प्राचीनकाल उपादीयते। तदेवमनेन वाक्येनाखण्डैकरसमात्म-तत्त्वं सूचितं भवति। 'एका'दिशब्दैरखण्डैकरसत्वमेव स्पष्टी-क्रियते। लोके वृक्षादिपदार्थेषु स्वगतः सजातीयो विजाती-यश्चेति त्रिविधो भेदोऽस्ति। यथा शाखास्कन्धपत्रादीनां परस्-परप्रतियोगिको वृक्षस्य स्वगतो भेदः। वृक्षान्तरप्रतियोगिकः सजातीयः। पाषाणादिप्रतियोगिको विजातीयः। तद्वदात्मनोऽपि प्रसक्तौ 'एक'शब्देन स्वगतभेदो व्यावर्त्यते। वृक्षवन्नानात्मको न भवति। किन्त्वेकात्मक इत्यर्थः। 'एव'शब्देनात्मान्तरव्यावृ-त्तिः। योऽयमेकः स एव न त्वन्यः कश्चित्तादृश इत्यर्थः। 'नान्यत्', इत्यादिना विजातीयभेदो निषिध्यते। 'अन्यत्' प्रकृतादात्मनो विलक्षणं, 'किञ्चन' किञ्चिदपि वस्तु, 'न मिषत्' धातूनामनेका-र्थत्वात् नासीत्, इत्युक्तं भवति। न च जगदुत्पादनाय मायाख्या-याः शक्तेरङ्गीकार्यत्वादन्यसद्भावः शङ्कनीयः। आत्मशक्तित्वे-नावस्तुत्वेन च मायायाः पृथग्गणनानर्हत्वात्*। न हि भृत्येभ्यो जीवितं प्रयच्छन्तः स्वामिनस्तव एतद्धनं त्वदीयशक्तिश्चैतावदि-ति विभज्य गणयन्ति। नाप्यवस्तुभूतं चन्द्रप्रतिबिम्बादिकमभि-लक्ष्य द्वौ चन्द्रमसौ वस्तुभूतावित्येवं बुद्धिमन्तो व्यवहरन्ति। तस्मा-दङ्गीकृतायामपि मायायामात्मनोऽखण्डैकरसात्मतायां न कोऽपि-विघ्नोऽस्ति। ईदृशः सः। यदि तत्रापि जगदनुवर्त्तेत तदानीं व्यर्थोऽयमग्रशब्दप्रयासः स्यात्। सामानाधिकरण्यन्तु बाधाया-मप्युपपद्यते†। यस्त्वदीयश्चौरः स स्थाणुरित्येवं बाधदर्शनात्।

---

* पृथगभिधानानर्हत्वादिति क०, ग० च।

† बाध्यतायामप्युपपद्यते क०, ग० च।

तद्दशायामपि यद् जगत्त्वेन इदमिदानीं प्रतिभासते तज्जगन्न भवति। किन्त्वात्मैवेत्येवं योजनीयं। नन्विदानीमपि तत्त्वदृष्ट्या नेदं जगत्। किन्त्वात्मैवेत्येवं बाढं। तथापि बुभुत्सोर्मूढस्य जगत्सत्यत्वदार्ढ्याद्नुभवविरोधभ्रमो माभूदिति सृष्टेः प्राचीनकाल उपन्यस्यते। कालस्यापि सृष्ट्यन्तर्भावसद्भावात् कालवाचकोऽग्रशब्दोऽनुपपन्न इति चेत्। न। परप्रसिद्ध्यनुसरणार्थत्वात्। परप्रसिद्ध्या परो बोधनीय इतिन्यायः। परस्य तु बुभुत्सोः पूर्वसृष्टिवर्त्तमानसृष्ट्योर्मध्ये प्रलयकालप्रसिद्धिरस्ति। अतस्तदीयभाषया बोधयितुमग्र इत्युच्यते। अनेनैव न्यायेनात्मासीदिति शब्दद्वयं परप्रसिद्ध्या योजनीयं। अन्यथा पुनरुक्तिपरिहाराय शब्दद्वयस्यार्थभेदेऽङ्गीकृते सति सत्ताविशिष्ट आत्मैवेत्येवं प्रतिभासादखण्डार्थत्वं हीयेत, श्रुतेस्त्वात्मशब्दसच्छब्दौ पर्यायत्वेनाभिमतौ। अत एवात्मा वा इदमेक एवाग्र आसीदित्यस्य स्थाने छन्दोगाः सदेव सोम्येदमग्र आसीदिति पठन्ति। स सर्वभेदशून्य आत्मात्र विवक्षितो न तु हिरण्यगर्भादिर्लौकिक आत्मा। एतच्च तृतीयाध्यायस्य तृतीयपादे चिन्तितं॥

आत्मा वा इदमित्यत्र विराट् स्यादथवेश्वरः।
भूतासृष्टेर्नेश्वरः स्यात्तद्वाद्यानयनाद्विराट्॥
भूतोपसंहृतेरीशः स्यादद्वैतावधारणात्।
अर्थवादो गवाद्युक्तिर्ब्रह्मात्मत्वं विवक्षितं॥

आत्मा वा इदमेक एवाग्र आसीदित्यत्र विराडेवात्मशब्दवाच्यो नेश्वरः। कुतः। स ईक्षत लोकान्नु सृजा इति पञ्चभूतसृष्टिमनुक्त्वा लोकमात्रसृष्टेरभिधानात्। ईश्वरकारणेषु तैत्तिरीयकच्छ-

ण्डोगादिषु भूतसृष्ट्यभिधानदर्शनात् ताभ्यो गामनयदिति गो-
ऽश्वाद्यानयनं शरीरिणो विराजो घटते, न त्वशरीरस्य परमे-
श्वरस्य, इति प्राप्ते ब्रूमः। एक एवाग्र आसीदित्यद्वैतावधार-
णादीश्वर आत्मशब्दार्थः। तथा सति शाखान्तरोक्ता भूत-
सृष्टिरत्र उपसंहर्तुं शक्यते। यत्तु गवाद्यानयनं तदर्थवादरूपं।
तद्वेदनस्य स्वातन्त्र्येण पुरुषार्थत्वाभावात्। अथ भूतार्थवादत्वं
मन्येथा, तर्हि विराडादिद्वारा परमेश्वर एव गवादिकमानयतु।
श्रूयमाणस्य गवानयनादिप्रपञ्चस्य सर्वस्यार्थवादत्वे श्रुतेर्विवक्षि-
तोऽर्थः कोऽपि न सिध्येदिति चेत्। न। जीवब्रह्मैक्यस्य विवक्षि-
तत्वात्। आत्मा वा इत्युपक्रम्य स एतमेव पुरुषं ब्रह्म ततम-
मपश्यत्,प्रज्ञानं ब्रह्मेत्युपसंहारात्। तस्मादीश्वर आत्मशब्दवाच्यः॥

इत्थं सङ्ग्रहेणात्मतत्त्वं सूत्रितन्तच्चाध्यारोपापवादाभ्यां प्रप-
ञ्च्यते। तत्र स ईक्षतेत्यारभ्यायमावसथ इत्यन्तेन ग्रन्थेनाध्यारोपं
प्रपञ्चयितुकाम आदावारोपं गृह्णाति। (२)"स ईक्षत लोकान्नु
सृजा इति स इमांल्लोकानसृजत"(२) इति। आत्मा वा इद-
मित्यनेन सूत्रेण सूचितः 'सः' परमेश्वरः, पृथिव्यादीन् 'लोकान्',
सृजामीत्येवमीक्षणं विचारं कृतवान्। 'नु'शब्दो वितर्के। इत्थं
विचार्य 'सः' परमेश्वरः, 'इमां ल्लोकान्ऽसृजत'। यद्यप्यत्रात्मै-
वेति केवलं तत्त्वं प्रकृतं तथापि निर्विकारस्य जगद्भावापत्त्य-
सम्भवाच्छाखान्तरोक्ता मायाशक्तिरप्यर्थादुक्तेति द्रष्टव्यं। मा-
यान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमिति श्रुत्यन्तरं। इन्द्रो
मायाभिः पुरुरूप ईयत इति च। मायासहितस्योपादा-
नस्य विवक्षितत्वाद् विवर्त्तवाद एवात्राभ्युपेतव्यो न त्वारम्भपरि-

त्मवादी। यद्यपि लोकान्नु सृजा इत्येतावन्मात्रविचारेण-कुलालवन्निमित्तकारणत्वमेव प्रतीयते। तथापि सोऽकामयत बहुः स्यां प्रजायेयेति शाखान्तरगतस्य स्वकीयबहुत्वावद्विचार-वाक्यस्य* गुणोपसंहारन्यायेनात्रोपसंहाराद्दुपादानत्वमपि सि-द्धति। एतच्च भगवता व्यासेन सूत्रितं। प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुरोधादिति। योऽयं परमात्मा नासौ केवलं निमित्त-मेव किन्तु प्रकृतिरुपादानमपि। कुतः येनाश्रुतं श्रुतं भवती-त्येकविज्ञाने सर्वविज्ञानं प्रतिज्ञाया उपादानरूपदृष्टान्तस्य चानुसारात्। तदेतत् सूत्रोक्तं स्वपक्षसाधनपरपक्षदूषणमुखेन स्मृतिपादेन तर्कपादेन च प्रपञ्चितं। स्रष्टव्यानां लोकानां भौतिकत्वेन भूतव्यतिरेकेणासम्भवाद् भूतसृष्टिरप्यत्रोपसंहर-णीया। सा चान्यत्रैवमाम्नायते। तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी इति। एतदीयविचारास्तु द्वितीयाध्याये तृतीय-पादस्य पूर्वभागे प्रतिपादिताः। परमेश्वरस्य सत्यसङ्कल्पत्वाद् भूतसृष्टौ लोकसृष्टौ वा सङ्कल्पव्यतिरिक्तं साधनान्तरं नापेक्षितं। अत एवान्यत्र श्रूयते। सत्यकामः सत्यसङ्कल्प इति। स तपस्त-प्त्वेदं सर्वमसृजतेत्यन्यत्र श्रवणात्। तपोरूपं साधनमपेक्षित-मिति चेत्। नैवं। न ह्यत्र कृच्छ्रचान्द्रायणादिकं तपः, किन्तु स्रष्टव्यसङ्कल्प एव। यस्य ज्ञानमयन्तप इति श्रुत्यन्तरात्। सङ्क-ल्पव्यतिरिक्तसाधनान्तरं नापेक्षितं। सङ्कल्पस्यनिरङ्कुशत्वान्ना-

---

* बहुवाक्य विचारस्येति क०।

बहुभाववाक्यविचारस्येति ग०।

रीश्वरस्य भूयान् प्रयासः† । तस्य च सङ्कल्पस्य सत्यत्वाज्जगतो न मनोराज्यतुल्यत्वं ॥

ये लोकाः परमेश्वरेण सृष्टास्तान् स्वस्वनाम्ना निदर्शयति । (३)"अम्भो मरीचीर्मरमापः"(३) इति ॥

एतेषां शब्दानां लोकवाचित्वप्रसिद्धेरभावात् स्वयमेवश्रुतिर्व्याचष्टे । (४)"अदोऽम्भः परेण दिवन्द्यौः प्रतिष्ठान्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आपः"(४) इति । 'दिवं परेण' द्युलोकस्योपरि, महर्लोकजनोलोकतपोलोकसत्यलोका ये सन्ति, या च 'द्यौः प्रतिष्ठा' सर्वेषां देवानां आश्रयभूतो द्युलोकः, 'अदोऽम्भः' एतत् सर्वमम्भःशब्दवाच्यं । लोकेषु पञ्चभूतानां साधारणत्वेऽपि जलस्यास्मदुपलब्धियोग्यत्वेन प्राधान्यमभिप्रेत्य 'अदोऽम्भः', इत्युक्तं । उपरितनलोकाद्वृष्टिद्वारेणागतमम्भ एवास्माभिः साक्षादुपलभ्यते, न तु भूतान्तरं । सूर्यमरीचीनामाधारत्वात् 'अन्तरिक्षलोकः, 'मरीचयः', इतिशब्देनोच्यते । भूलोकवर्तिनां प्राणिनां स्वस्वा म्रियमाणत्वात् 'मर'शब्देन 'पृथिवी', उपलक्ष्यते । पृथिव्या 'अधस्तात्,' पातालविशेषरूपा भोगभूमयः 'याः', सन्ति, 'ताः,' सर्वाः, तल्लोकवासिभिर्नागादिभिराप्यायमानत्वात् 'आपः', इत्युच्यन्ते ॥

लोकसृष्टिमुक्त्वा पालकाभावेन लोकानां विनाशो माभूदिति लोकपालसृष्टिं दर्शयति । (५)"स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत्"(५) इति । 'सः' परमेश्वरः, पुनरप्येवं विचारितवान् । 'इमे', खलु

† तपःप्रयास इति क० ।

'लोकाः', निष्पन्नाः, तेषां भोगस्थानानामचेतनानां लोकानां रक्षणार्थं चेतनान् 'लोकपालकान्, देवान्, सर्वथा सृज्यामीति। 'सः' विचारयुक्त ईश्वरः,'अद्भ्य एव' जलोपलक्षितपञ्चभूतेभ्य एव, 'पुरुषं' पुरुषाकारं विराट्पिण्डं, 'समुद्धृत्य', 'अमूर्छयत्' कठिनमकरोत्। यथा कुलालस्तडागे जलस्याधस्तादार्द्रां मृदमानीय शोषयित्वा कठिनं पिण्डं करोति, तद्वदयं विराट् पुरुषः समष्टिरूपो ब्रह्माण्डरूपस्य लोकस्य पालकः॥

अथ तदवान्तरलोकपालकानां चेतनानामग्न्यादिदेवतानां सृष्टिं दर्शयति। (६)"तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डं मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतामक्षीभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः"(६) इति। 'तं' विराट्पुरुषदेहं, 'अभ्यतपत्' अभितस्तच्छिद्रतत्तदिन्द्रियतदभिमानिदेवतासृष्ट्यर्थं स परमेश्वरः पर्यालोचितवान्। पर्यालोचनमेव तप इति पूर्वमुक्तं। 'अभितः पर्यालोचितस्य 'तस्य' विराट्पिण्डस्य, 'मुखं निरभिद्यत' मुखच्छिद्रं विदारितमभूत्। 'यथा', पक्षिसर्पादीनां पक्वं 'अण्डं', भिन्नं भवति, तद्वत्। तस्मान्मुखच्छिद्राद्वागिन्द्रियं निष्पन्नं। तस्माच्चेन्द्रियात् 'अग्निः', देवता निष्पन्ना। एवमुत्तरपर्यायेष्वपि च्छिद्रेन्द्रियदेवता व्याख्येयाः। 'प्राणः' घ्राणेन्द्रियं। 'लोम'शब्देन

तदाधारभूतत्वङ्निष्ठं स्पर्शनेन्द्रियमुच्यते। 'हृदयं' अष्टदलं कमलं। 'अपानः' अधःसञ्चारी वायुः,। 'रेतः' गुह्येन्द्रियम् ॥ १ ॥

(१)ता एता देवताः सृष्टा अस्मिन् महत्यर्णवे प्रापतं-स्तमशनापिपासाभ्यामन्ववार्जत्(१)(२)ता एनमब्रुवन्नायत-नन्नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्यः पुरुषमानयत्ता अब्रुवन् सुकृतं वतेति पुरुषो वाव सुकृतं(२) (३)ता अब्रवीद्यथाय-तनं प्रविशतेति(३) (४)अग्निर्वाग् भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाक्षिणी प्रा-विशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन्(४)(५)तमशनापिपासे अब्रूतामावा-भ्यामभिप्रजानीहीति ते अब्रवीदेतास्वेव वान्देवतास्वाभ-जाम्येतासु भागिन्यौ करोमीति तस्माद्यस्यै कस्यै च देव-तायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भव-तः(५) ॥ २ ॥

ऐतरेयारण्यकभाष्यम्।

इन्द्रियाणामभिमानिदेवतानाञ्च सृष्टिरुक्ता। अथ तासां

देवतानां भोगयोग्याल्पशरीरसृष्टिं विवक्षुस्तदुपोद्घातत्वेन क्षुत्पिपासयोः सृष्टिं दर्शयति। (१)"ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतंस्तमशनापिपासाभ्यामन्ववार्जत्"(१)इति। या इन्द्रियतदभिमानिदेवताः, 'ता एताः', 'सृष्टाः', सत्यः, 'अस्मिन्' पूर्वोक्ते, 'महत्यर्णवे' समुद्रवदत्यन्तविस्तृते विराड्-देहे, 'प्रापतन्' प्रकर्षेण पतिता अभवन्। 'तं' सर्वेन्द्रिय-तद्देवताधिष्ठानभूतं विराड्देहं, क्षुत्पिपासाभ्यां, 'अन्ववार्जत्' अनुगमितवान्, संयोजितवानित्यर्थः॥

अथाल्पदेहसृष्टिमाह। (२)"ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ताभ्यो गामान-यत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्यः पुरुषमानयत्ता अब्रुवन् सुकृतं वतेति पुरुषो वाव सुकृतं"(२) इति। 'ताः' विराड्देहे पतिता इन्द्रि-याभिमानिदेवताः, स्रष्टारं परमेश्वरं प्रत्येवं 'अब्रुवन्'। भो परमेश्वर 'अयं' विराड्देहः, अस्माकं भोगक्षमो 'न', भवति। अतिप्रौढत्वं विराड्देहमापूर्य तत्र प्रतिष्ठां प्राप्तुं वयमसमर्थाः। 'अन्नं', एतद्देहपर्याप्तं सम्पादयितुं वयमसमर्थाः। अतः 'यस्मिन्' अल्पशरीरे, 'प्रतिष्ठिताः', सत्यः, वयं तद्देहपर्याप्तं 'अन्नं', अत्तुं शक्ता भवामः। तादृशं 'आयतनं' शरीरं, 'नः' अस्मदर्थं, 'प्रजानीहि' अवधारय, सम्पादयेत्यर्थः। ततः परमेश्वरः 'ताभ्यः' देवताभ्यः, भोगाय 'गोदेहं', 'आनयत्'। 'ताः' च देवताः, 'अब्रुवन्', 'नः' अस्माकं, 'अयं' 'देहः', 'न', एव 'अलं'। उपरितनानां दन्तानामभावेन दूर्वादिमूलस्योत्खातुम-

शक्यत्वात्। अतोऽयमपि गोदेहस्तिष्ठतु। अतोऽन्यमप्युभयतोदन्तं देहं सृजेत्येवं 'अब्रुवन्'। ततः परमेश्वरस्तदर्थं 'अश्वमानयत्'। 'ताः' च देवताः, विवेकज्ञानाभावात् 'अयं' अश्वदेहोऽपि, 'न', पर्याप्त इत्युक्तवत्यः। ततः परमेश्वरस्तदर्थं विवेकसम्पन्नपुरुषदेहं, 'आनयत्'। 'ताः', च देवताः, तावता परितुष्टा आश्चर्य्यवाचकेन 'वत' शब्देन स्वकीयं परितोषं सूचयन्त्यः सुष्ठु कृतं, परमेश्वरेणेति 'अब्रुवन्'। यस्मान्मनुष्यदेह एव, विवेकज्ञानसम्पन्नस्तथा च पूर्वमुदाहृतं। पुरुषे त्वेवाविस्तरामात्मा स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं सम्पन्न इति। तस्मान्मनुष्यदेह एव 'सुकृतं', इत्यनेन शब्देन परितोषद्योतकेन वक्तुं योग्यः॥

ईश्वरसृष्टेषु भोगक्षमशरीरेषु देवानां प्रवेशाय ईश्वरप्रेरणं दर्शयति। (३)"ता अब्रवीद्यथायतनं प्रविशतेति"(३) इति। यस्मिन्नायतने छिद्रे यदिन्द्रियमुत्पन्नं या चाभिमानिनी देवतोत्पन्ना तत् 'आयतनं', अनतिक्रम्य देहे देवताः 'प्रविशतेति'॥

इत्यमनुज्ञातानां देवतानां प्रवेशं दर्शयति। (४)"अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन् मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशत्"(४) इति। योऽयं 'अग्निः' वागिन्द्रियाभिमानी देवः, सोऽपि 'वाग्भूत्वा' वागिन्द्रिय एवान्तर्भूय

'मुखच्छिद्रं', 'प्राविशत्'। एवमुत्तरत्रापि योज्यं। न खलु वागादिष्विन्द्रियेषु अग्न्यादिदेवताः प्रत्यक्षमुपलभ्यन्ते। नापि देवताभिरप्रेरितानामिन्द्रियाणां स्वस्वविषयग्रहणसामर्थ्यमस्ति। एतच्च भगवता व्यासेन सूत्र्यते। ज्योतिराद्यधिष्ठानन्तु तदामननादिति। ज्योतिरादिभिरग्न्यादिदेवैरधिष्ठानं वागादीन्द्रियाणां प्रेरणमभ्युपगन्तव्यं। कुतः। तदामननात्। तस्य देवताप्रेरणस्य अग्निर्वाग् भूत्वेत्यादिना श्रूयमाणत्वात्। यथायं विचारो द्वितीयाध्यायस्य चतुर्थपादे सूत्रितः। एवमन्येऽपीन्द्रियादिविषयविचारास्तस्मिन् पादे द्रष्टव्याः॥

क्षुत्पिपासयोर्विराड्देहे नियतस्य स्थानविशेषस्य पूर्वमश्रवणात् कृत्स्नशरीरे प्रवेशं दर्शयति। (५)"तमशनापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भवतः"(५) इति। ये क्षुत्पिपासे परमेश्वरेण विराड्देहे संयोजिते 'ते' उभे, परमेश्वरं प्रति स्वार्थं स्थानविशेषमनुगृहाण 'इति', 'अब्रूतां'। ईश्वरः स्वार्थं स्थानविशेषमदृष्ट्वा 'वां' उभे अपि, 'एतास्वेव', अग्न्यादिदेवतासु, 'आभजामि'। ततस्तास्वेव 'भागिन्यौ' विषयभागयुक्ते, 'करोमीत्यब्रवीत्'। यस्मादेवमीश्वरेणोक्तं 'तस्मात्', लोके 'यस्यै कस्यै', अपि 'देवतायै' अग्न्यादिदेवतायै, 'हविर्गृह्यते' भोग्यं वस्तु समर्प्यते। 'अस्यां' अग्न्यादिदेवतायां, एते क्षुत्पिपासे', भागयुक्ते एव 'भवतः'। अग्निवाय्वादिदेवतानां शरीरेष्वप्याहारस्वीकारे क्षुत्पिपासयोरेव तृप्तिर्भवति। तथा

मनुष्यशरीरेऽपि चक्षुरादिदेवतायै हविःस्वीकारे क्षुत्पिपासे दृष्यतः। यदा पात्रे पतितं समीचीनमन्नं भोक्तुकाम आदरेण पश्यति तदानीं भोगस्य प्रत्यासन्नपरितोषणत्वान् मनसि तृष्णा शान्तैव भवति, न तु यथा पूर्वं बाधते। एवमत्यन्तप्रिया-न्नवार्त्ताश्रवणस्पर्शनादौ यथोचितं तृप्तिलेशो द्रष्टव्यः। तदेतत् सर्वं देवतासु क्षुत्पिपासयोर्भागोपेतत्वं ॥ २ ॥

(१)स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति सोऽपोऽभ्यतपत्, ताभ्योऽभितप्ताभ्यो मूर्त्तिरजायत या वै सा मूर्त्तिरजायतान्नं वै तत्(१) (२)तदेनत्सृष्टं पराङ्त्य-जिघांसत्, तद्वाचा जिघृक्षत्, तन्नाशक्नोद्वाचा ग्रहीतुं स यद्धैनद्वाचा ग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत्, प्राणेनाजिघृक्षत्तन्नाशक्नोत्, प्राणेन ग्रहीतुं स यद्धैनत् प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत्तच्चक्षुषाजिघृक्ष-त्तन्नाशक्नोच्चक्षुषा ग्रहीतुं स यद्धैनच्चक्षुषाग्रहैष्यद् दृष्ट्वा हैवान्नमत्रप्स्यत्तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रो-त्रेण ग्रहीतुं स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नम-त्रप्स्यत्तत्त्वचाजिघृक्षत्तन्नाशक्नोत्त्वचा ग्रहीतुं स यद्धैन-त्त्वचाग्रहैष्यत्, स्पृष्ट्वा हैवान्नमत्रप्स्यत्तन्, मनसाजिघृ-क्षत्तन्नाशक्नोन्मनसा ग्रहीतुं स यद्धैनन्मनसाग्रहैष्यद्-ध्यात्वा हैवान्नमत्रप्स्यत्तच्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेन

ग्रहीतुं स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत्त-
दपानेनाजिघृक्षत्तदावयत् (२) (३) सैषोन्नस्य ग्रहो यद्वायु-
रन्नायुर्वा एष यद्वायुः (३) (४) स ईक्षत कथं न्विदं मदृते
स्यादिति (४) (५) स ईक्षत कतरेण प्रपद्या इति (५) (६) स
ईक्षत यदि वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि
चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि
मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृ-
ष्टमथ कोऽहमिति (६) (७) स एतमेव सीमानं विदार्यैतया
द्वारा प्रापद्यत (७) (८) सैषा विदृतिर्नाम द्वास्तदेतन्नान्द-
नं (८) (९) तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽ
यमावसथोऽयमावसथ इति (९) (१०) स जातो भूतान्य-
भिव्यैख्यत् किमिहान्यं वावदिषदिति स एतमेव पुरुषं
ब्रह्म ततममपश्यत् (१०) (११) इदमदर्शमिती३ तस्मा-
दिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्या-
चक्षते परोक्षेण परोक्षप्रिया इव हि देवाः परोक्षप्रिया
इव हि देवाः (११) ॥ ३ ॥

इत्यैतरेयद्वितीयारण्यके चतुर्थोऽध्यायः ।

---

यानि भोगाधिष्ठानानि गवाश्वपुरुषादिशरीराणि, यानि च

भोगकरणानि वह्न्यादिदेवताधिष्ठितानि वाक्चक्षुरादीनि, गवादिदेहेषु प्रविष्टानि तानि सर्वाणि अभिधाय भोग्यसृष्टिमभिधत्ते। (१)"स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति सोऽपोऽभ्यतपत्ताभ्योऽभितप्ताभ्यो मूर्तिरजायत या वै सा मूर्त्तिरजायतान्नं वै तत्"(१) इति। 'सः' परमेश्वरः, पुनरप्येवं विचारितवान्। ये पृथिव्यादि 'लोकाः', ये च 'लोकपालाः' सेन्द्रियशरीरदेवतारूपाः, ते सर्वेऽपि 'इमे', सृष्टाः खलु। अतः परमेश्वरस्तेषामन्नमन्तरेण जीवनासम्भवात् तदर्थं 'अन्नं', स्रक्ष्यामि 'इति', विचार्य्य अन्ननिष्पादनार्थं तत्कारणभूतानि जलप्रधानानि पञ्चभूतानि 'अभ्यतपत्' सर्वतः पर्य्यालोचनमकरोत्। ईदृशाज्जलसहितात् चेत्रात् व्रीह्यादयोऽजायन्तां। ईदृशानि मूषकादिशरीराणि मार्जारादीनामन्नभूतानि जायन्तामित्येवं सङ्कल्पं कृतवान्। 'ताभ्यः' अद्भ्यो जलोपलक्षितभूतेभ्यः, व्रीहियवादिरूपा मूषकादिरूपा च 'मूर्त्तिः', 'अजायत'। तत्र व्रीहियवादिर्मनुष्यादीनां 'अन्नं', तैरद्यमानत्वात्। तथा मूषकादिमूर्त्तिर्मार्जारादिभिरद्यमानत्वात्तेषां 'अन्नं'॥

अन्नसृष्टिमुक्त्वा अन्वयव्यतिरेकाभ्यां तत्स्वीकारसाधनं निश्चिनोति। (२)"तदेनत् सृष्टं पराङत्यजिघांसत्तद्वाचाजिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुं स यद्धैनद्वाचाग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत्त् प्राणेनाजिघृक्षत्तन्नाशक्नोत् प्राणेन ग्रहीतुं स यद्धैनत् प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् तच्चक्षुषाजिघृक्षत्तन्नाशक्नोच्चक्षुषा ग्रहीतुं स यद्धैनच्चक्षुषाग्रहैष्यद् दृष्ट्वा हैवान्नमत्रप्स्यत्तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुं स यद्धैन-

च्छोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत्तत्त्वचाजिष्टृत्तन्नाशक्नोत्त्व-चा ग्रहीतुं स यद्धैनत्त्वचाग्रहैष्यत् स्पृष्ट्वा हैवान्नमत्रप्स्यत्तन्मन-साजिष्टृत्तन्नाशक्नोन्मनसा ग्रहीतुं स यद्धैनन्मनसाग्रहैष्यद्ध्या-त्वा हैवान्नमत्रप्स्यत्तच्छिश्नेनाजिष्टृत्तन्नाशक्नोच्छिश्नेन ग्रही-तुं स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत्तदपानेना-जिष्टृत्तदावयत्"(२) इति। यत् 'सृष्ट' अन्नं व्रीहियवादिकं, मूषकादिकञ्च, तत्र व्रीह्याद्यन्नस्य स्वकीयवधविषयविवेकज्ञानाभा-वाद् गन्तुमसमर्थत्वाच्च नास्ति पलायनं। यत्तु मूषकादिरूपं तद-न्नं 'तदेनत्', मार्जारादीनां भोक्तॄणां स्ववधहेतुत्वं निश्चित्य तेभ्यः 'पराङ्मुखं सत् 'अत्यजिघांसत्' अतिशयेन हन्तुं गन्तुमैच्छत्, पलायितुं प्रारभतेत्यर्थः। पलायितुमुद्युक्तं 'तत्' मूषकादिरू-पमन्नं, 'दृष्ट्वा' भोक्तृवर्गो मार्जारादिः 'वागिन्द्रियेण 'ग्रहीतुं' ऐच्छत्। ततः सर्वप्रयत्नेन वागिन्द्रियं प्रयुञ्जानोऽपि तेन तदन्नं 'ग्रहीतुं नाशक्नोत्'। इदानीन्तनोदाहरणेन सृष्टिका-लीना तदन्नशक्तिः स्पष्टीक्रियते। 'सः', भोक्तृवर्गः, आदिसृष्टि-काले यद्येतन् मूषकादिरूपमन्नं 'वाचा', गृह्णीयात्तदा इदानी-मपि भोक्ता तदन्नवाचकैः शब्दैरीदृशमित्युक्तिमात्रेण तृप्तो भवेत्। न हि वागिन्द्रयस्याभिधानव्यतिरेकेणाकर्षणसामर्थ्यं किञ्चिद-स्ति। न चैवमन्नवाचकशब्दोच्चारणमात्रेण तृप्तिर्दृश्यते। तस्मात् सृष्टिकालेऽपि वाचोऽन्नस्वीकारे सामर्थ्यं नास्तीत्यनुमेयं। 'प्राणेन' घ्राणेन्द्रियेण, एतदारभ्य 'शिश्नान्तेषु षट्सु पर्यायेषु पूर्ववद् व्याख्येयं। 'अभिप्राण्य' आघ्रायेत्यर्थः। अत्रापानशब्देन अन्नस्य मुखविलादन्तःप्रवेशनरूपं निगरणं कुर्वन्नन्तर्मुखो यो वायुः

सोऽभिधीयते। तेन 'अपानेन', 'तत्' अन्नं, ग्रहीतुमैच्छत्। ततः 'तत्' अन्नं, 'आवयत्' जग्राह, अभिज्ञवान्॥

अन्वयव्यतिरेकाभ्यां वायोरेव ग्रहणसाधनत्वं निश्चित्य दार्ढ्यार्थं वायुं प्रशंसति। (३)"सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः"(३) इति। मुखविलादन्तःसञ्चारी 'वायुः', इति 'यत्', अस्ति स एषः', 'अन्नस्य', 'ग्रहः' ग्राहकः, अयमर्थोऽस्मदनुभवसिद्ध इत्यर्थः। किञ्चायं वायुः 'अन्नायुर्वै' अन्नद्वारेणायुष्यहेतुरेव। अन्नरसेन हि प्राणो देहे बध्यते। अत एव वाजसनेयिनः षिमुब्राह्मणे प्राणवर्णनप्रस्तावे अन्नन्दामेति वाक्येन अन्नस्य प्राणबन्धनरज्जुत्वमामनन्ति। तथान्नबन्धनशैथिल्ये सति जीवस्य देहपरित्यागं सदृष्टान्तमामनन्ति। तद्यथा आम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात् प्रमुच्यते। एवमेवायं पुरुष एभ्योऽङ्गेभ्यः सम्प्रमुच्यत इति। अन्नबन्धनप्रयुक्तस्य प्राणावस्थानस्य आयुर्हेतुत्वं लोकप्रसिद्धं कौषीतकिनः समामनन्ति। यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुरिति। तदेतत्सर्वमभिप्रेत्य 'अन्नायुर्वा एषः' इत्युच्यते॥

भोगाधिष्ठानभोगसाधनभोग्यभोगानां सृष्टिमभिधाय भोगस्वामिनं दर्शयितुमीश्वरस्य विचारमाह। (४)"स ईक्षत कथं न्विदं मदृते स्यादिति"(४) इति। यत् 'इदं' देहेन्द्रियतदभिमानिदेवतदीयान्नतत्स्वीकाररूपं, व्यवहारजातं, अस्ति। तदिदं सर्वं 'मदृते' भोगस्वामिनं जीवरूपं मां विना, 'कथं नु' नाम 'स्यात्' न कथञ्चिदुपपद्यते। न हि नगरस्वामिनं राजानं विहाय पुरस्य वा पौरजनानां वा रचना शोभते।

तस्माद्भोगस्वामिना मया जीवरूपधारिणा देहे प्रवेष्टव्यमित्यर्थः ॥

प्रवेशद्वारविचारं दर्शयति। (५)"स ईक्षत कतरेण प्रपद्या इति"(५) इति। द्वावत्र प्रवेशमार्गौ पादाग्रं मूर्द्धि ब्रह्मरन्ध्रञ्च तयोर्मध्ये 'कतरेण' केन मार्गेण, 'प्रपद्यै' प्रविशानि। कथन्विदं इति वाक्येन जीवप्रवेशस्य देहेन्द्रियादिव्यापारपालनरूपं* प्रयोजनं विचारितं ॥

इदानीमात्मबोधरूपस्य प्रयोजनान्तरस्य विचारं दर्शयति। (६)"स ईक्षत यदि वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाऽभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति"(६) इति। मां स्वामिनमनपेक्ष्य वागादयोऽभिवदनादिव्यापारेषु स्वतन्त्राः कर्त्तारः स्युस्तदानीं 'अहं कः', नाम स्यां, न कोऽपि भवेयं। अस्ति कश्चिदेष देहादिव्यतिरिक्तः चिदात्मा स च परब्रह्मस्वभाव इत्येवं कश्चिदपि न जानीयात्। यदा त्वहमेव सर्वव्यापाराणां कर्त्ता वागादयस्तु मया प्रेरिताः सन्तोऽभिवदनादिक्रियाः कुर्युः, तदानीं वागादिकरणको व्यापारः सकर्त्तृको भवितुमर्हति, क्रियात्वाल् लोकप्रसिद्धगमनादिक्रियावदिति मत्सद्भावोऽनुमातुं शक्यते। सोऽयमनुमानेनात्मसद्भाव उपास्तिब्राह्मणे समाम्नातः। यः प्राणेन प्राणिति स च आत्मा सर्वान्तर इति। तस्मादात्मबोधोऽपि जीवरूपप्रवेशस्य प्रयोजनम्। तदेतदभिप्रेत्यान्यत्र श्रूयते। रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणायेति ॥

---

* देहेन्द्रियादिव्यवहारपालनरूपमिति क०, ग० च।

प्रवेशनद्वारं देहेन्द्रियादिपालनस्वात्मावबोधरूपे प्रवेशप्रयोजने च विचारितवान्, अथ प्रवेशं दर्शयति। (७)"स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत"(७)इति। पूर्वं तं प्रपद्भ्यां प्रापद्यतेत्यत्र प्राणरूपक्रियाशक्त्युपाधिकस्य पादाग्रे प्रवेशोऽभिहितः। इदानीं ज्ञानशक्त्युपाधिकस्य मूर्द्धमध्यस्थितच्छिद्रे प्रवेशोऽभिधीयते। यथोक्तविचारोपेतः 'सः' परमेश्वरः, 'एतमेव' मूर्द्धमध्यभागमेव, कपालसम्बन्धिरूपं 'सीमानं'स्थानविशेषं, 'विदार्य' छिद्रं कृत्वा, तच्छिद्ररूपया 'द्वारा', ज्ञानशक्तिसहितः सन् देहमध्ये प्राविशत्। यस्मात् ज्ञानोपाधिकस्य मूर्धमध्ये प्रवेशः। तस्मात् मूर्धनि ज्ञानेन्द्रियबाहुल्यमुपलभ्यते। क्रियाशक्त्युपाधिकस्य पादाग्रे प्रवेशात् कण्ठादधोभागे कर्मेन्द्रियबाहुल्यमुपलभ्यते॥

मूर्द्धगतं प्रवेशद्वारं प्रशंसति। (८)"सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनम्"(८) इति। अक्षिश्रोत्रादिगोलकानां भृत्यादिस्थानीयैश्चक्षुरादीन्द्रियैरधिष्ठितत्वात् स्वामिनः स्वस्य प्रवेशार्थमसाधारणं किञ्चित् द्वारमपेक्षितमित्यभिप्रेत्य प्रीतिपूर्वकं विदारितत्वादिकमुत्कर्षं प्रकटयितुं तस्य द्वारस्य 'विदृतिः', इति नाम सम्पन्नं। तेन द्वारेण निर्गतस्य ब्रह्मलोकप्राप्तिद्वारा मुच्यमानत्वादानन्दहेतुत्वेन 'तदेतत्' द्वारं, 'नान्दनं', इत्युच्यते॥

शरीरे प्रविष्टस्य सञ्चारस्थानानि तेष्ववस्थाविशेषांश्च दर्शयति। (९)"तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति"(९)इति। यथा महाराजस्य क्रीडा-

ध्यनुपर्यधोभावेन वर्त्तमानस्य प्रासादभूमयो निर्मीयन्ते। एवमस्यात्मनः शरीरमध्ये क्रीडार्थं 'त्रय आवसथाः' त्रीणि स्थानानि, निर्मितानि। त्रिषु स्थानेषु 'त्रयः स्वप्नाः' तेनात्मनावलोक्यन्ते। 'अयमावसथः', इत्यादिना नेत्रकण्ठहृदयाख्यानि स्थानानि हस्ताग्रेण प्रदर्श्यन्ते। तेषु हि जागरणाद्यवस्थानां निष्पत्तिः। तथा च ब्रह्मोपनिषद्याम्नायते। नेत्रे जागरितं विद्यात् कण्ठे स्वप्नं समादिशेत्। सुषुप्तं हृदयस्थं त्विति। जागरितादीनां महाराजस्य प्रासादत्रये क्रीडावज्जीवक्रीडारूपत्वं कैवल्योपनिषद्याम्नायते।

स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति।
स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोके॥
सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति।
पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः॥
पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रं। इति।

ननु जागरणसुषुप्त्योः स्वप्नादन्यत्वे त्रयः स्वप्ना इत्ययुक्तमिति चेत्। न। स्वप्नलक्षणोपेतत्वात् विद्यमानवस्तुतत्त्वतिरोधाय समुत्पन्नोऽन्यथाप्रतिभासः स्वप्न इति तल्लक्षणं। जागरणसुषुप्त्योरपि विद्यमानस्य ब्रह्मतत्त्वस्य तिरोधानमन्यथाभूतस्य जीवतत्त्वस्यावभास इत्यस्ति स्वप्नलक्षणं। तस्माल्लोकप्रसिद्धस्य स्वप्नस्यैकत्वेऽपि लक्षणसिद्धाः स्वप्नास्त्रयः। 'त्रय आवसथाः' इत्यनेन पितृशरीरमातृशरीरस्वशरीररूपाणि वा त्रीणि स्थानानि लक्ष्यन्ते। तानि चोपरितनाध्याये प्रपञ्चयिष्यन्ते। संसारो द्विविधः। दैनन्दिनव्यवहारो जन्मान्तरस्वीकारश्चेति। तत्र

दैनन्दिनव्यवहारस्य नेत्रादीनि स्थानानि। जन्मान्तरव्यवहारस्य पितृमातृस्वीयशरीराणि स्थानानीति विवेकः। 'इति'-शब्दः संसाररूपस्याध्यारोपप्रकरणस्य समाप्त्यर्थः॥

अथापवादप्रकरणार्थं सङ्क्षिप्य दर्शयति। (१०)"स जातो भूतान्यभिव्यैख्यत् किमिहान्यं वावदिषदिति स एतमेव पुरुषं ब्रह्म ततममपश्यत्"(१०) इति। 'सः' परमात्मा, 'जातः' देहप्रवेशेन जन्ममरणजागरणस्वप्नसुषुप्तिभिः संसारीभूतः सन्, कदाचिदीश्वरानुग्रहाद् गुरुशास्त्रप्रसादेन च 'भूतानि' आकाशादीनि, प्राणिनश्च, 'अभिव्यैख्यत्' सर्वतो विवेकेन ज्ञातवान्। दृश्यमानान्याकाशादीनि प्राणिदेहाश्च कुत उत्पद्यन्ते केन वा रक्ष्यन्ते कस्मिन् वा प्रलीयन्ते इत्येवं शास्त्रं विविच्य सर्वस्य संसारस्य मायाकल्पितत्वाद् ब्रह्मैव सर्वस्यापि वस्तुतत्त्वन्तस्मात् 'इह' जगति, 'किं', वा वस्तु ब्रह्मणोऽन्यद् 'वावदिषत्' वदिष्यामि, न किञ्चिदपि ब्रह्मव्यतिरिक्ततया वक्तुं शक्नोमि इति निश्चित्य 'सः' जीवः,'एतमेव' शरीरे प्रविष्टं, 'पुरुषं' चिद्रूपं साक्षिणं, 'ब्रह्म अपश्यत्' ब्रह्मत्वेन निश्चितवान्। कीदृशं ब्रह्म, 'ततमं' एकस्तकारो लुप्तः, अतिशयेन विस्तृतं तततन्ततमं। दृश्यस्य सर्वस्य जगतो द्रष्टुर्जीवस्य च ब्रह्मैव तत्त्वमित्यपवादप्रकरणस्य सर्वस्य तात्पर्यार्थः॥

यथोक्तं ब्रह्मसाक्षात्कारं नामनिर्वचनेन प्रशंसति। (११)"इदमदर्शमितीं३ तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः"(११) इति। शरीरे प्रविष्टः

स जीवात्मा ब्रह्मात्मपरतत्त्वं साक्षात्कृत्य 'इदमदर्शं', इतिवाक्येन स्वकीयमपरोक्षानुभवं प्रकटयन् परितुतोष। परितोषद्योतनार्था प्लुतिः। यस्मात् 'इदमदर्शं', इत्युक्तवान् 'तस्मात्', इदं दृष्टमित्यनयैव व्युत्पत्त्या सोऽयं 'इदन्द्रः', इति 'नाम', प्राप्तवान्। तस्य नाम्नो निर्वचनानुसारेण योग्यत्वप्रसिद्धिं द्योतयितुं 'इदन्द्रो ह वै नाम', इत्युक्तं। न च लोके परमेश्वरं इन्द्र इत्येवं व्यवहरन्ति न त्विदन्द्रमिति शङ्कनीयं। परमार्थतो यथोक्तरीत्या 'इदन्द्र', एव, 'सन्त', परोक्षार्थत्वाद् दकमक्षरं विलोप्य इन्द्र इत्येवं व्यवहृतत्वात्। नापि परोक्षत्ववैयर्थ्यं शङ्कनीयं। यस्मात् 'देवाः' पूज्याः सर्वे, स्वकीयं नाम गूढं कृत्वा उपाध्याया आचार्या इत्यादिके 'परोक्ष'-नामन्येव प्रीतिं कुर्वन्ति। 'हि'शब्देनास्मिन्नर्थे लोकप्रसिद्धिर्दर्शिता। अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ३ ॥

इति सायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयारण्यके द्वितीयारण्यके चतुर्थोऽध्यायः ॥

---

## अथ पञ्चमोऽध्यायः।

(१)अपक्रामन्तु गर्भिण्यः(१)। (२)पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतः(२) (३)तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्त्ति तद्यदा स्त्रियां

सिञ्चत्यथनञ्जनयति तदस्य प्रथमं जन्म(३)(४)तत् स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गन्तथा तस्मादेनां न हिनस्ति(४) (५)सास्यैतमात्मानमत्र गतं भावयति सा भावयित्री भावयितव्या भवति(५)(६) तं स्त्री गर्भं बिभर्त्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति(६) (७)स यत्कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मानमेव तद्भावयति(७) (८)एषां लोकानां सन्तत्या एवं सन्तता हीमे लोकाः(८) (९)तदस्य द्वितीयं जन्म(९) (१०)सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते(१०) (११)अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति(११) (१२)स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म(१२) (१३)तदुक्तमृषिणा(१३) (१४)गर्भे नु सन्नन्वेषामवेदमहं देवानाञ्जनिमानि विश्वा शतं मा पुर आयसीररक्षन्नधश्श्येनो जवसा निरदीयमिति(१४) (१५)गर्भ एवैतच्छयानो वामदेव एवमुवाच स एवं विद्वानस्माच्छरीरभेदादूर्ध्वं उत्क्रम्यामुष्मिन्त्स्वर्गे लोके सर्वान् कामानाप्त्वा मृतः समभवत्समभवत्(१५)॥ ४॥

इत्यैतरेयद्वितीयारण्यके पञ्चमोऽध्यायः।

ऐतरेयारण्यकभाष्यम्।

अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यत इति पूर्वाचार्यैः कृत्स्नवेदान्तानां तात्पर्यं सङ्गृहीतं। तदेवात्र चतुर्थाध्याये वि-

स्पष्टमुदीरितं। आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषदित्येतन् निष्प्रपञ्चब्रह्मात्मतत्त्वस्य प्रतिपादकं सूत्रं। तस्य सूत्रस्यार्थमवबोधयितुं स ईक्षत लोकान्नु सृजा इत्यारभ्याय-मावसथ इत्यन्तेन ग्रन्थेन जगत्प्रपञ्चस्याध्यारोपः प्रतिपादितः। ब्रह्माण्डस्य मध्ये य एते चतुर्दशलोकाः, यश्चैतान् लोकानात्म-शरीरत्वेनाभिमन्यमानो विराट्पुरुषः, यानि च तद्देहच्छिद्रे-भ्य उत्पन्नानि वाक्चक्षुरादीन्द्रियाणि, याश्च तदिन्द्रियाभिमानिन्यो-ऽग्निवाय्वादित्यादिदेवताः, यानि च तासां देवतानां भोगयोग्यानि गवाश्वमनुष्यादिशरीराणि, यच्च तेषु शरीरेषु प्रविष्टानां देवता-नामन्नं, यश्च वायुनैव तदन्नस्वीकारः, यदपि जीवरूपेण तेषु देहेषु प्रविश्य जागरणाद्यवस्थात्रयस्य शरीरान्तरसञ्चारस्य च अनुभवनं, सोऽयं सर्वोऽप्यद्वितीये परमात्मन्यध्यारोपितः प्रपञ्चः। स चात्मबोधोपयोग्यः। एतेन हि जगदङ्कुरेण तन्मूलमात्मतत्त्वम-स्तीत्यवगन्तुं शक्यं। एतदेवाभिप्रेत्य च्छन्दोगा आमनन्ति। अनेन सोम्य शुङ्गेन आपोमूलमन्विच्छद्भिः सोम्यशुङ्गेन तेजो-मूलमन्विच्छ तेजसा सोम्यशुङ्गेन सन्मूलमन्विच्छं सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठिता इति। तदेवमध्या-रोपेण द्वितीयात्मतत्त्वस्यास्तित्वमात्रं सिद्धं। तस्याध्यारोप-स्यापवादेन तत्त्वस्येत्थम्भावोऽवगन्तुं शक्यते। तस्मात् सजातो भूतानीत्यारभ्य परोक्षप्रिया इव हि देवा इत्यन्तेन ग्रन्थेनाध्या-रोपस्यापवादः सङ्गतीतः। तत्राध्यारोपभागे तस्य त्रय आव-सथा इत्यनेन वाक्येन शरीरान्तरसञ्चारोऽपि सङ्ग्रहेण प्रतिपा-दितः। तदेतत् पितृशरीरं मातृशरीरं स्वात्मशरीरमित्ये-

तदावसथत्रयं पञ्चमाध्याये विवरिष्यते। तत्रादौ पितृशरीर-रूपमावसथं दर्शयति। (२)"पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतः"(२)इति। योऽयं शरीरं जिघृक्षुर्जीवात्मा सः 'अयं', 'पुरुषे' पितृशरीरे, प्रथमतः 'गर्भो भवति'। न चात्र स्त्रीगर्भवदुदरवृद्ध्या सोऽभिव्यज्यते। किन्तु 'यदेतत्' पितृशरीरे सप्तमधातुरूपं, 'रेतः', अस्ति तदेव गर्भ इत्युच्यते। तस्मिन् रेतसि जनिष्यमाणस्य प्रविष्टत्वात्। स्वर्गाद्वानरकाद्वा वृष्टिद्वारा भूमौ समागतो जीवो व्रीहियवाद्यन्नद्वारा पितृशरीरे प्रविशति। तएच्च पञ्चाग्निविद्यायां प्रपञ्चेनाम्नातम्। तस्मिंश्च पुरुषशरीरेऽन्नरसशोणितत्वङ्मांसादिक्रमेण परिणते रेतस्यवस्थितो भवति सोऽयं पुरुष गर्भ इत्युच्यते॥

तस्य गर्भस्य जन्मप्रकारं दर्शयति। (३)"तदेतत् सर्वेभ्योऽङ्गेभ्य-स्तेजः सम्भूतमात्मन्येवात्मानं बिभर्त्ति तद्यदा स्त्रियां सिञ्चत्यथैन-ज्जनयति तदस्य प्रथमं जन्म"(३)इति। पुरुषगर्भत्वेन व्यवस्थितं यदेतद्रेतोऽस्ति 'तदेतत्', तस्मिन् पुरुषशरीरे आपादमस्तकं 'सर्वेभ्यः', अवयवेभ्यः सारभूतं सत् 'सम्भूतं' निर्गतं भवति। तच्च सर्वावयवनिर्गतं रेतोरूपं सारं 'आत्मानं', स्वस्यैव रूपान्तरभूतं 'आत्मन्येव' स्वशरीर एव, असौ पुरुषो 'बिभर्त्ति' पोषयति। 'तत्' पोषितं रेतः, अग्निसम्पर्केण घृतमिव कामाग्निना विलीनं सत् हृदये समागत्य व्यवस्थितं भवति। तादृशं रेतो यदा ऋतुकालीनेन गमनेन स्त्रीयोनौ गर्भाशये 'सिञ्चति'। 'अथ' तदानीं, अयं पुरुषः 'एनत्' जीवान्तरा-विष्टं रेतोरूपं शरीरं, 'जनयति'। 'तत्' एतद्रेतोनिःसरणरूपं,

'अस्य' रेतस्यवस्थितस्य संसारिणो जीवस्य, 'प्रथमं जन्म', इत्युच्यते। तस्य त्रय आवसथा इत्युक्तानां मध्ये प्रथमादावसथात् पितृशरीररूपात् सम्पन्नमिति कृत्वा प्रथमं जन्म भवति॥

ननु स्त्रीशरीरे प्रविष्टं परकीयं रेतः स्त्रिया उपद्रवकारि स्यात्, तच्छरीरलग्नवाणादिवदित्याशङ्क्याह। (४)"तत् स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा तस्मादेनां न हिनस्ति"(४) इति। स्त्रीयोनौ प्रविष्टं 'तत्' पुरुषरेतः, तस्याः 'स्त्रियाः' 'आत्मभूयं' स्वशरीरभावं, 'गच्छति'। यथा 'स्वकीयं' 'अङ्गं' स्तनहस्तादिकं, न स्वशरीरात् पृथग्भूतं, तद्वत्। 'तस्मात्' स्वशरीरत्वेनैकीभावकारणात्, 'एनां' स्त्रियं, 'न हिनस्ति' उदरलग्नवाणवद्धिंसां न करोति॥

तद्गर्भद्वारेण स्त्रीपुरुषयोः परस्परमुपकार्योपकारकभावं दर्शयति। (५)"सास्यैतमात्मानमत्र गतं भावयति सा भावयित्री भावयितव्या भवति"(५) इति। 'सा' गर्भधारिणी स्त्री, 'अत्र गतं' स्वशरीरे प्रविष्टं, 'अस्य' पुरुषस्य रेतःसेक्तुः, 'एतमात्मानं' पुत्ररूपं, 'भावयति' परिपालयति। विरुद्धाशनादिपरित्यागोऽनुकूलान्नाद्युपयोगश्च परिपालनं। यस्मात् स्त्री गर्भस्य 'भावयित्री' पुरुषस्यैव पालयित्री, तस्मात् कारणात् तेन पुरुषेण 'सा' स्त्री, 'भावयितव्या' अभीष्टान्नपानवस्त्रादिप्रदानेन पालयितव्या 'भवति'॥

स्त्रीपुरुषयोरुभयोरपि पुत्रं प्रत्युपकारत्वं दर्शयति। (६)"तं स्त्री गर्भं बिभर्त्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति"(६) इति। 'तं' पुत्ररूपं, 'गर्भं', मातृरूपा 'स्त्री', महान्तं प्रयासं

सोढ्वा नव दश वा मासान् स्वोदरे धारयित्वा पोषयति। 'सः' च पिता, 'अग्र एव' प्रसवात् प्रागेव, निष्पन्नं 'कुमारं', 'जन्मनोऽग्रे' प्रसवादूर्ध्वं, 'अधिभावयति' अधिकत्वेन शास्त्रोक्तजातकर्मादिना संस्करोति॥

कुमारसंस्कारेण पितुरुपयोगं दर्शयति। (७)"स यत् कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मानमेव तद्भावयति"(७) इति। पुत्रसंस्कार इति यदस्ति तेन पिता स्वस्यैव संस्कारं करोति। पुत्रस्य स्वदेहरूपत्वात्। तथाचान्यत्र श्रूयते।

पतिर्जायां प्रविशति गर्भो भूत्वा स मातरं।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते॥ इति।

आत्मा वै पुत्रनामासीति च॥

ननु पितुः स्वोपनयनादिना स्वकीयः संस्कारः पूर्वमेव सम्पन्नः किमनेन पुत्रसंस्कारेण पुत्रोत्पादनेन वेत्यत आह। (८)"एषां लोकानां सन्तत्या एवं सन्तता हीमे लोकाः"(८) इति। पुत्रपौत्रप्रपौत्रादयः 'इमे' जनाः, लोकाः, तेषां 'लोकानां', अविच्छेदार्थं संस्कृतपुत्रोत्पादनं। अनेन पुनः स्वोत्पादिते पुत्रे संस्कृते सति तथैव पुत्रोऽप्यन्यं पुत्रमुत्पाद्य संस्करोति। सोऽप्यन्यं पुत्रमित्येवमेव 'इमे लोकाः', अविच्छिन्ना भवन्ति। अन्यथा विच्छिद्येरन्॥

मातृशरीरान्निर्गमनस्य पूर्वोक्तजन्मापेक्षया द्वितीयत्वं दर्शयति। (९)"तदस्य द्वितीयं जन्म"(९) इति॥

जनकस्य पुत्रप्रयुक्तमुपयोगं दर्शयति। (१०)"सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते"(१०) इति। 'अस्य' पितुः, द्वावा-

ज्ञानौ देहौ तयोर्मध्ये 'अयमात्मा' पुत्ररूपो देहः, 'पुण्येभ्यः कर्मभ्यः' शास्त्रोक्तकर्मनिष्पादनार्थं, 'प्रतिधीयते' स्वस्य प्रतिनिधित्वेन गृहेऽवस्थाप्यते ॥

ननु किमनेन प्रतिनिधिना स्वयमेव कुतो न करोतीत्यत आह। (११)"अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति"(११) इति। 'अस्य' पितुः, 'इतर आत्मा' स्थविरो देहः, 'कृतकृत्यः' कृतान्येतज्जन्मप्रयुक्तानि कृत्यानि सर्वाणीत्यसौ 'कृतकृत्यः', लौकिकानां कुटुम्बपोषणादीनां शास्त्रीयाणामग्निहोत्रादीनाञ्च निष्पादितत्वात् कृतकृत्यत्वं। 'वयोगतः' वयसा पूर्वकर्मसम्पादितेनायुषा हीनः, 'प्रैति' म्रियते। अतः पुत्रदेहेनैव पुण्यं कर्म कर्त्तव्यं न तु मृतेन पितृदेहेन कर्त्तुं शक्यं ॥

पूर्वोक्तं जन्मद्वयमपेक्ष्य जन्मान्तरं दर्शयति। (१२)"स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म"(१२) इति। 'सः' वृद्धः पिता, 'इतः' अस्माज्जठरदेहात्, 'प्रयन्नेव' निर्गच्छन्नेव, स्वर्गे नरके मनुष्यलोके वा स्वकर्मानुसारेण 'पुनर्जायते'। न त्वस्माद्देहान्निष्क्रान्तस्य जन्मान्तरकालव्यवधानमस्ति। अस्मिन्नेव शरीरे स्थित्वा मनसा देहान्तरं स्वीकृत्य पश्चादमुं देहं परित्यजति। यथा जलौका मुखेन तृणान्तरमवष्टभ्य ततः पृष्ठभागमुपसंहरति, तद्वत्। तथा च वाजसनेयिनः समामनन्ति। तृणजलायूका तृणस्यान्तं गत्वान्यमाक्रममाक्रम्यात्मानमुपसंहरत्येवमेवायमात्मेदं शरीरन्निहत्याविद्याङ्गमयित्वान्यमाक्रममाक्रम्यात्मानमुपसंहरति इति। तद्यथोक्तं पुनर्जननरूपमस्य संसारिण आत्मनस्तृतीयञ्जन्मेत्युच्यते। यद्यपि पूर्वोक्तं जन्मद्वयं

पुत्रदेहस्य इदन्तु देहान्तरस्य, तथापि पितृपुत्रोपाध्योर्भिन्नत्वात् उपाध्युपलक्षितस्यात्मन एकत्वमभिप्रेत्य* जन्मत्रयमित्युपचर्य्यते। यद्वा पितुः सकाशात् रेतोरूपेण मातुः सकाशात् कुमाररूपेण च पुत्रे यज्जन्मद्वयमुदाहृतं तेनैव न्यायेन पितुरपि स्वकीयपितृमातृसकाशाज्जन्मद्वयमर्थादुक्तमेवेत्यभिप्रेत्य तदपेक्षया पितुरिदं तृतीयं जन्म पुत्रस्य तु जन्मद्वयं साक्षात् उक्तं पितृदृष्टान्तेनमरणादूर्द्ध्वं तृतीयं जन्म भविष्यति। एवं सर्वस्यापि जन्मत्रयं पुनः पुनरावर्त्तते अनेन जन्मत्रयोपवर्णनेन संसाराद्विरक्तिरुपजायते। न हि मातापितृमलद्वयरूपदेहस्य निरन्तरं धारणादस्मादधिकं जुगुप्सितं वैराग्यकारणमुदाहर्त्तुं शक्यं। अत एव विष्णुपुराणे पठ्यते।

स्वदेहाशुचिगन्धेन विरज्येत न यः पुमान्।

विरागकारणं तस्य किमन्यदुपदिश्यते॥ इति। तस्यैतस्य जुगुप्सितस्य संसारस्य ज्ञानमन्तरेण विनाशाभावन्तत्त्वज्ञानेन निवृत्तिञ्च द्योतयितुं मन्त्रमुदाहरति।(१३)"तदुक्तमृषिणा(१३)" इति। पुरुषे ह वा इत्यारभ्य तृतीयं जन्मेत्यन्तेन मन्त्रग्रन्थेन संसारस्य यत् कष्टमुपवर्णितं, यच्च संसारनिवर्त्तकं तत्त्वज्ञानमुत्तरत्र विवक्षितं, तदुभयमप्यर्थजातं केनचिन्मन्त्रेणाभिहितं॥

तमेतं मन्त्रं पठति। (१४)"गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति"(१४) इति। 'अहं' वामदेवाख्यो

* एकत्वमभिप्रेत्यैकस्येति क०।

मुनिः, 'गर्भे' 'नु' मातुर्गर्भे एव, अवस्थितः 'सन्', 'एषां' अग्निवाय्वादित्यादीनां, 'देवानां,' 'विश्वा जनिमानि' सर्वाण्यपि जन्मानि, 'अन्ववेद' अनुक्रमेण विदितवानस्मि, मुखाद्वाग्वाचोऽग्निरित्यादिश्रुतिप्रतिपादितं परमात्मना सम्पादितं देवानां जन्म ज्ञातवानस्मि, औपनिषदमात्मज्ञानं मम सम्पन्नमित्यर्थः। 'अधः' एतस्मादात्मज्ञानोदयादधस्तात्, 'मां वामदेवं, 'आयसीः' लोहनिर्मितशृङ्खलासमानाः, 'शतं पुरः' शतसङ्ख्याकानि शरीराणि, 'अरक्षत्'। यथा कारागृहेऽवस्थापितं तस्करं प्रबलं बद्धाः शृङ्खलाः पलायनाद्रक्षन्ति, एवं शतसङ्ख्योपलक्षितान्यनन्तानि शरीराणि यथाहं मुक्तो न भवामि तथैवारक्षन्। इदानीं गुरुशास्त्रप्रसादाल्लब्धतत्त्वविद्यायुक्तः सन्नविद्यामयात् संसारात् 'श्येनः', इव जालम्भित्त्वा 'जवसा निरदीयं' त्वरया निर्गतोऽस्मि, 'इति'शब्दो मन्त्रसमाप्त्यर्थः॥

अस्य मन्त्रस्य तात्पर्यं दर्शयति। (१५)"गर्भ एवैतच्छयानो वामदेव एवमुवाच स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत्समभवत्"(१५) इति। अहमिति मन्त्रे योऽभिहितः सः 'वामदेवः', मातृगर्भे, 'एव','शयानः',सन् 'एतत्' पूर्वोक्तमन्त्रार्थज्ञानं, * 'एवमुवाच'। 'सः' वामदेवः, 'एवं' मन्त्रोक्तप्रकारेण, आत्मतत्त्वं 'विद्वान्', प्रारब्धकर्मणि क्षीणे सति 'अस्माच्छरीरभेदात्' देहविनाशात्, 'ऊर्ध्वं' उत्तरकाले, अवस्थितः सर्वस्मात् संसारबन्धात् 'उत्क्रम्य','अमुष्मिन्' इन्द्रियागोचरे, 'स्वर्गे' सुष्ठु तत्त्वज्ञा-

* मन्त्रार्थजातमिति क०, ग० च।

नेनार्जिते, 'लोके' स्वप्रकाशत्वेनावलोक्यमाने स्वरूपे, 'सर्वान् कामान्' तैत्तिरीयके प्रोक्तान् सार्वभौमादिहिरण्यगर्भपर्यन्तगतान् सर्वानानन्दान्, 'आप्त्वा' परमानन्दस्वरूपब्रह्मात्मत्वेन प्राप्य, 'अमृतः' मरणरहितः, 'समभवत्'। यद्यपि गर्भे गुरुशास्त्रोपदेशोऽनास्ति। तथापि जन्मान्तरोपदेशस्य केनचित् प्रबलकर्मणा तदानीं प्रतिबद्धस्य गर्भे प्रतिबन्धक्षयमपेक्ष्य ज्ञानोत्पादकत्वं सम्भवति। तथा च भगवता व्यासेन सूत्रितं। ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनादिति। प्रस्तुतप्रतिबन्धाभावे सति यस्मिन् जन्मनि उपदेशस्तस्मिन्नेव जन्मनि ज्ञानं भवति। अन्यथा जन्मान्तरे कुतो वामदेवे तथा दर्शनादिति* सूत्रार्थः। यद्यपि मुक्तौ कामविषयानन्दा न सन्ति। तथापि विषयानन्दानां ब्रह्मानन्दलेशत्वेन तस्मिन्नन्तर्भावाद् ब्रह्मानन्दप्राप्त्या सर्वकामप्राप्तिरुपचर्यते। तत्त्वज्ञानिनो वर्त्तमानदेहपातादूर्ध्वं देहान्तरसम्बन्धस्याभावेन देहप्राणवियोगरूपस्य मरणस्याप्रसक्तत्वादमृतत्वं द्रष्टव्यं। 'समभवत्', इत्यभ्यासोऽध्यायसमाप्त्यर्थः॥ १॥

इति सायणाचार्य्य-विरचिते-माधवीये वेदार्थप्रकाशे ऐतरेयारण्यके द्वितीयारण्यके पञ्चमोऽध्यायः॥

---

* तद्दर्शनादिति क०, ग० च।

## अथ षष्ठोऽध्यायः ।

(१)यथास्थानन्तु गर्भिण्यः(१) । (२)"कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा(२) (३)येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति यदेतद्धृदयं मनश्चैतत्सञ्ज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति(३) (४)सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति(४) (५)एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत् किञ्चेदं प्राणि जङ्गमञ्च पतत्रि च यच्च स्थावरं सर्वन्तत् प्रज्ञानेत्रं(५) (६)प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा(६) (७)प्रज्ञानं ब्रह्म(७) (८)स एतेन प्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन्त् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत्समभवत्(८) ॥ १ ॥

इत्यैतरेयद्वितीयारण्यके षष्ठोऽध्यायः ॥

ऐतरेयारण्यकभाष्यम् ।

अध्यारोपप्रकरणे तस्य त्रय आवसथा इति वाक्येन पितृमातृस्वशरीररूपं संरक्षणार्थं स्थानत्रयं यदुक्तं तत्पुनः पञ्चमाध्याये वैराग्योत्पत्त्यर्थं पुरुषे ह वा इत्यादिना प्रपञ्चितं। स जातो भूतान्यभिव्यैख्यदित्यादिनाऽपवादप्रकरणेन यत्तत्त्वज्ञानं सङ्गृहीतं यच्च वामदेवोदाहरणेन ज्ञानफलं सङ्क्षिप्य दर्शितं तदुभयं विशदीकर्तुं षष्ठोऽध्याय आरभ्यते। तत्रात्मा वा इदमित्यध्यायेन सामान्यतस्तत्त्वमवगत्य पुरुषे ह वा इत्यध्यायोक्तजन्मक्लेशविचारेण परं वैराग्यं प्राप्तानां जिज्ञासूनां विचारं दर्शयति। (२)"कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा"(२) इति। आत्मा वा इदमेक एवाग्र आसीदिति श्रुतौ कश्चिन्निरुपाधिक आत्मा श्रुतः। स एतमेव आत्मानं* विदार्यैतया द्वारा प्रापद्यतेतिश्रुतौ कश्चित्सोपाधिक आत्मा श्रुतः, 'वयं', तु प्रतिदिनं प्रतिक्षणं 'आत्मेति', यं 'उपास्महे', सः 'कः' सोपाधिको निरुपाधिको वेत्यर्थः। उपासनं नाम नैरन्तर्येण तात्पर्यपुरःसरो व्यवहारः। अहङ्गच्छाम्यहमागच्छामि ममायं देहो ममेदं गृहमिति निरन्तरमादरेणात्मव्यवहारो लोके दृश्यते। सोऽयमत्रोपासनत्वेनोपचर्यते। तथा 'स आत्मा' श्रुतावात्मा वा इत्यादिना श्रुतः, 'कतरः' सोपाधिकनिरुपाधिकयोर्मध्ये 'कतरः' कोऽसावित्यर्थः। ननु कतरः स आत्मेत्ययं विचारोऽस्तु श्रुत्यैकसमधिगम्यस्य तस्य विचारमन्तरेणानिश्चयात्। कोऽयमात्मा इत्ययन्तु विचारो न युक्तः॥

* सीमानमिति घ०।

तस्याहम्प्रत्ययगम्यत्वेन प्रसिद्धत्वादित्याशङ्क्य विचारहेतुमनेककोट्यात्मकं संशयं दर्शयति । (२)"येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति यदेतद्धृदयं मनश्चैतत् सञ्ज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति"(२) इति । यद्यप्यहं प्रत्ययगम्यश्चैतन्यरूप आत्मेति सामान्याकारेण प्रसिद्धिरस्ति, तथापि तद्विशेषसंशयो विद्यते । वाह्यान्तःकरणेषु सर्वेष्वपि चैतन्यं पृथक् पृथगभिव्यज्यते । यथा जलपात्रेषु प्रत्येकं सूर्य्यादिप्रतिविम्बः, तद्वत् । तथा सति चक्षुरिन्द्रियाभिव्यक्तचैतन्येन देहेन्द्रियसङ्घाताभिमानी लौकिकः पुरुषो नीलपीतादिरूपं पश्यति । अतः 'येन' चाक्षुषचैतन्येन, 'पश्यति', तच्चैतन्यं किमात्मेत्येका कोटिः । तथा 'येन' श्रोत्राभिव्यक्तचैतन्येन, शब्दं 'शृणोति', तत् किमात्मेति द्वितीया कोटिः । एवं घ्राणवाग्जिह्वादीन्द्रियाभिव्यक्तचैतन्यविशेषाणामात्मतत्त्वरूपसन्देहकोटित्वं द्रष्टव्यं । चैतन्यस्यैव रूपरसादिज्ञापकत्वं कठवल्लीष्वप्याम्नायते । येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् एतेनैव विजानाति इति । श्रोत्रादीन्द्रियद्वारा विषयग्राहकत्वमभिप्रेत्य तलवकारैरप्याम्नायते । श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुरिति । वाजसनेयिनोऽपि तत्तदिन्द्रियसाक्षिचैतन्यस्य तत्तदिन्द्रियद्वारकविषयग्रहणमभिप्रेत्य तत्तदिन्द्रियनाम्ना व्यवहारमामनन्ति । प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो यन्मनो विदुरिति ।

बाह्येन्द्रियाभिव्यक्तचैतन्येष्वात्मतत्त्वसंश्रयं दर्शयित्वा अन्तःक-रणद्वयतद्वृत्तिविशेषाभिव्यक्तचैतन्येष्वात्मतत्त्वसंश्रयमभिप्रेत्य यदेत-द्धृदयमित्यादिना तत्तदुपाधिस्वरूपमुपन्यस्यते। 'हृदयं' बुद्धिः, सा चात्मनि कर्तृत्वादिधर्मारोपसाधनत्वादन्तःकरणमित्यु-च्यते। तस्य च बुद्धिविशिष्टस्य कर्त्तुरात्मनो रूपादिविषय-सङ्कल्पविकल्पादिसाधनं 'मनः', इत्युच्यते। बुद्धिमनसोर्द्वयो-रन्तःकरणविशेषयोः समुच्चयार्थः 'च'कारः। एतदेवान्तःकरणद्वैवि-ध्यमभिप्रेत्य तैत्तिरीयके तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमय इति कोशद्वयमुपन्यस्तं। तस्य च मनसो वृत्तिविशेषाः, 'एतत् संज्ञानं' इत्यादिना प्रपञ्च्यते। यत् मनोऽस्ति 'एतत्', एव वृत्तिरूपेण परिणतं सत् 'सञ्ज्ञानं', इत्युच्यते। सम्यगिदं वस्त्विति ज्ञप्तिः 'सज्ज्ञानं'। 'आज्ञानं' आज्ञप्तिः, ईश्वरभावः। 'विज्ञानं' इदमस्माद्विशिष्टमित्येवमादि-विवेकः। 'प्रज्ञानं' ग्रन्थार्थादावुन्मेषः। 'मेधा' ग्रन्थतदर्थ-धारणं। 'दृष्टिः' चक्षुर्द्वारा रूपोपलब्धिहेतुर्मनोवृत्तिः। 'धृतिः' धैर्यं, प्राप्तायामापदि तद्विषयगणनाराहित्यं। 'मतिः' मननं, राजकार्याद्यालोचनं। 'मनीषा' तत्र स्वातन्त्र्यं। 'जूतिः', जवः, प्राप्तकार्येषु मनसोऽव्यग्रता। यद्वा 'जूतिः' मनसो रोगादि-जनितदुःखित्वं। 'स्मृतिः' अनुभूतार्थवस्तुस्मरणं। 'सङ्कल्पः' असमीचीनेऽपि वस्तुनि सम्यक्त्वेन कल्पनं। 'क्रतुः' अवश्यं करिष्यामीत्यध्यवसायः। 'असुः' प्राणादिजीवनक्रियानिमित्ता वृत्तिः। 'कामः' असन्निहितविषयाकाङ्क्षा। 'वशः' स्त्रीव्यति-कराद्यभिलाषः। 'इति'शब्दः प्रदर्शनार्थः। इत्येवमाद्या

अन्योऽपि सात्त्विकराजसतामसवृत्तिभेदा बहवो द्रष्टव्याः। अत्र सर्वत्र किमेतद्वृत्त्युपहितं चैतन्यमात्मेत्येवं संशयकोट्यो योजनीयाः॥

इत्थं संशयमुपन्यस्य निर्णयं दर्शयति। (४)"सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति"(४)इति। येन वा पश्यतीत्यादिना क्रतुरसुः कामो वश इत्यन्तेन ग्रन्थेन यान्युपन्यस्तानि 'एतानि सर्वाणि', अपि तत्तद्वृत्त्युपाधिद्वारा उपलक्षितस्य 'प्रज्ञानस्य' शुद्धचैतन्यस्य, 'नामधेयानि', सम्पद्यन्ते। प्रकृष्टं ज्ञानं 'प्रज्ञानं'। चैतन्यं हि स्वतो निर्मलत्वात् प्रकृष्टमेव। अधमोपाधिसम्पर्कवशादपकर्षः प्रतीयते। यदा तूपाधिविशिष्टत्वं परित्यज्य तत्तदुपाधिभिरभिलक्षितं शाखाग्रचन्द्रन्यायेन विविच्यते। तदानीमुपाधिकृतस्यापकर्षस्याभावात् प्रकर्ष एव परिशिष्यते। तच्च प्रकृष्टं चैतन्यं सर्वेष्वप्युक्तोपाधिषु अनुगतमिति कृत्वा तस्यैव मुख्यमात्मत्वमिति निर्णयः। उपाधिविशिष्टस्य न मुख्यमात्मत्वं। शुद्धचैतन्यस्यैव मुख्यात्मत्वमित्ययमेव विवेको बृहदारण्यके स एष इह प्रविष्ट इत्यादिना प्रविष्टं जीवात्मानं प्रकृत्यैवमाम्नायते। तन्न पश्यन्त्यकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव इति। अयमर्थः। देहे नखाग्रपर्यन्तं प्रविष्टं ज्ञानक्रियाशक्त्युपाधिकन्तमात्मानं विवेकिनः पुरुषाः स्वात्मतया न पश्यन्ति। हि यस्मात् स आत्मोपाधिविशिष्टः कृत्स्नो न भवति तस्मान्न मुख्यात्मत्वं। अकृत्स्नत्वमेव कुत इतिचेत्तदुच्यते। प्राणन्नेव प्राणचलने श्वासं कुर्वन्नेव प्राणो-

पाधिविशिष्टतया प्राणनामको भवति। न चासौ वागाद्युपाधिविशिष्टेष्वनुगच्छति। एवं वागादिष्वप्येकैकोपाधिना विशिष्ट इतरत्र नानुगच्छति। अभिवदनकाल एव वागुपाधिकः। रूपदर्शनकाल एव चक्षुरुपाधिकः। एवमितरत्रापि। कथन्तर्ह्यात्मनः कृत्स्नत्वमित्याकाङ्क्षायां प्राणवागाद्युपाधिवैशिष्ट्यपरित्यागे सति कृत्स्नत्वमित्ययमर्थो बृहदारण्यक एवमाम्नातः। आत्मेत्येवोपासीतात्र ह्येते सर्वे एकं भवति इति। ये वागाद्युपाधिषु चैतन्यविशेषास्ते सर्वेऽपि निरुपाधिके आत्मनि अन्तर्भवन्ति। यथा जलपात्रगताः सूर्याः सर्वेऽपि तत्कल्पनाधिष्ठानभूते मुख्ये सूर्येऽन्तर्भवन्ति, तद्वत्॥

तदेवं कोऽयमात्मेत्येतस्मिन् त्वम्पदार्थविचारे निरुपाधिकं साक्षि चैतन्यं प्रज्ञानशब्दाभिधेयमात्मेति निर्णयोऽभिहितः। अथ कतरः स आत्मेत्येतस्मिन् तत्पदार्थे* निर्णयं दर्शयति। (५)"एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत् किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत् प्रज्ञानेत्रं"(५) इति। ब्रह्मादिस्थावरान्तं 'यत्' जगत्, अस्ति 'तत् सर्वं प्रज्ञानेत्रं"। निरुपाधिकत्वेन प्रकृष्टा ज्ञप्तिः प्रज्ञा, नीयते सर्वं जगदनेनेति सृष्टिस्थितिप्रलयव्यवहाराणां मूलकारणं नेत्रं, प्रज्ञा एव नेत्रं यस्य जगतस्तत् 'प्रज्ञानेत्रं'। अशेष-

---

* तत्पदार्थविचारे इति ग०।

जगतो मूलकारणभूतं यच्चैतन्यन्तदेव कतरः स आत्मेत्यस्मिन् तत्पदार्थविचारे मुख्यात्मत्वेन निर्णीतमिति तात्पर्यार्थः। 'एष ब्रह्म', इत्यनेन पुल्लिङ्गेन 'ब्रह्म'शब्देन हिरण्यगर्भः समवर्त्तताग्र इत्यादिशास्त्रप्रसिद्धः प्रथमः शरीरी विवक्षितः। तस्य शास्त्रप्रसिद्धिं द्योतयितुं एतच्छब्दः। 'इन्द्रः' देवराजः। 'प्रजापतिः' पूर्वोक्तेन्द्रियतदभिमानिदेवतोत्पादको विराड्देहः। 'सर्वे देवाः', अग्निवाय्वादयः। पृथिव्यादीनि 'पञ्च महाभूतानि', प्रसिद्धानि। 'इमानि च पञ्चमहाभूतानि', इत्येतस्य वाक्यस्य 'पृथिवी', इत्यारभ्य 'एतानि', इत्यन्तं विवरणं। 'इमानि', 'च', अन्यानि 'क्षुद्रै'रल्पकैर्मशकपिपीलिकादिदेहैः 'मिश्राणि',। 'इव'शब्दोऽनर्थकः। 'बीजानि' कारणानि। मनुष्यादिपिपीलिकान्ताः सर्वे देहाः स्वयं पञ्चभूतकार्याः सन्तः सजातीयदेहान्तरहेतुत्वेन बीजशब्दाभिधेयाः। तेषां बीजानाञ्च नानाजातीयत्वं 'इतराणि च', इत्यनेन प्रतिज्ञायते, परस्परविलक्षणबहुभेदयुक्तानीत्यर्थः। 'अण्डजानि', इत्यादिना प्रतिज्ञातमेव नानात्वं प्रपञ्च्यते। पक्षिसर्पादीनि 'अण्डजानि'। 'जारुजानि' जरायुजानि मनुष्यगवादीनि। क्रिमिदंशादीनि 'स्वेदजानि'। तरुगुल्मादीनि 'उद्भिजानि'। यथोक्तेष्वेव जरायुजानां 'अश्वा गावः पुरुषा हस्तिनः', इति उदाहृत्य प्रदर्शनं। उक्तानामनुक्तानां च सङ्ग्रहोपसंहारार्थं 'यत् किञ्चेदं प्राणि' इत्यादिवाक्यं॥

यदेतज्जगदुत्पत्तिस्थितिलयकारणत्वं चैतन्यस्य प्रज्ञानेत्रमिति पदेन सङ्क्षिप्तोक्तं तदेव विवृणोति। (६)"प्रज्ञाने

प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा"(६) इति। 'प्रज्ञाने' निरुपाधिकचैतन्ये, पूर्वोक्तं सर्वं जगत् 'प्रतिष्ठितं, रज्ज्वां सर्पादिवदारोपितं। अनेनोत्पत्तिहेतुत्वमुक्तं। 'लोकः' सर्वप्राणिसमूहः, 'प्रज्ञानेत्रः' प्रज्ञा चैतन्यमेव नेत्रं व्यवहारकारणं यस्यासौ 'प्रज्ञानेत्रः'। अनेन स्थितिहेतुत्वमुक्तं। 'प्रज्ञा' चैतन्यं,'प्रतिष्ठा' लयस्थानं। प्रतितिष्ठति लीयतेऽत्रेति व्युत्पत्तेः। अनेन संहारहेतुत्वमुक्तं। एतावता शास्त्रान्तरप्रसिद्धं* जगज्जन्मस्थितिलयकारणत्वाख्यं ब्रह्मणस्तटस्थलक्षणमुक्तं भवति। एतच्च लक्षणं तैत्तिरीया विस्पष्टमामनन्ति यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्मेति॥

तदेवं विचारद्वयेन तत्त्वम्पदार्थौ शोधितौ। अथ महावाक्येन तयोरैक्यं दर्शयति। "(७)प्रज्ञानं ब्रह्म"(७) इति। सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्तीतिवाक्येन देहेन्द्रियादिसाक्षिरूपं यत् 'प्रज्ञानं' त्वम्पदार्थरूपं निर्णीतं, तदेवैष ब्रह्म इत्यादिवाक्येन जगत्कारणतया निर्णीतं परं 'ब्रह्म'। न तयोरीषदपि भेदोऽस्ति। अहम्प्रत्ययगम्यत्वाकारेण यदा विवक्ष्यते तदा जीव इत्युच्यते। यदा तु शास्त्रप्रतिपाद्यत्वाकारो विवक्षितः। तदानीं ब्रह्मेत्यभिधीयते। अतो व्यवहारभेदमात्रं, न तु तत्त्वतो भेदोऽस्ति। न चैवं सति पुनरुक्तिप्रसङ्गः। अब्रह्मत्वपरोक्षत्वयोर्व्यावर्त्ययोर्भेदेन पदद्वययोगात्। एतच्च वाक्यवृत्तौ विस्पष्टमभिहितं।

---

* शाखान्तरप्रसिद्धमिति क०।

प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः ।
अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥
इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ।
अब्रह्मत्वं त्वमर्थस्य व्यावर्त्तेत तदैव हि ॥
तदर्थस्य च पारोक्ष्यं यद्येवं किन्ततः शृणु ।
पूर्णानन्दैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥ इति ।

इत्थं चतुर्थाध्याये स जातो भूतान्यभिव्यैख्यदित्यादिनापवाद-प्रकरणेन सङ्गृहीतमात्मतत्त्वमस्मिन्नध्याये तत्त्वम्पदार्थविचार-मुखेन प्रपञ्चितं । अथ तत्त्वज्ञानफलं दर्शयति । (८)"स एतेन प्रज्ञेनात्मनास्माल्लोकादुत्क्राम्यामुष्मिन्स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत्समभवत्"(८)इति । यः पुमान् प्रज्ञानं ब्रह्मेत्येवं जानाति 'सः' पुमान्, 'एतेन', 'प्रज्ञेनात्मना' चैतन्यस्वरूपेण, स्वयमाविर्भवति । तदूर्ध्वं विदेहमुक्तिं प्रति-पद्यते । तन्मुक्तिप्रतिपादकं अस्माल्लोकादित्यादिवाक्यं पूर्व-स्मिन्पञ्चमाध्याये व्याख्यातं । तस्य वाक्यस्य पुनरप्यत्रोक्तिर्वि-द्योपसंहारार्था । 'समभवत्', इत्यभ्यासोऽध्यायसमाप्त्यर्थः ॥ १ ॥

इति सायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयारण्यके द्वितीयारण्यके षष्ठोऽध्यायः ॥

---

## अथ सप्तमोऽध्यायः।



(१)वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठित-माविरावीर्म एधि वेदस्य म आणी स्थः श्रुतं मे माप्रहा-सीरनेनाधीतेनाहोरात्रान्त्सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्ता-रमवतु वक्तारम्(१) ॥ १ ॥

इत्यैतरेयद्वितीयारण्यके सप्तमोऽध्यायः समाप्तः ॥

द्वितीयारण्यकं समाप्तं ।

षष्ठे तत्त्वविद्यां परिसमाप्य सप्तमे शान्तिकरं मन्त्रं पठति। (१)"वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरा-वीर्म एधि वेदस्य म आणीस्थः श्रुतं मे माप्रहासीरनेनाधीतेना-होरात्रान्त्सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम्"(१)इति। यथोक्ततत्त्वविद्याप्रतिपादकग्रन्थपाठे प्रवृत्ता मदीया 'वाक्', सर्वदा 'मनसि प्रतिष्ठिता', मनसा यद्यच्छब्दजातं विवक्षितं तदेव पठति। 'मनः', च मदीय'वाचि', 'प्रतिष्ठितं', यद्य-द्विद्याप्रतिपादकत्वेन वक्तव्यं शब्दजातमस्ति, तदेव मनसा

विवक्ष्यते। एवमन्योन्यानुग्रहेति वाङ्मनसे विद्यार्थं ग्रन्थं साकल्येनावधारयितुं शक्नुतः। मनसः सावधानत्वाभावे वागिन्द्रियं सुप्तोन्मत्तप्रलापादिवद् यत् किञ्चिदसङ्गतं ब्रूयात्। तथा वाचः पाटवाभावे सति गद्गदरूपया वाचा विवक्षितं सर्वं यथावन्नोच्चार्येत। अतस्तयोरन्योन्यानुकूल्यमस्त्वित्येवं प्रार्थ्यते। 'आविः' शब्देन स्वप्रकाशं ब्रह्मचैतन्यमुच्यते। प्रज्ञानशब्देन व्यवहृतत्वात् तस्याविर्भूतरूपत्वं। तथाविध हे आत्मन् 'मे' मदर्थं, 'आवीरेधि' अविद्यावरणापनयनेन प्रकटीभव। हे वाङ्मनसे मदर्थं 'वेदस्य' यथोक्ततत्त्वविद्याप्रतिपादकस्य ग्रन्थस्य, 'आणी स्थः' आनयनसमर्थे भवतं। 'मे श्रुतं' मया श्रोत्रेणावगतं ग्रन्थं तदर्थजातं, 'माप्रहासीः' मापरित्यजतु, विस्मृतं माभूदित्यर्थः। 'अनेनाधीतेन' विस्मरणरहितेन ग्रन्थेन, 'अहोरात्रान्', 'सन्दधामि' संयोजयामि, अहनि रात्रौ चालस्यं परित्यज्य निरन्तरं पठामीत्यर्थः। तस्मिन् पठिते ग्रन्थे 'ऋतं' परमार्थभूतं वस्तु, 'वदिष्यामि', विपरीतार्थवदनं कदाचिदपि माभूदित्यर्थः। 'ऋतं' मानसं। 'सत्यं' वाचिकं। मनसा वस्तुतत्त्वं विचार्य वाचा 'वदिष्यामि' इत्यर्थः। 'तत्' मया वक्ष्यमाणं ब्रह्मतत्त्वं, 'मां' शिष्यं, 'अवतु' सम्यग् बोधनेन पालयतु। तथा 'तत्' ब्रह्मतत्त्वं, 'वक्तारं' आचार्यं, 'अवतु' बोधकत्वसामर्थ्यप्रदानेन पालयतु। पुनरपि 'अवतु मां', इत्याद्युक्तिः फलविशेषाय। पूर्वं साधनकाले शिष्याचार्ययोः पालनं प्रार्थितमित्यर्थः। इदानीं फलकालेऽपि प्रार्थ्यते। शिष्यस्याविद्यातत्कार्यनिवृत्तिः फलं। आचार्यस्य तादृशशिष्यदर्शनेन विद्यासम्प्रदा-

थप्रवृत्तिप्रयुक्तपरितोषः फलं। अनेन मन्त्रपाठेन विद्योत्पत्तेः पुरा विद्याप्रतिबन्धका विघ्नाः परिक्षियन्ते। विद्योत्पत्तेरूर्ध्वमसम्भावनाविपरीतभावनोत्पादका विघ्नाः परिक्षियन्ते। 'अवतु वक्तारं', इत्यभ्यासोऽध्यायसमाप्त्यर्थो द्वितीयारण्यकसमाप्त्यर्थश्च ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीविद्यातीर्थमहेश्वरापरावतारस्य वैदिकमार्गप्रवर्त्तकस्य श्रीवीरबुक्कमहाराजस्याज्ञापालकेन सायणामात्येन विरचिते वेदार्थप्रकाशे ऐतरेयारण्यके द्वितीयारण्यके सप्तमोऽध्यायः।

समाप्तञ्च द्वितीयारण्यकम्।

---

# ऐतरेयारण्यकम् ।

तृतीयम् ।

हरिः ओम् ।

(१)अथातः संहिताया उपनिषत्(१) (२)पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहितेति माण्डूकेय आकाशः संहितेत्यस्य माक्षव्यो वेदयाञ्चक्रे(२) (३)स हाविपरिहृतो मेने न मेऽस्य पुत्रेण समगादिति(३)(४)समाने वै तत्परिहृतो मन इत्यागस्त्यः समानं ह्येतद्भवति वायुश्चाकाशश्च(४) (५)इत्यधिदैवतमथाध्यात्मं(५) (६)वाक् पूर्वरूपं मन उत्तररूपं प्राणः संहितेति शूरवीरो माण्डूकेयः(६)(७)अथ हास्य पुत्र आह ज्येष्ठो मनः पूर्वरूपं वागुऽत्तररूपं मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति तस्मान्मन एव पूर्वरूपं वागुत्तररूपं प्राणस्त्वेव संहितेति(७) (८)समानमेनयोरत्र पितुश्च पुत्रस्य च(८) (९)स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहतः(९) (१०)स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति(१०) (११)इति नु माण्डूकेयानाम्(११) ॥ १ ॥

## ऐतरेयारण्यकभाष्यम्

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १ ॥
प्राणविद्या मध्यमस्य ब्रह्मविद्योत्तमस्य च ।
पूर्व्वोक्ताक्ष्याधमस्याथ संहितोपास्तिरीर्यते ॥ २ ॥

त्रिविधो विद्याधिकारी, उत्तमो मध्यमोऽधमश्च । सर्वस्मात् संसाराद्विरक्त एकाग्रचित्तः सद्योमुक्तिकाम उत्तमः । तं प्रत्यात्मा वा इदमेक एवाग्र आसीदित्यादिना ब्रह्मविद्योक्ता । हिरण्यगर्भप्राप्तिद्वारा क्रममुक्तिकामो मध्यमः । तं प्रत्युक्थमुक्थमित्यादिना प्राणविद्योपास्तिरुक्ता । यस्तु द्विविधां मुक्तिमकामयमानः प्रजापश्वादिमात्रकामोऽधमः । तं प्रति संहितोपासनं तृतीयारण्यकेऽभिधीयते । तत्र संहितोपासनं प्रतिजानीते । (१) "अथातः संहिताया उपनिषत्" (१) इति । 'अथ' प्राणविद्याब्रह्मविद्ययोः कथनानन्तरं, यतः कारणात् प्रबलया पाठवासनया युक्तस्य पाठसम्बन्धरहितयोः प्राणब्रह्मविद्ययोश्चित्तं न प्रविशति 'अतः' कारणात्, 'संहितायाः' पाठसम्बन्धिन्याः, 'उपनिषत्' विद्या, उच्यत इति शेषः । उपनिषसमस्यां विद्यायां प्रजापश्वादिफलमिति 'उपनिषत्' ॥

तामेतां विद्यां विधत्ते । (२) "पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहितेति माण्डूकेय आकाशः संहितेत्यस्य माक्षव्यो वेदयाञ्चक्रे" (२) इति । अग्निमीड इत्यत्र अग्निमिति योऽयमकारः सोऽयं संहितायाः पूर्वरूपो वर्णः । ईड इत्यत्र योऽ-

यमौकारः सोऽयं संहिताया उत्तरो वर्णः। द्वयोर्वर्णयोर्नैर-न्तर्य्येणोच्चारणं 'संहिता'। परः सन्निकर्षः संहितेति सूत्रित-त्वात्। एतासु पूर्वोत्तरवर्णसंहितासु भूलोकद्युलोकवायूनां दृष्टिः कर्त्तव्या। यद्यपि पृथिव्यादीनां प्रथमनिर्द्दिष्टत्वात् प्रतीकत्वं प्राप्तं, तथापि य एवमेतां संहितां वेदेति संहिताया उपास्यत्वश्रवणात् पूर्ववर्णादीनां पृथिव्यादिदृष्ट्योपासनं गम्यते, यथा विष्णुदृष्ट्या शालग्रामोपास्तिः, तद्वत्। मण्डूकनाम्नो महर्षेः पुत्रः 'माण्डूकेयः'। तस्य च माण्डूकेयस्य संहितायां वायुदृष्टि-रित्येतन्मतं मत्तुनाम्नः कस्यचिन्महर्षेः पुत्रः 'मात्तव्यः', स च 'अस्य' उपासनस्य, सम्बन्धिन्यां संहितायां आकाशदृष्टिः कर्त्तव्या 'इति', 'विदयाञ्चक्रे' विज्ञातवान्॥

मात्तव्यस्य महर्षेरभिप्रायं दर्शयति। (२)"स हाविपरिहृतो मेने न मेऽस्य पुत्रेण समगादिति"(२) इति। 'स ह' सोऽपि वायुः, 'अविपरिहृतः' विशेषेण परिहृतो न भवति, वायो-राकाशवर्त्तित्वेन आकाश एवान्तर्भावात्। आकाशस्तु न वाया-वन्तर्भवति। वायुकारणत्वादधिकव्याप्तित्वाच्च। अतः 'अस्य' मण्डूकस्य, 'पुत्रेण', सह 'मे' मम, 'न समगात्' दर्शनं न सङ्गतं, मदीयमतञ्चैवंविधं न भवति। मन्मते वायोरन्तर्भावेन वाय्वा-काशोभयदृष्टिः संहितायां सिध्यति। तन्मते त्वाकाशस्यानन्त-र्भूतत्वाद्वायुमात्रदृष्टिरेव। अतो मन्मतमेव श्रेष्ठं 'इति', 'मेने' निश्चितवान्। ततो वाय्वाकाशयोर्विकल्पेन ध्यानं न भवति, किन्तु वायुध्यानं पूर्वः पक्षः, आकाशस्य ध्यानं सिद्धान्त इत्यर्थः॥

इदानीं मतान्तरानुसारेण तयोस्तुल्यत्वमभिप्रेत्य विकल्पेन

ध्यानं दर्शयति। (४)"समाने वै तत्परिह्वतो मेन इत्यागस्त्यः समानं ह्येतद्भवति वायुश्चाकाशश्च"(४) इति। अगस्त्यस्य पुत्रः 'आगस्त्यः' महर्षिः, इत्थं 'मेने' निश्चितवान्। कथमिति तदुच्यते। 'समाने वै' यदेतद्वायुः संहितेति माण्डूकेयस्य मतं, यच्चाकाशः संहितेति माक्षव्यस्य मतन्ते उभे अपि तुल्यबले एव। वायोराकाशवर्त्तित्वमप्रयोजकं। न हि वस्तूनां स्वभावानुसारेण किञ्चिदुपासनं प्रवर्तते, किन्तु वचनानुसारेण। वचनन्तु वायुः संहितेति पक्षे आकाशः संहितेति पक्षे च समानं। 'तत्' तस्मात् कारणात्, 'परिह्वतः' आकाशपक्षे वायोरन्तर्भावाद्वायुः परित्यक्तः, एव। तथा सति 'वायुश्चाकाशश्च', 'इति', 'एतत्' मतद्वयं, 'समानं', एव, 'भवति'। तस्माद्विकल्पेन संहितायां वाय्वाकाशयोर्दृष्टिः कर्त्तव्येति मुख्यः सिद्धान्तः। पूर्वोत्तरवर्णतत्संहितासु पृथिव्यादिध्यानं यदुक्तं सोऽयमुपासनस्य पूर्वोभागः। वक्ष्यमाणस्तूत्तरो भागः॥

तदुभयं बुद्धिसौकार्याय विभजते। (५)"इत्यधिदैवतमथाध्यात्मम्"(५) इति। 'इति'शब्दः पूर्वोक्तं पृथिवीपूर्वरूपमित्यादिकं परामृशति। तच्च 'अधिदैवतं' पृथिव्यादिकं दैवतमधिकृत्य वर्त्तमानमुपासनं, 'अथ' अनन्तरं, आत्मानं वागादिसङ्घातरूपमधिकृत्य वर्त्तत इति 'अध्यात्म' उपासनं, उच्यत इति शेषः।

तदेतदुपासनं विधत्ते। (६)"वाक् पूर्वरूपं मन उत्तररूपं प्राणः संहितेति शूरवीरो माण्डूकेयः"(६) इति। पूर्ववर्णे 'वाग्दृष्टिरुत्तरवर्णे 'मनोदृष्टिरुभयसंश्लेषणे 'प्राणे दृष्टिः 'इति'

एतन् माण्डूकेयस्य मतं। स च 'माण्डूकेयः' 'शूरवीरः' उपासनायां निरन्तरं प्रवर्त्तमानाः शूरा ये पुरुषास्तैः पुरुषैः बहिः प्रवर्त्तमानानामिन्द्रियाणां जितत्वात् तेषु शूरेषु वीरोऽत्यन्तपराक्रमयुक्तः। उपास्यवस्तुसाक्षात्कारवानित्यर्थः॥

अत्रैव मतान्तरमाह। (७)"अथ हास्य पुत्र आह ज्येष्ठो मनः पूर्वरूपं वागुत्तररूपं मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति तस्मान् मन एव पूर्वरूपं वागुत्तररूपं प्राणस्त्वेव संहितेति"(७) इति। 'अथ' माण्डूकेयोक्त्यनन्तरं, 'अस्य' माण्डूकेयस्य, 'ज्येष्ठः पुत्रः', मनसो वाचश्च पूर्वोक्तविपर्ययं 'आह'। तत्रोपपत्तिञ्चावोचत्। लोके विवक्षुः सर्वपुरुषः इदं वक्ष्यामीत्येवं प्रथमं 'सङ्कल्पयति'। पश्चादुच्चारयति। 'तस्मात्', वस्तुतत्त्वमनुसृत्य पूर्ववर्णे मनोदृष्टिरुत्तरवर्णे वाग्दृष्टिश्च कर्त्तव्या। या तु वर्णयोः 'संहिता', तस्यां पूर्वोक्तः 'प्राण एव', ध्यातव्यो न तु तत्र कश्चिन्मतभेदोऽस्तीत्येवं ज्येष्ठपुत्र उक्तवान्। एवं सति सोपपत्तिकत्वादयमेव सिद्धान्तः 'इति', प्रतिभासते॥

तत्र श्रुतिर्मतद्वयस्य समानत्वमभिप्रेत्य विकल्पमेव सिद्धान्तयति। (८)"समानमेनयोरत्र पितुश्च पुत्रस्य च"(८) इति। न ह्युपासनं वस्तुतत्त्वमपेक्षते। किन्तर्हि यथावचनमनुष्ठेयत्वमिति न्यायः पूर्वमेवोक्तः। तस्माद्यः पिता माण्डूकेयः यश्च तदीयो ज्येष्ठः पुत्रः 'एनयोः' उभयोः, मतं 'समानं'। तस्मान्मनोदृष्टिवाग्दृष्ट्योः पूर्वोत्तरभावित्वं विकल्प्यते॥

अधिदैवतमध्यात्मञ्च यदुपासनमुक्तं तत् प्रशंसति। (९)"स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहितः"(९) इति। यः

पूर्वोक्तपृथिव्यादिध्यानरूपः फलहेतुः 'स एषः', अश्वरथसमानः स च 'प्रष्टिवाहनः' प्रष्ट्योः पार्श्वयोर्युज्यमानौ द्वावश्वौ वाहनं यस्य रथस्य सोऽयं 'प्रष्टिवाहनः' ईषयोर्दीर्घकाष्ठयोर्मध्ये कञ्चित् प्रबलमश्वं संयोज्य तयोरीषयोर्बहिरुभयोः पार्श्वयोर्द्वावश्वौ मध्यमाश्वस्योद्दामस्य नियामकौ संयोज्येते। सोऽयमश्वत्रयोपेतो देवानां 'रथः'। तथा च तैत्तिरीया वाजपेयप्रकरणे समामनन्ति। प्रष्टिवाहनं युनक्ति प्रष्टिवाही वै देवरथः। देवरथमेवास्मै युनक्तीति। यथा देवरथोऽश्वत्रयेण युक्तः, एवमयमप्युपास्तिरथः 'मनोवाक्प्राणैस्त्रिभिर्ध्येयविशेषैः संयुक्तः। तस्मात् प्रष्टिवाहनरथवत् सहसा फलप्रापणे समर्थ इत्यर्थः॥

इदानीं फलं दर्शयति। (१०)"स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति"(१०) इति। 'यः' पुमान्, 'एवं' उक्तप्रकारेण, विहितां पृथिवी पूर्वरूपमित्यादिकां देवतारूपां 'संहितां', 'वेद' उपास्ते। यद्यपि विदिधातुः प्रमाणजन्यज्ञानवाची, तथाप्युपास्तिक्रियामन्तरेण फलासम्भवात् मानसत्वक्रियासाम्येन तां क्रियामुपलक्षयति। 'सः' उपासकः, 'प्रजादिभिः 'सन्धीयते' संयोज्यते। 'प्रजा पुत्रपौत्रादिरूपा, 'पशवो गवाश्वादयः। 'यशो धनदानादिकीर्त्तिः। 'ब्रह्मवर्चसं' श्रुताध्ययनसम्पत्तिः, तदेतत् 'सर्वं', चित्रान्यायेन प्रतिबन्धाभावे सति ऐहिकं फलं। चित्रया यजेत पशुकाम इत्यत्र पशुसम्पादकदृष्टप्रयत्नसद्भावे सति पशुप्राप्तिरैहिकी, अन्यथामुष्मिकीति पूर्वमीमांसायां निर्णीतं। तद्वदत्रापि प्रजादिफलमैहिकमामुष्मिकञ्चेत्यनियतं। स्वर्गस्त्वा-

सुषिक्त एव। 'सर्वमायुरेति', इत्यनेनापमृत्युराहित्यं विवक्षितं ॥

उक्तोपासनायाः साम्प्रदायिकत्वं दर्शयति। "(११)इति नु माण्डूकेयानां"(११) इति। 'इति' एवमुक्ता पृथिवी पूर्वरूपमित्याद्युपासना, माण्डूकाख्यस्य महर्षेः पुत्राणां सम्प्रदायाद् भूमावागता ॥ १ ॥

(१)अथ शाकल्यस्य(१) (२)पृथिवी पूर्वरूपं द्यौरुत्तररूपं वृष्टिः सन्धिः पर्जन्यः सन्धाता(२) (३)तदुतापि यत्रैतद्बलवदनूजुगन्त्सन्दधदहोरात्रे वर्षति(३) (४)द्यावापृथिव्यौ समधातामित्युताप्याहुः(४) (५)इतीन्वधिदैवतमथाध्यात्मं(५) (६)पुरुषो ह वा अयं सर्व आण्डं द्वे विदले भवत इत्याहुस्तस्येदमेव पृथिव्या रूपमिदन्दिवस्तत्रायमन्तरेणाकाशो यथासौ द्यावापृथिव्यावन्तरेणाकाशस्तस्मिन्नस्मिन्नाकाशे प्राण आयत्तो यथामुष्मिन्नाकाशे वायुरायत्तो यथामूनि त्रीणि ज्योतींष्येवमिमानि पुरुषे त्रीणि ज्योतींषि(६) (७)यथासौ दिव्यादित्य एवमिदं शिरसि चक्षुर्यथासावन्तरिक्षे विद्युदेवमिदमात्मनि हृदयं यथायमग्निः पृथिव्यामेवमिदमुपस्थे रेतः(७) (८)एवमु ह स्म सर्वलोकमात्मानमनुविधायाहेदमेव पृथिव्या रूपमिदं दिवः(८) (९)स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति(९) ॥ २ ॥

सम्प्रदायान्तरोक्तिपुरःसरमुपासनान्तरं प्रतिजानीते । (१)"अथ शाकल्यस्य"(१) इति । माण्डूकेयाभिमतोपासनकथनानन्तरं 'शाकल्यस्य', अभिमतमुपासनमुच्यत इति शेषः ॥

तत्रोपासनीयस्वरूपं दर्शयति । (२)"पृथिवी पूर्वरूपं द्यौरुत्तररूपं वृष्टिः सन्धिः पर्जन्यः सन्धाता"(२) इति । पूर्वोत्तरवर्णयोर्भूलोकद्युलोकध्यानं 'सन्धिः' वर्णयोः संहिता, तत्र वृष्टिध्यानम् । संहिताहेतुः 'सन्धाता' । तद्यथा, इकोयणचीति सूत्रेण इकारस्य स्थाने यकारं विधाय अच्यकारत्वं निमित्तं तादृशे सन्धिनिमित्ते पर्जन्यध्यानं कर्त्तव्यम् ॥

वृष्टेः सन्धित्वं पर्जन्यस्य सन्धातृत्वं च लोकव्यवहारेण विशदयति । (३)"तदुतापि यत्रैतद्बलवदनूनृह्लन्त्सन्दधदहोरात्रे वर्षति"(३) इति । 'उतापि', इतिनिपातसमुदायः समुच्चयवाची लोकप्रसिद्धिं समुच्चिनोति । 'तत्' तस्मिन्, वृष्टिः सन्धिः पर्जन्यः सन्धाता इत्यस्मिन्नर्थे, लोकप्रसिद्धिरपि विद्यत इत्यर्थः । कासौ लोकप्रसिद्धिरिति साभिधीयते । 'यत्र' यदा, 'एतत्' पर्जन्यस्वरूपं, 'बलवत्' अत्यन्तप्रबलं भूत्वा, 'अनूनृह्लन्' वृष्ट्युपसंहारमकुर्वन्, 'अहोरात्रे सन्दधत्' रात्रावहनि च वृष्टिविच्छेदाभावलक्षणं सन्धानं कुर्वन्, 'वर्षति', तदानीं वृष्टेर्द्युलोकभूलोकसन्धित्वं पर्जन्यस्य सन्धातृत्वं च विस्पष्टं प्रतिभासते इति शेषः ॥

न केवलं प्रतिभासः किन्तु लौकिकानामुक्तिरप्यस्तीति दर्शयति । (४)"द्यावापृथिव्यौ समधातामित्युताप्याहुः"(४) इति । अनया पर्जन्यसम्पादितया निरन्तरतीव्रवृष्ट्या द्यौश्च पृथिवी

च इत्येते उभे सन्धानं परस्परैक्यं प्राप्तवत्यौ 'इति' एवं वाक्यं, 'अपि', लौकिकाः 'आहुः'। अतोऽनुभवाल्लौकिकोक्त्या च दृष्टेः सन्धित्वं पर्जन्यस्य सन्धातृत्वं च प्रसिद्धम् ॥

बुद्धिसौकर्यार्थमुक्तवक्ष्यमाणार्थौ विभज्य दर्शयति। (५)"इतीन्वधिदैवतमथाध्यात्मं"(५) इति। 'इती नु' उक्तप्रकारमेव, पृथिव्यादिकमित्यर्थः ॥

पृथिव्यादिदेवतानामिव स्वशरीरावयवानामपि ध्यानं दर्शयति। (६)"पुरुषो ह वा अयं सर्व आन्दन्वे बिदले भवत इत्याहुस्तस्येदमेव पृथिव्या रूपमिदं दिवस्तत्रायमन्तरेणाकाशो यथासौ द्यावापृथिव्यावन्तरेणाकाशस्तस्मिन्नस्मिन्नाकाशे प्राण आयत्तो यथामुष्मिन्नाकाशे वायुरायत्तो यथामूनि त्रीणि ज्योतींष्येवमिमानि पुरुषे त्रीणि ज्योतींषि"(६) इति। लोके यः 'पुरुषः', विद्यते सः 'सर्वः', अपि 'आन्द' अण्डसदृशं। वर्णविकारश्छान्दसः। यथा ब्रह्माण्डस्याधःकपालमूर्ध्वकपालं चेति 'द्वे विदले' द्वौ परस्परमध उपरितनभागौ, तथा पुरुषेऽपि पादावारभ्याधरोष्ठपर्यन्तमेकं विदलम्। उत्तरोष्ठमारभ्य मूर्द्धपर्यन्तमपरं बिदलम्। यथा भिन्नस्य वेणोर्दलद्वयं, तद्वत् 'बिदले', इति। बकारश्छान्दसः। 'इति' एवमण्डसादृश्यं, अभिज्ञाः पुरुषाः 'आहुः'। 'तस्य' दलद्वयोपेतस्य शरीरस्य, 'इदमेव' अधरोष्ठपर्य्यन्तं, 'पृथिव्याः', स्वरूपं। 'इदं' उत्तरोष्ठादिकं, 'दिवः', स्वरूपं। तयोरधरोत्तरदलयोः 'अन्तरेण' मध्ये, 'अयमाकाशः' अस्माभिर्मुखे दृश्यमानं छिद्रं, वर्त्तते। 'यथा', द्यावापृथिव्योर्मध्ये 'आकाशः', तद्वत्। 'तस्मिन्नस्मिन्' पूर्वोक्त एव दृश्य-

माने मुखच्छिद्रे, 'प्राणः', आश्रितः। 'यथा', वाह्ये प्रसिद्धाकाशे', 'वायुः', आश्रितस्तद्वत्। 'यथा', च वाह्ये 'ज्योतिस्त्रयं, एवं शरीरेऽपि ज्योतिस्त्रयमस्ति। अनेन प्रकारेण शरीरस्याधरोत्तरभागौ पृथिवीरूपेण द्युलोकरूपेण च ध्यातव्यौ। वायुश्च प्राणरूपेण ध्येयः। यज्ज्योतिस्त्रयञ्च वहिर्वदन्तरमपि ध्येयमित्यर्थः॥

तच्च त्रयं विभज्य दर्शयति। (७)"यथासौ दिव्यादित्य एवमिदं शिरसि चक्षुर्यथासावन्तरिक्षे विद्युदेवमिदमात्मनि हृदयं यथायमग्निः पृथिव्यामेवमिदमुपस्थे रेतः"(७) इति। लोकत्रयगतादित्यविद्युदग्निवत् 'चक्षुर्हृदयरेतांसि द्रष्टव्यानि॥

आध्यात्मिकमुपासनं प्रतिपाद्योपसंहरति। (८)"एवमु ह स्म सर्वलोकमात्मानमनुविधायाहेदमेव पृथिव्या रूपमिदन्दिवः"(८) इति। उक्तेनैव प्रकारेण लोकत्रयसदृशं पुरुषशरीरमनुक्रमेण सम्पाद्य 'इदमेव' अधरोष्ठपर्य्यन्तं, 'पृथिव्याः', स्वरूपं, 'इदं' तु उत्तरोष्ठादिकं, 'दिवः', स्वरूपं इत्येवं शाकल्यः 'आह'॥

उपासनस्य फलं दर्शयति। (९)"स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति"(९) इति। पूर्ववद्व्याख्येयं॥ २॥

(१)अथातो निर्भुजप्रवादाः(१)(२)पृथिव्यायतनन्निर्भुजं दिव्यायतनं प्रतृण्णमन्तरिक्षायतनमुभयमन्तरेण(२) (३)अथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेदच्योष्टावराभ्यां स्थानाभ्यामित्येनं ब्रूयादथ यद्येनं प्रतृण्णं ब्रुवन्तमुपवदेदच्योष्टा उत्तराभ्यां स्थानाभ्यामित्येनं ब्रूयाद्यस्त्वेवोभयमन्तरेणाह

तस्य नास्त्यपवादः(३) (४)यद्धि सन्धिं विवर्त्तयति तन्निर्भुजस्य रूपमथ यच्छुद्धे अक्षरे अभिव्याहरति तत्प्रतृण्णस्याग्र उ एवोभयमन्तरेणोभयं व्याप्तं भवति(४) (५)अन्नाद्यकामो निर्भुजं ब्रूयात् स्वर्गकामः प्रतृण्णमुभयकाम उभयमन्तरेण(५) (६)अथ यद्येनं निर्भुजं ब्रुवन्तं पर उपवदेत् पृथिवीं देवतामारः पृथिवी त्वा देवता रिष्यतीत्येनं ब्रूयादथ यद्येनं प्रतृण्णं ब्रुवन्तं पर उपवदेद्दिवं देवतामारो द्यौस्त्वा देवता रिष्यतीत्येनं ब्रूयादथ यद्येनमुभयमन्तरेण ब्रुवन्तं पर उपवदेदन्तरीक्षं देवतामारोऽन्तरिक्षं त्वा देवता रिष्यतीत्येनं ब्रूयात्(६) (७)यथा तु कथा च ब्रुवन्वाब्रुवन्तं वा ब्रूयादभ्याशमेव यत्तथा स्यात्(७) (८)न त्वेवान्यत् कुशलाद्ब्राह्मणं ब्रूयात्(८)(९)अतिद्युम्न एव ब्राह्मणं ब्रूयात्(९) (१०)नातिद्युम्नं च न ब्राह्मणं ब्रूयान्नमो अस्तु ब्राह्मणेभ्य इति ह स्माह शूरवीरो माण्डूकेयः(१०) ॥ ३ ॥

ऐतरेयारण्यकभाष्यम् ।

उपासनान्तरं प्रतिजानीते । (१)"अथातो निर्भुजप्रवादाः"(१) 'अथ' केवलसंहितोपासनोक्त्यनन्तरं, यतः पाठकानां संहितापाठादनन्तरं पदक्रमौ पठ्यमानौ बुद्धिस्थौ 'अतः' कारणात्, 'निर्भुजप्रवादाः' संहितोपासका महर्षयः, संहितायाः

पदस्य च क्रमस्य च सहोपासनमाहुरिति शेषः। 'निर्भुज'शब्दः संहितावाचीत्यभिधीयते, तं निर्भुजं प्रकर्षेण वदन्ति ध्येयदेवतासहितं कथयन्तीति 'निर्भुजप्रवादाः'॥

उपास्यवस्तुनः स्वरूपं दर्शयति। (२)"पृथिव्यायतनं निर्भुजं दिव्यायतनं प्रतृण्णमन्तरिक्षायतनमुभयमन्तरेण"(२) इति। यथा 'निर्भुज'शब्दः संहितावाचीत्यभिधास्यते, तथा 'प्रतृण्ण'शब्दः पदवाची। 'उभयमन्तरेण', इत्यनेन क्रमो विवक्ष्यत इत्यप्यभिधास्यते। तत्र यत् 'निर्भुजं' संहितारूपं, तत् 'पृथिव्यायतनं' पृथिवीमाश्रित्य वर्त्तते, पृथिवीरूपत्वेन ध्यायेदित्यर्थः। तथा पदस्य द्युलोकरूपत्वं क्रमस्यान्तरिक्षलोकरूपत्वं च ध्यायेत्॥

यथोक्तपृथिव्यादिरूपनिर्भुजादिध्यानं प्रशंसितुमुपासकस्य सामर्थ्यं दर्शयति। (३)"अथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेदच्योष्टावराभ्यां स्थानाभ्यामित्येनं ब्रूयादथ यद्येनं प्रतृण्णं ब्रुवन्तमुपवदेदच्योष्टा उत्तराभ्यां स्थानाभ्यामित्येनं ब्रूयाद्यस्त्वेवोभयमन्तरेणाह तस्य नास्त्युपवादः"(३) इति। 'अथ' उपासनानन्तरं, 'निर्भुजं ब्रुवन्तं' संहितामधीयमानं, 'एनं' उपासकं, 'यदि', अन्यः कश्चित् 'उपवदेत्' उपासकेन पठ्यमानायां संहितायां स्वरवर्णादिवैकल्यदोषमुद्भावयेत्, तदानीं 'एनं' दोषोद्भावकं, उपासक एवं 'ब्रूयात्', हे उपवादिन् 'अवराभ्यां' अधोवर्त्तिभ्यां, 'स्थानाभ्यां' पृथिव्यन्तरिक्षलोकाभ्यां, 'अच्योष्ट' त्वं प्रच्युतोऽसि, 'इति' युक्तं चैतदुपासकस्य वचनं, संहितायाः पृथिवीरूपध्यानेन सर्वदोषपरिहारात्। अतो निर्दोषायां संहितायां दोषमुद्भावयितुः पृथिवीलोकात्तत्सहभाविनोऽन्तरिक्षलोकाच्च प्रच्युति-

भवति। 'अथ'शब्दः पूर्वोक्तवैलक्षण्यार्थः। संहितायां दोष-मनुक्त्वा 'प्रत्यक्षं ब्रुवन्त'' पदमधीयानं, 'एनं', उपासकं, 'यदि', कश्चित् 'उपवदेत्', अधीयमाने पदे दोषोद्भावनमुपवादः। तदानीं 'एनं' उपवादिनं प्रति, उपासकः 'उत्तराभ्यां स्थानाभ्यां' अन्तरिक्षद्युलोकाभ्यां, 'अच्योष्टा' प्रच्युतोऽसि, 'इति' एवं, 'ब्रूयात्'। 'यः तु' उपासकः, 'उभयमन्तरेण,' 'आह' क्रममधीते, 'तस्य' उपासकस्य, 'उपवादः', 'न', परेणोद्भावनीयः, क्रमविषये दोषो 'नास्ति', एव। संहितायां पदे च भ्रान्तदृष्ट्या दोषः सम्भाव्यते। तथाहि अग्निमीड़ इत्यस्यां संहितायामुत्तरपद-गत ईकारः स्वरित एकारः प्रचयः संहिताकाले। पद-काले तदुभयमनुदात्तम्। तथा सति पदवासनावासितस्य कस्यचिच्छ्रद्धाजड़स्य संहितायां स्वरान्यथात्वभ्रान्तिरुदियात्। तथा संहितावासनावासितस्य श्रद्धाजडस्य पदच्छेदकाले स्वरा-न्यथात्वभ्रमः। क्रमकाले तु नोक्तं भ्रमद्वयमस्ति। द्विविध-स्वरस्य पठ्यमानत्वात्। अग्निमित्यनेन पूर्वपदेन संहिताया-मीड़ इति पदे स्वरितप्रचयौ पठ्यते। पुरोहितमित्यनेनो-त्तरपदेन संहितायामनुदात्तद्वयं पठ्यते। तस्मात् स्वरान्यथा-त्वभ्रमो नोदेति। कथं चिदन्यथात्वेऽपि देवताध्याने न दोषः समाधीयते। तस्मादुपासनं प्रशस्तमित्यर्थः॥

निर्भुजादिशब्दानां विवक्षितार्थे लोकप्रसिद्ध्यभावात् श्रुति-रेव तमर्थं दर्शयति। (४)"यद्धि सन्धिं विवर्त्तयति तन्निर्भुजस्य रूपमथ यच्छुद्धे अक्षरे अभिव्याहरति तत् प्रत्यक्षस्याग्र उ एवोभय-मन्तरेणोभयं व्याप्तं भवति"(४) इति। 'यत्' उच्चारणं, 'सन्धि''

पदयोरुभयोरत्यन्तसन्निकर्षं, 'विवर्त्तयति' विशेषेण सम्पादयति, 'तत्' उच्चारणं, 'निर्भुजशब्दार्थस्य स्वरूपं। निर्दिष्टौ भुजसदृशौ पूर्वोत्तरशब्दौ यस्मिन् संहितारूपे उच्चारणे तदुच्चारणं 'निर्भुजं। 'अथ'शब्दः पूर्ववैलक्षण्यार्थः। 'शुद्धे' विकाररहिते, पूर्वोत्तरे उभे 'अक्षरे', 'अभिव्याहरति' स्पष्टमुच्चारयतीति, यदस्ति, 'तत्', प्रतृण्णशब्दाभिधेयस्य पदच्छेदस्य स्वरूपं। तद्यथा। इषे त्वोर्जे त्वेत्यत्र योऽयमोकारः, सोऽयं संहितास्वरूपः। यदा तु आकारान्तं त्वेति पदं, ऊकारादिकमूर्जं इत्यादि पदमुच्चारयति तदानीमाकार ऊकारश्चेत्युभे 'अक्षरे शुद्धे', भवतः। तदानीं सन्निकर्षरूपायाः संहितायाः विच्छिन्नत्वात्। विच्छेदरूपहिंसावाचिना 'प्रतृण्णशब्देन विच्छिन्नं पदमभिधीयते। यदेतत् 'प्रतृण्णस्वरूपं तदेतत् 'अग्र उ एव' प्रथमभाव्येव। सिद्धे हि पदस्य स्वरूपे पश्चात् संहिता प्रवर्त्तते। संहितायाः सन्धीयमानपदद्वयधर्मत्वेन पदपूर्वकत्वस्यावश्यम्भावात्। येन क्रमेण संहिता पदं चेति 'उभयं व्याप्तं भवति'। सोऽयं क्रम उभयमध्यवर्त्तित्वात् 'उभयमन्तरेण', इत्युच्यते॥

प्रकारान्तरेणोपासनप्रशंसार्थमुपासकस्य काम्यं संहिताद्यध्ययनं विधत्ते। (५)"अन्नाद्यकामो निर्भुजं ब्रूयात् स्वर्गकामः प्रतृण्णमुभयकाम उभयमन्तरेण"(५) इति। संहिताद्यध्ययनैरन्नादिसिद्धिरुपासकस्य भवतीत्युक्ते सति उपासनमेव प्रशस्तं भवति॥

यथोक्तफलविघ्नकारिणं शत्रुं शापेन विनाशयितुं शापरूपं मन्त्रं दर्शयति। (६)"अथ यद्येनं निर्भुजं ब्रुवन्तं पर उपवदेत्

पृथिवीं देवतामारः पृथिवी त्वा देवता रिष्यतीत्येनं ब्रूयादथ यद्येनं प्रत्यस ब्रुवन्तं पर उपवदेद्दिवं देवतामारो द्यौस्त्वा देवता रिष्यतीत्येनं ब्रूयादथ यद्येनमुभयमन्तरेण ब्रुवन्तं पर उपवदेदन्तरिक्षं देवतामारोऽन्तरिक्षं त्वा देवता रिष्यतीत्येनं ब्रूयात्"(६) इति। अयमुपासकोऽन्नाद्यकामः सन् यदा संहितामधीते तदानीं 'परः' शत्रुः, एतस्य फलविघ्नार्थं 'एनं', 'उपवदेत्' अधीयमानायां संहितायां विद्यमानमविद्यमानं वा दोषमुद्भावयेत्। तदानीमुपासकः 'पृथिवी', इत्यादिमन्त्रेण शत्रुं शपेत्। मन्त्रस्य चायमर्थः। हे शत्रो त्वं संहितारूपां 'पृथिवीं देवतां', दूषयितुं 'आरः' प्राप्तवानसि। अतः 'पृथिवी देवता', त्वां 'रिष्यति' हिनस्ति, 'इति' एवं, उत्तरयोरपि पर्याययोर्योज्यं॥

अस्योपासकस्य शत्रुं सामर्थ्यं दर्शयति। (७)"यथा तु कथा च ब्रुवन्वाब्रुवन्तं वा ब्रूयादभ्याशमेव यत्तथा स्यात्"(७) इति। 'ब्रुवन्', इत्येतदपि द्वितीयान्तत्वेन परिणमयितव्यं। 'ब्रुवन्तं, दोषाभिधायिनं, 'अब्रुवन्तं' दोषोक्तिरहितं, 'वा', वैरिणं प्रति 'यथा तु कथाच'येन केनापि प्रकारेण, 'ब्रूयात्' उपासकः शपेत्। तदानीं 'यत्' उपासकेनोक्तं, तत् 'अभ्याशमेव' क्षिप्रमेव, 'तथा स्यात्' तेनैव प्रकारेण शत्रौ पर्यवस्येत्॥

यदा तु शत्रुर्ब्राह्मणस्तदा विशेषं दर्शयति। (८)"न त्वेवान्यत् कुशलाद् ब्राह्मणं ब्रूयात्(८)" इति। दोषोद्भावकः शत्रुर्यदि ब्राह्मणः, तं प्रति 'कुशलादन्यन्नैव ब्रूयात्'। मदीयसंहितादौ दोषोद्भावनं तुभ्यं हितं न भवति। अतो दोषोक्तिं परित्यज्य त्वं सुखेन तिष्ठेत्येवं कुशलं 'ब्रूयात्', देवतारिष्यतीत्येतादृशं शापं न ब्रूयात्॥

क्वचिद् ब्राह्मणेऽपि शापमभ्यनुजानाति । (९)"अतिद्युम्न एव ब्राह्मणं ब्रूयात्"(९) इति । अतिशयितं द्युम्नं धनं 'अति द्युम्नं' तस्मिन् 'एव', विषये विघातकं शत्रु 'ब्राह्मणं', शपेत्, न त्वल्पविषये ॥

इदानीं माण्डूकेयस्य महर्षेर्मतं दर्शयति । (१०)"नातिद्युम्ने च न ब्राह्मणं ब्रूयान्नमो अस्तु ब्राह्मणेभ्य इति ह स्माह शूरवीरो माण्डूकेयः"(१०) इति । 'च न' शब्दोऽप्यर्थः । 'अतिद्युम्ने' अपि महाधनविषयेऽपि, विरोधिनं 'ब्राह्मणं', 'न ब्रूयात्' न शपेत् । किन्तु 'ब्राह्मणेभ्यो नम अस्तु', 'इति' एतावदेव, 'ब्रूयात्', तदेतन्महर्षेर्मतं ॥ ३ ॥

(१)अथातोऽनुव्याहाराः(१) (२)प्राणो वंश इति विद्यात्(२) (३)स य एनं प्राणं वंशमुपवदेच्छक्नुवं चेन्मन्येत प्राणं वंशं समधा३ प्राणं मा वंशं सन्दधतं न शक्नोषीत्याह प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात्(३)(४)अथ चेदशक्नुवन्तं मन्येत प्राणं वंशं समधित्सिषन्तं नाशकः सन्धातुं प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात्(४) (५)यथा तु कथा च ब्रुवन्वाब्रुवन्तं वा ब्रूयादभ्याशमेव यत्तथा स्यान्न त्वेवान्यत् कुशलाद् ब्राह्मणं ब्रूयादतिद्युम्न एव ब्राह्मणं ब्रूयान्नातिद्युम्ने च न ब्राह्मणं ब्रूयान्नमो अस्तु ब्राह्मणेभ्य इति ह स्माह शूरवीरो माण्डूकेयः(५) ॥ ४ ॥

ऐतरेयारण्यकभाष्यम् ।

पुनरप्यन्यदुपासनं प्रतिजानीते । (१)"अथातोऽनुव्याहाराः"(१) इति । 'अथ' निर्भुजादिध्यानकथनानन्तरं, यतो दोषवादिनः शत्रोः शापनन्तरेण स्वफलसिद्धिर्नास्ति, 'अतः' कारणात्, 'अनुव्याहाराः' परकीयदोषोक्तिमनु स्वस्य व्याहाराः शापरूपं वचनं येषां प्राणोपासकानान्ते 'अनुव्याहाराः' महर्षयः । उपासनं प्राहुरिति शेषः ॥

तदुपासनं विधत्ते । (२)"प्राणो वंश इति विद्यात्"(२) इति । यथा लोके 'वंशः' गृहस्य धारकः, एवमयं देहगृहस्य धारको वंशसदृशः 'प्राण'वायुः, संहितास्वरूपमित्येवं ध्यायेत् । अत्र प्रकरणवशात् संहितेति लभ्यते ॥

अस्मिन् प्राणोपासने दोषवादी शत्रुरुपासकेन शप्तव्य इत्येतद्दर्शयति । (३)"स य एनं प्राणं वंशमुपवदेच्छक्नुवच्चेन्मन्येत प्राणं वंशं समधां३ प्राणं त्वा वंशं सन्दधतन्न शक्नोषीत्याह प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात्"(३) इति । 'स यः' ब्राह्मणोऽन्यो वा यः कोऽपि शत्रुः, 'एनं' उपासकं, प्राणवंशध्यानेन तदात्मकं 'उपवदेत्' प्राणं सम्यग् ध्यातुं न शक्नोषीत्येवं दूषयेत् । तदानीमयमुपासको द्विविधः, शक्तोऽशक्तश्च । तयोर्मध्ये स्वयं 'शक्नुवन्', एव अस्मीति 'मन्येत', तदानीं 'प्राणं' इत्यादिना मन्त्रेण 'एनं' शत्रुं, शपेत् । तस्य मन्त्रस्यायमर्थः । अहमुपासको 'वंशसदृशं 'प्राणं', 'समधां' सम्यक् चित्ते धारितवानस्मि, तथा सति प्राणरूपो यो वंशः तं 'वंशं', 'सन्दधतं' सम्यग् ध्यानेन धारयन्तं, मामप्रति 'न शक्नोषि', धारयितुं त्वमिति

भवान् 'आह', तस्मात् कारणाद्वंशस्थानीयः 'प्राणः', त्वां 'हास्य-ति' परित्यक्ष्यति, ततो मरिष्यसीति ॥

अशक्तोपासकस्य शापमन्त्रे पाठान्तरं दर्शयति। (४)"अथ चेदशक्नुवन्तं मन्येत प्राणं वंशं समधिलिप्सन्तं नाशकः सन्धातुं प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात्"(४) इति। यद्ययमुपासको ध्याने शक्तिरहितमात्मानं 'मन्येत', तदानीमनेन मन्त्रेण शपेत्। तस्य मन्त्रस्यायमर्थः। अहमुपासको 'वंशरूपं 'प्राणं', सम्यग्-ध्यानेन धारयितुमिच्छामि तादृशमिच्छन्तं मां प्रति 'सन्धातुं' सम्यग्ध्यानेन धारयितुं, 'नाशकः' न शक्तोषीत्येवं भवानाह। तस्माद्वंशरूपः 'प्राणः', त्वां परित्यक्ष्यति॥

पूर्ववच्चोपासकस्य सामर्थ्यं दर्शयति। (५)"यथा तु कथा च शुश्रुवानशुश्रुवान्त वा ब्रूयादभ्याशमेव यत्तथास्यान्न विवान्यत् कुशला-ब्राह्मणं ब्रूयादहतिशुश्र एव ब्राह्मणं ब्रूयान्नातिश्रुत्ने च न ब्राह्मणं ब्रूयान्नमो अस्तु ब्राह्मणेभ्य इति ह स्माह शूरवीरो माण्डू-केयः"(५) इति। पूर्ववद् व्याख्येयं ॥ ४ ॥

(१)अथ खल्वाहुर्निर्भुजवक्त्राः(१) (२)पूर्वमक्षरं पूर्वरूप-मुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति(२) (३)स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्व-मायुरेति(३) (४)अथ वयं ब्रूमो निर्भुजवक्त्रा इति ह स्माह ह्रस्वो माण्डूकेयः पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण येन सन्धिं विव-

र्त्तयति येन स्वरास्वरं विजानाति येन मात्रामात्रां विभजते सा संहितेति(४) (५)स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति(५) (६)अथ हास्य पुत्र आह मध्यमः प्रातीबोधीपुत्रोऽक्षरे खल्विमे अविकर्षन्ननेकीकुर्वन्यथा वर्णमाह तद्यासौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण सन्धि-विज्ञपनी साम तद्भवति सामैवाहं संहितां मन्य इति(६) (७)तदप्येतदृषिणोक्तं(७) (८)बृहस्पते न परः साम्नो विदुरिति(८) (९)स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्व-मायुरेति(९) ॥ ५ ॥

ऐतरेयारण्यकभाष्यम् ।

उक्तासु वक्ष्यमाणासु च संहितोपासनासु सर्वासु श्रोतु-बुद्धिसमाधानार्थमुपास्यविषयं सम्यक् परिशोधयितुं प्रस्तौति । (१)"अथ खल्वाहुर्निर्भुजवक्त्राः"(१) इति । 'अथ' कासाञ्चित् संहितोपासनानां कथनानन्तरं, निर्भुजशब्दाभिधेया संहिता वक्त्रे मुखे येषां संहितोपासकानां ते महर्षयः 'निर्भुजवक्त्राः', ते च विषयशोधनार्थं वक्ष्यमाणं वाक्यं 'आहुः खलु' ॥

तदीयं वाक्यं दर्शयति । (२)"पूर्वमक्षरं पूर्वरूपमुत्तरमु-त्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति"(२) इति । अस्याः संहितोपनिषदः प्रारम्भे पृथिवी 'पूर्वरूपं', द्यौः

'उत्तररूपं', इत्यादौ 'पूर्वं', इत्यनेन 'पूर्वमक्षरं', विवक्षितं। 'उत्तरं' इत्यनेन उत्तरमक्षरं विवक्षितं, तयोरक्षरयोर्मध्ये 'योऽवकाशः', 'सा', 'संहिता'शब्देन विवक्षिता ॥

एवमुपास्यनिर्णयार्थं पूर्वरूपमित्यादिशब्दान् व्याख्याय प्ररोचनार्थं पूर्वमुक्तं तदुपासनफलमनुस्मरति। (३)"स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति"(३) इति। तदेतत्तत्रैव व्याख्यातं ॥

योऽवकाश इति यदुक्तं तत्र कञ्चिद्विशेषं दर्शयति। (४)"अथ वयं ब्रूमो निर्भुजवक्त्रा इति ह स्माह ह्रस्वो माण्डूकेयः पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण येन सन्धिं विवर्त्तयति येन स्वरास्वरं विजानाति येन मात्रामात्रां विभजते सा संहितेति"(४) इति। 'ह्रस्वः', वामनः स्वल्पदेहः, स च स्वाभिज्ञत्वप्रकटनार्थं 'वयं', इति पूजारूपं बहुवचनं प्रयुङ्क्ते। स चैवं 'आह' 'पूर्वरूपोत्तररूपयोर्यद्व्याख्यातं तत्तादृशमेव। 'अवकाशः', संहितेति यदुक्तं तत्र अस्ति कश्चिद्विशेषः। न केवलमवकाशमात्रं संहिता किन्तु 'येन', अवकाशेन, 'सन्धिं' पूर्वोत्तरयोर्मध्ये सन्निकर्षं, 'विवर्त्तयति' विशेषेण सम्पादयति। 'येन' चावकाशेन, 'स्वरमस्वरञ्च विविच्य 'जानाति'। अग्निमीड इत्यत्रोत्तरपदस्य पदकालवदनुदात्तस्वरो न भवति, किन्तु स्वरितप्रचयौ स्वरौ, इत्येतादृशो विवेकः। 'येन' चावकाशेन, 'मात्रां अमात्रां,' च 'विभजते'। तवेत्तत्सत्यमङ्गिर इत्यत्र पदकाले वकारस्यो-

परि ऋत्विकारो दृश्यते। संहिताकाले 'सा' मात्रा, न भवति, किन्तु एकारो मात्रेत्ययं विभागः। इत्येतैर्विशेषणैर्विशिष्टः 'अवकाशः', 'संहिता', न त्ववकाशमात्रमिति॥

पूर्ववत् फलमनुस्मरति। (५)"स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति"(५) इति। पूर्ववद्व्याख्येयं॥

मतान्तरं दर्शयति। (६)"अथ हास्य पुत्र आह मध्यमः प्रातीबोधीपुत्रोऽक्षरे खल्विमे अविकर्षन्ननेकीकुर्वन्यथावर्णमाह तद्यासौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण सन्धिविज्ञपनी साम तद्भवति सामैवाहं संहितां मन्य इति"(६) इति। 'अस्य' ऋत्विस्य माण्डूकेयस्य, 'मध्यमः', 'पुत्रः', कश्चिदस्ति। तस्य माता 'प्रातीबोधी', तत्पुत्रः', महर्षिः 'इमे', पूर्वोत्तरे 'अक्षरे,' 'अविकर्षन्' परस्परमत्यन्तं विश्लेषमकुर्वन्, 'अनेकीकुर्वन्' अत्यन्तमैक्यमप्यकुर्वन्, 'यथावर्णमाह' तं वर्णमनतिक्रम्योच्चारयति। तवेत् इत्यत्र पूर्वपदान्त्यमकारमुत्तरपदादिमिकारञ्च संहिताकाले यदि पृथगुच्चारयेत्, तदानीमत्यन्तविश्लेषो भवेत्। यदि त्विकारमन्तर्भाव्य केवलमकारमुच्चारयेत्, तदानीमत्यन्तमैकीकरणं भवति। तदुभयं परित्यज्य यथाशास्त्रमेकारमसौ उच्चारयति। 'तत्' तथासति, 'पूर्वरूपोत्तररूपयोर्मध्ये 'यासौ मात्रा' उच्चारणकालविशेषरूपा, 'सन्धिविज्ञपनी' शास्त्रीयसन्धिं विज्ञापयति, 'तत्', 'साम'समत्वं 'भवति'। अतिद्रुतातिविलम्बयोरभावात् 'सामैव' तत्समत्वमेव, 'संहितामहं मन्ये", 'इति', मध्यमपुत्रस्य मतं॥

अस्मिन्नर्थे कञ्चिन्मन्त्रमुदाहरति। (७)"तदप्येतदृषिणोक्तं"(७) इति। स च मन्त्रः संहितायामेवमाम्नातः। मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः। आ देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुरिति*। हे बृहस्पते नोऽस्मान् मन्त्ररूपान् स्तेनेभ्यो विद्याचौर्यपरेभ्यो मादा इत्यध्याहारः। तादृशेभ्यो मन्त्रोपदेशं माकुर्वित्यर्थः। कीदृशा विद्याचौरा इत्याशङ्क्योच्यते। ये शिष्या अभिद्रुहस्पदे सर्वतो गुरुद्रोहस्य स्थाने वर्त्तमाना निरामिणो मायया गुरुमभिमुखीकृत्य कर्त्तव्यव्यवहारे वाह्ये नितरां रमयन्तीति निरामिणः, एतेऽनुकूला इत्येवं गुरोर्भ्रान्तिं जनयन्तीत्यर्थः। ते च स्वहृदये रिपवः शत्रवः सन्तोऽन्नेषु भोग्येषु दृष्टार्थेष्वेव जागृधुरभिकाङ्क्षां कुर्वन्ति। तादृशेभ्यः स्तेनेभ्यो मन्त्रात्मकानस्मान्मादेहीति मन्त्रद्रष्टॄणां वचनमेतत्। तर्हि केभ्यो मन्त्रो दातव्य इति चेत्तदुच्यते। ये श्रद्धालवो विव्रयः सम्भजनकर्त्तारः सन्तो हृदि स्वचित्ते देवानामिन्द्रादीनां यागादिरूपं सम्बन्धमासमन्तादूहते वितर्कयन्ति, सर्वदा यागङ्कर्त्तुं विचारयन्ति, तादृशेभ्यो मन्त्रान्देहीत्यर्थः। ते च साम्नः समत्वदानात्परः श्रेयोहेतुर्नास्तीत्येवं विदुर्जानन्ति। अतस्ते मन्त्रोपदेशयोग्याः। अत्र यथा शिष्याणां व्यवहारे समत्वं प्रशस्तं, एवं संहितायामपि सममात्रोच्चारणं प्रशस्तमित्यर्थः॥

एतस्य मन्त्रस्य प्रदर्शनार्थं चतुर्थपादं पठति। (८)"बृहस्पते न परः साम्नो विदुरिति"(८) इति॥

---

* ऋग्वेदे म०२, सू०२३, ऋ० १६।

पूर्ववत् फलवाक्यमनुस्मारयति । (९)"स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति"(९) इति । पूर्ववद्व्याख्येयं ॥ ५ ॥

ऐतरेयारण्यकभाष्यम् ।

(१)बृहद्रथन्तरयो रूपेण संहिता सन्धीयत इति ताक्ष्य:(१) (२)वाग्वै रथन्तरस्य रूपं प्राणो बृहत उभाभ्यामु खलु संहिता सन्धीयते वाचा च प्राणेन च(२) (३)एतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षयते ताक्ष्य:(३)(४)एतस्यां ह स्म मात्रायां संवत्सरं गा रक्षयते ताक्ष्य:(४) (५)तदप्येतदृषिणोक्तं(५) (६)रथन्तरमाजभारा वसिष्ठो भरद्वाजो बृहदाचक्रे अग्नेरिति(६) (७)स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति(७) (८)वाक् प्राणेन संहितेति कौण्ठरव्य: प्राण: पवमानेन पवमानो विश्वैर्देवैर्विश्वे देवा: स्वर्गेण लोकेन स्वर्गो लोको ब्रह्मणा सैषावरपरा संहिता(८) (९)स यो हैतामवरपरां संहितां वेदैवं हैव स प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सन्धीयते यथैषा संहिता(९) (१०)स यदि परेण वोपस्तुत: स्वेन वार्थेनाभिव्याहरेदभिव्याहार्षं मेत्येव विद्याद्दिवं

संहितागमविदुषां दुर्वानामेवं भविष्यतीति शश्वत्तथा-
स्यात्(१०) (११)स य एवमेतां संहितां वेद सन्धीयते प्रज-
या पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायु-
रेति(११ (१२ वाक् संहितेति पञ्चालचण्डः(१२) १३)वाचा
वै वेदाः सन्धीयन्ते वाचा छन्दांसि वाचा मित्राणि सन्द-
धति वाचा सर्वाणि भूतान्यथो वागेवेदं सर्वमिति(१३)
(१४)तद्यत्रैतदधीते वा भाषते वा वाचि तदा प्राणो
भवति वाक् तदा प्राणं रेलह्यथ यत्र तूष्णीं वा भवति
स्वपिति वा प्राणे तदा वाग् भवति प्राणस्तदा वाचं रेल्हि
तावन्योन्यं रीह्लो वाग्वै माता प्राणः पुत्र(१४) (१५)तद-
प्येतदृषिणोक्त(१५) (१६)एकः सुपर्णः स समुद्रमाविवेश
स इदं विश्वं भुवनं विचष्टे तम्पाकेन मनसापश्यमन्तित-
स्तं माता रेलिह स उ रेलिह मातरमिति(१६) (१७)स य
एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा
ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति(१७)(१८)अथातः
प्रजापतिसंहिता(१८) (१९ जाया पूर्वरूपं पतिरुत्तररूपं
पुत्रः सन्धिः प्रजननं सन्धानं सैषादितिः संहिता(१९)
(२०)अदितिर्हीदं सर्वं यदिदं किञ्च पिता च माता च
पुत्रश्च प्रजननञ्च(२०)(२१)तदप्येतदृषिणोक्तं(२१) (२२)अ-
दितिर्माता स पिता स पुत्र इति(२२) (२३)स य एव-

मेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति सर्वमायुरेति(२३) ॥ ६ ॥

इत्यैतरेयतृतीयारण्यके प्रथमोऽध्यायः समाप्तः ॥

ऐतरेयारण्यकभाष्यम्।

पुनरप्युपासनां वक्तुं प्रस्तौति। (१)"बृहद्रथन्तरयो रूपेण संहिता सन्धीयत इति तारुक्ष्यः"(१) इति। तरुक्षनामकस्य पुत्रः कश्चिन् महर्षिरेवं मन्यते। 'बृहन्नामकं यत् साम, त्वामिद्धि हवामह इत्यस्यामृच्युत्पन्नमस्ति, यच्च 'रथन्तराख्यं' साम, अभि त्वा शूर नोनुम इत्यस्यामृच्युत्पन्नं',* तयोरुभयोः साम्नोः स्वरूपेण' 'संहिता', सम्पद्यते। सामद्वयसम्बन्धित्वेन संहिताध्यानं कर्त्तव्यमित्यर्थः ॥

तमेव विवक्षितं ध्यानप्रकारं दर्शयति। (२)"वाग् वै रथन्तरस्य रूपं प्राणो बृहत उभाभ्यामु खलु संहिता सन्धीयते वाचा च प्राणेन च"(२) इति। अत्र बृहद्रथन्तरशब्दाभ्यां सामगानरूपो वाक्यार्थो न विवक्षितः किन्तर्हि प्रशस्तत्वसाम्येन ताभ्यां शब्दाभ्यां 'वाक्प्राणावुपलक्ष्येते। यथा बृहद्रथन्तरसाम्नो सोमयागप्रकृतिरूपे अग्निष्टोमे पृष्ठस्तोत्रस्य निष्पादके सति प्रशस्तत्वाभिप्रायेण सर्वत्र श्रुतिभिरादृियेते। तथा वाक्प्राणावपि देहव्यवहारनिष्पादकत्वेन प्रशस्तौ। तस्मात् 'वाक्',

* ऋग्वेदसं०७, सू०३२, ऋ० २२।

एव अत्र 'रथन्तरस्य स्वरूपत्वेन विवक्षिता। 'प्राणो बृहत:', स्वरूपत्वेन विवक्षित:। 'वाचा च प्राणेन', इत्येताभ्यामुभाभ्यामेव 'संहिता', सम्पादनीया। वाक्प्राणरूपा संहितेत्येवं ध्यायेदित्यर्थः॥

उक्तसंहिताध्यानस्य गुरुशुश्रूषालभ्यत्वेन प्राशस्त्यं दर्शयति। (३)"एतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षयते तारुक्ष्यः"(३)इति। ये यमुपनिषद्वाक्प्राणरूपसंहिता विद्या'एतस्यां', एव निमित्तभूतायां सत्यामाचार्यप्रसादार्थं लौकिकगोपालवत्तरुक्षस्य पुत्रो निरन्तरं 'संवत्सरं', आचार्यसम्बन्धिनी: 'गा:', रक्षितवान्॥

न चात्र प्रयोजनान्तरमुद्दिश्य गोरक्षायां क्रियमाणायां प्रसङ्गादियं विद्या लभ्येति शङ्कनीयमित्येतद्दर्शयति। (४)"एतस्यां ह स्म मात्रायां संवत्सरं गा रक्षयते तारुक्ष्यः"(४) इति। 'मात्रा'शब्देन प्रयोजनान्तरं निवार्यते। 'एतस्यां मात्रायां' केवलायां वाक्प्राणविद्यायामेव निमित्तभूतायां, गोरक्षा कृता। तस्मादेतावता प्रयासेन लभ्यत्वादतिप्रशस्तेयं विद्येत्यर्थ:॥

वाक्प्राणयोर्बृहद्रथन्तररूपत्वेन प्राशस्त्यमभिप्रेत्य बृहद्रथन्तरप्रतिपादकं मन्त्रद्वयमुदाहरति। (५)"तदप्येतदृषिणोक्तं"(५) इति। तदेतन्मन्त्रद्वयं संहितायामेवमाम्नातं। प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत्। धातुर्द्युतानात्सवितुश्च विष्णो रथन्तरमाजभारा वसिष्ठ:'* ॥ अविन्दन्ते अतिहितं

---

* ऋग्वेदे म०१०, सू०१८१, ऋ०१।

यदासीद्यज्ञस्य धाम परमङ्गुहा यत्। धातुर्द्युतानात्सवितुश्च विष्णोर्भरद्वाजो बृहदा चक्रे अग्नेः* ॥ तदेतन्मन्त्रद्वयं प्रवर्ग्यादिविशिष्टसूक्ते समाम्नातं। आनुष्टुभस्यानुष्टुप्छन्दोयुक्तैर्मन्त्रैः संस्कृतस्य यस्य प्रवर्ग्यहविषो नाम धर्म इत्यादिकं प्रथादयो जानन्तीति शेषः। प्रथसप्रथनामकावुभौ ऋषी। चकारावनुक्तमहर्षिसमुच्चयार्थौ। ते सर्वेऽपि यस्य हविषः प्रसिद्धस्य नाम जानन्ति। यत्र प्रवर्ग्यार्थं द्रव्यं हविषोऽपि हविर्भवति, उत्तमं हविरित्यर्थः। यथा राज्ञोऽपि राजेत्यत्र उत्तमत्वमुक्तं भवति, तद्वत्। तादृशं हविः स्तोतुं वसिष्ठाख्यो महर्षी रथन्तराख्यं साम आजभार आहृतवान्। तेन साम्ना तस्य हविषस्तुतिरपि किं निमित्तेत्याशङ्क्य धात्रादिदेवतानिमित्तेत्युच्यते। धात्रादिशब्देषु चतुर्ष्वपि निमित्तार्थे पञ्चमी। धात्रादीनां परितोषाय तद्धविस्तुतिरित्यर्थः। ते प्रथादयो महर्षयः प्रवर्ग्यरूपं हविरतिहितं धात्रादिदेवेभ्योऽतिशयेनोपयुक्तमित्यविन्दन् लब्धवन्तो ज्ञातवन्त इत्यर्थः। यद्धविर्यज्ञस्य सोमयागस्य धाम स्थानमासीत्। सति हि प्रवर्ग्ये सोमयागस्तेजस्वीव भासते, तस्मादस्य हविषो धामत्वं। तच्च यद्धविः परमङ्गुहा अत्यन्तङ्गोप्यं यज्ञस्य शिरोरूपत्वात्। तथाचान्यत्र श्रूयते। शिरो वा एतद्यज्ञस्य यत् प्रवर्ग्य इति। अग्निसहितानां धात्रादीनां परितोषं निमित्तीकृत्य तद्धविः स्तोतुं भरद्वाजाख्यो महर्षिर्बृहदाख्यं साम आचक्रे आनीतवान्। सर्वेषु सोमयागेषु प्रशस्तं यत् प्रवर्ग्यं हविस्तादृशं हविः स्तोतुं वसिष्ठभरद्वाजौ महता प्रयासेन रथन्तरं बृहच्च

* ऋग्वेदसं०१०, सू०१८१, ऋ०२।

सम्पादितवन्तौ। तदुभयसामरूपत्वेन प्रशस्तौ वाक्प्राणौ तस्माद्वाक्प्राणरूपत्वेन संहिताया ध्यानमुत्तममिति मन्त्रद्वयोदाहरणस्य तात्पर्यार्थः॥

तस्यैतस्य मन्त्रद्वयस्य प्रतीकत्वेनचतुर्थपादौ पठति।(६)"रथन्तरमाजभारा वसिष्ठो भरद्वाजो बृहदाचक्रे अग्नेरिति"(६) इति॥

उपासनस्य फलं दर्शयति। (७)"स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति"(७) इति। पूर्ववद्व्याख्येयं॥

पुनरपि गुणान्तरविशिष्टत्वेन वाक्प्राणरूपायाः संहिताया उपासनान्तरं विधत्ते। (८)"वाक् प्राणेन संहितेति कौण्ठरव्यः प्राणः पवमानेन पवमानो विश्वैर्देवैर्विश्वे देवाः स्वर्गेण लोकेन स्वर्गो लोको ब्रह्मणा सैषावरपरा संहिता"(८) इति। कुण्ठरवस्य पुत्रो महर्षिः संहितोपासनामेवमुवाच। या इयं वागस्ति, सा 'वाक्', 'प्राणेन', 'संहिता' संयुक्ता। वाचः प्राणेन प्रेर्यमाणत्वात्। स च 'प्राणः' देहमध्यवर्ती, 'पवमानेन' बाह्यवायुना, 'संहितः। बाह्यवायोः प्राणानुग्राहकत्वात्। स च 'पवमानः' बाह्यवायुः, 'विश्वैर्देवैः', 'संहितः। सर्वेषां देवानां वाय्वधीनक्रियोपेतत्वात्। ते च 'विश्वे देवाः', 'स्वर्गेण लोकेन', 'संहिताः। तल्लोकनिवासित्वात्। स च 'स्वर्गो लोकः', 'ब्रह्मणा' वेदेन, 'संहितः। वेदोक्तमार्गानुष्ठानलभ्यत्वात्। 'सैषा' वागादिका ब्रह्मान्ता, 'संहिता', उपासकैः 'अवरपरा', इत्युच्यते। अवरैः पूर्वपूर्वमभिहितैः परैरुत्तरोत्तरमभिहितैश्च पदार्थैर्युक्तत्वात्। एवंरूपा संहिता ध्यातव्येत्यर्थः॥



तस्य ध्यानस्य फलं दर्शयति। (८)"स यो हैतामवरपरां संहितां वेदैवं हैव स प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सन्धीयते यथैषा संहिता"(८) इति। 'एषा' ध्यातव्यत्वेनोक्ता, 'संहिता', 'यथा', बहुविधपदार्थपरम्परायेता। एवमेव 'सः' उपासकः, 'प्रजा'दिपरम्परया संयुज्यते॥

यथोक्तपरम्परारहितेष्युपासने प्रजादिफलं समानमित्याशङ्क्यात्र विशेषं दर्शयति। (१०)"स यदि परेण वोपस्तुतः स्वेन वार्थेनाभिव्याहरेदभिव्याहार्षन्नेव विद्याद्दिवं संहितागमद्विदुषां देवानामेवं भविष्यतीति शश्वत्तथा स्यात्"(१०) इति। 'सः'उपासकः, 'यदि' कदाचित्, 'परकीयप्रयोजनेन 'वा','स्वकीयप्रयोजनेन 'वा', 'उपस्तुतः' प्रेरितः सन्, 'अभिव्याहरेत्' संहितां पठेत्, तदानीं 'अभिव्याहार्षन्नेव' संहितां पठितुमिच्छन्नेव, 'विद्यात्' एवं मनसा सङ्कल्पयेत्। कथमिति तदुच्यते। इत्थं मयोपास्यमाना 'संहिता', 'दिवमगमत्' द्युलोकपर्यन्तं पदार्थजातं प्राप्तवती। विश्वे देवाः स्वर्गेण लोकेन स्वर्गो लोको ब्रह्मणेत्येवमुक्तत्वात्। तस्मात् कारणात् 'विदुषां' संहितोपासकानां, अत एव 'देवानां' देवतारूपाणामेतेषां पुरुषाणां, 'एवं भविष्यति' ऐहिकमामुष्मिकं वापेक्षितं श्रेयः सर्वथा भविष्यतीत्येवं मनसा सङ्कल्पिते सति, 'शश्वत्तथा स्यात्' अवश्यं तत्फलं सिध्येत्॥

एवं सत्यस्या उपासनायाः सङ्कल्पाधीनमिदमेव फलं न तु पूर्वोक्तं प्रजादिकमित्याशङ्क्य तदुभयसमुच्चयमभिप्रेत्य पूर्वोक्तमेव पुनः पठति। (११)"स य एवमेतां संहितां वेद सन्धीयते

प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति"(११)इति ॥

केवलवाग्रूपेण संहितायां उपासनं विधत्ते। (१२)"वाक् संहितेति पञ्चालचण्डः"(१२) इति। 'पञ्चालाख्ये देशे समुत्पन्नः 'चण्डः' तेजस्वी, तन्नामको वा कश्चिन्महर्षिः, 'वाग्रूपेण', 'संहिता', ध्यातव्या 'इति', आह ॥

तदेतत् संहितायाः वाग्रूपत्वं स एव महर्षिरुपपादयति। (१३)"वाचा वै वेदाः सन्धीयन्ते वाचा छन्दांसि वाचा मित्राणि सन्दधति वाचा सर्वाणि भूतान्यथो वागेवेदं सर्वमिति"(१३) इति। 'वेदाः', सर्वेऽपि 'वाचा', एव, 'सन्धीयन्ते' पठ्यन्ते। 'छन्दांसि' गायत्र्यादीन्यपि, 'वाचा' प्रयुज्यन्ते। 'मित्राणि' स्निग्धाःपुरुषाः, 'वाचा' प्रियोक्त्या,'सन्दधति' संयुक्ता भवन्ति। न केवलं मित्राणि किन्तु सर्वेऽपि प्राणिनः प्रियोक्त्या स्निग्धा भवन्ति। अपि च 'वागेव','इदं सर्वं" ऐहिकमामुष्मिकं फलजातं, सम्पादयति। राजसेवादौ प्रियभाषणेन धनलाभात्, मन्त्रजपादिना स्वर्गादिसिद्धेश्च ॥

ननु वाचः प्राणप्रेरितत्वात्प्राणध्यानमेव प्रशस्तमित्याशङ्क्य वस्तुतत्त्वविचारेण तथात्वेऽपि संहितायां वाचः प्रत्यासत्तिमन्वयव्यतिरेकाभ्यां दर्शयति। (१४)"तद्यत्रैतदधीते वा भाषते वा वाचि तदा प्राणो भवति वाक् तदा प्राणं रेढ्यथ यत्र तूष्णीं वा भवति स्वपिति वा प्राणे तदा वाग् भवति प्राणस्तदा वाचं रेढि तावन्योन्यं रीढो वाग्वै माता प्राणः पुत्रः"(१४) इति। 'तत्' तस्यां वाक्संहितायां, इयमुपपत्तिरुच्यत इति शेषः।

'यत्र' यदा, पुमान् 'एतत्' वेदवाक्यं, 'वा', 'अधीते', लौकिकीं 'वा', भाषां कथयति, तदानीं 'प्राणः', 'वाचि', अन्तर्भूतः 'भवति'। वाच एव व्यापार उच्चारणलक्षणो दृश्यते। न तूच्छ्वासनिःश्वासरूपः प्राणव्यापारः। अतस्तदानीमियं 'वाक्', 'प्राणं', 'रेळ्हि' ग्रसति। एतावता संहितापाठकाले वाग्व्यापाररूपोऽन्वयोऽभिहितः। 'अथ'शब्देन वैलक्षण्यवाचिना व्यतिरेक उपक्रम्यते। 'यत्र' यदा, 'तूष्णीं वा भवति' वाग्व्यापारं परित्यज्य मौनी सन्नवतिष्ठते। चक्षुरादिव्यापारमपि परित्यज्य 'स्वापं 'वा', प्राप्नोति तदानीमियं 'वाक्', 'प्राणे', अन्तर्भवति', वाग्व्यापारो न दृश्यते। प्राणव्यापारस्तु दृश्यते। तस्मात्तदानीं 'प्राणो वाचं', 'रेळ्हि' ग्रसति। न च तूष्णीम्भावे स्वापे वा संहिता पाठोऽनुगच्छति। तथा सति यत्र वाग्व्यापारो नास्ति तत्र संहिता नास्तीत्येवं व्यतिरेकः प्रदर्शितो भवति। 'ता' एतौ वाक्प्राणौ, 'अन्योन्यं', 'रेळ्हः' कालभेदेन ग्रसतः, यद्यपि, तथापि 'वाक्', एव 'माता', 'प्राणः पुत्रः', तस्माद्वाग्ध्यानं प्रशस्तमित्यर्थः॥

वाचो मातृत्वे प्राणस्य पुत्रत्वे च संवादकं मन्त्रमुदाहरति। (१५)"तदप्येतदृषिणोक्तं"(१५) इति॥

तमेतं मन्त्रं पठति। (१६)"एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे। तं पाकेन मनसापश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरमिति*"(१६) इति। योऽयं

* ऋग्वेदे म०१०, सू०११४, ऋ० ४।

'एकः' प्राणवायुः, 'सुपर्णः' पक्षिवदम्बराधारसञ्चारी, 'सः' प्राणवायुः, वाह्यवायुरूपेण 'समुद्रं' समुद्रवद्विस्तृतमन्तरिक्षं, 'आविवेश' प्रविष्टवान् । 'सः' प्राणदेवः,'इदं विश्वं भुवनं' सर्वमपि लोकं, 'विचष्टे' विशेषेण ख्यापयति । सति हि प्राणे जीवन्तः पुरुषाः लोकं विख्यातं कुर्वन्ति, न तु प्राणरहिता मृताः । 'तं' तादृशं प्राणदेवं, उपासकः 'पाकेन मनसा' परिपक्केन ज्ञानेन, 'अन्तितः' अन्तिके स्वहृदये, 'अपश्यं' दृष्टवानस्मि । केन प्रकारेण तद्दर्शनमिति तदुच्यते । 'तं' प्राणं, 'माता', 'रेढ़ि' अध्ययनकाले लौकिकभाषाकाले च वाक् प्राणं ग्रसति । 'स उ' सोऽपि प्राणः, 'मातरं रेढ़ि' तूष्णीम्भावकाले स्वापकाले च वाचं ग्रसति । 'इति'शब्दो मन्त्रसमाप्त्यर्थः ॥

उपास्तिफलं दर्शयति । (१७)"स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति"(१७) इति ॥

उपासनान्तरं प्रतिजानीते । (१८)"अथातः प्रजापतिसंहिता"(१८) इति । 'अथ' पञ्चालचण्डकौण्ठरव्यादिमहर्षिप्रणीतसंहिताध्यानकथनानन्तरं, यतः 'प्रजापतिप्रणीत'संहिता', सा तत्स्वकुटुम्बविषयत्वात् प्रशस्ता । 'अतः' कारणात्, साभिधीयते ॥

तामेतां संहितां दर्शयति । (१९)"जाया पूर्वरूपं पतिरुत्तररूपं पुत्रः सन्धिः प्रजननं सन्धानं सैषादितिः संहिता"(१९) इति । सम्भोगकालेऽधोवर्त्तित्वात् 'जायायाः 'पूर्ववर्णरूपत्वं । उत्तरदेशवर्त्तित्वात् 'पत्युः 'उत्तरवर्णरूपत्वं । उभयमेलनजत्वात् 'पुत्रः सन्धिः' । 'प्रजननं' पुत्रोत्पादनं, 'सन्धानं' संहिताया निमित्तं ।

इको यणचीत्यादाविक्परत्वं यथा सन्धिकार्यनिमित्तं, तद्वत्। येयं ध्यातव्य 'संहिता', उक्ता 'सैषा', 'अदितिः' 'अखण्डनीया॥

जायापतिपुत्रतदुपयुक्तव्यापारैः कृत्स्नसंसारधर्मस्य पूरितत्वात्तमेतमर्थं विस्पष्टं दर्शयति। (२०)"अदितिर्हीदं सर्वं यदिदं किञ्च पिता च माता च पुत्रश्च प्रजननञ्च"(२०) इति। पित्रादिकमपेक्षितं लोके 'यत्', 'किञ्चिदस्ति, तत् 'इदं सर्वं', 'अदितिर्हि' अखण्डनं, अन्यूनत्वमित्यर्थः। यथेयं संहिता 'पित्रादिभिरपेक्षितैः पूर्णत्वात् 'अदितिः'॥

एवमदितिनामयुक्ता देवमाता सर्वदेवपूर्णत्वेन साम्येन अदितिदेवताप्रतिपादकं मन्त्रं प्रकृतसंहिताप्रशंसार्थमुदाहरति। (२१)"तदप्येतदृषिणोक्तं"(२१) इति। स च मन्त्रः संहितायामेवमाम्नातः। अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वं * इति। द्युलोकाद्यभिमानिदेवतानां सर्वासामदितिकार्यत्वे सति कारणव्यतिरेकेण कार्याभावात्। अदितिः सर्वात्मकत्वं युक्तं। गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येते पञ्च जनाः। यद्वा निषादपञ्चमा ब्राह्मणादिवर्णाः पञ्च जनाः। किञ्च यज्जातं पूर्वमुत्पन्नं यच्च जनित्वमितःपरं जनयितव्यं तत्सर्वमदितिरेव। तादृगदितिदेवतानामसाम्यादियं संहितापि प्रशस्तेत्यर्थः॥

---

* ऋग्वेदे म०१, सू०१८९, ऋ०१०।

एतस्य मन्त्रस्य प्रतीकत्वेन द्वितीयपादं पठति। (२२)"अदितिर्माता स पिता स पुत्र इति"(२२) इति॥

उपासनस्य फलं दर्शयति। (२३)"स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति सर्वमायुरेति"(२३) इति। अभ्यासोऽध्यायसमाप्त्यर्थः॥ ६॥

इति सायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयारण्यके तृतीयारण्यके प्रथमोऽध्यायः॥

---

## अथ द्वितीयोऽध्यायः।

(१)प्राणो वंश इति स्थविरः शाकल्यस्तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताःस्युरेवमस्मिन् प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितः(१) (२)तस्यैतस्यात्मनः प्राण ऊष्मरूपमस्थीनि स्पर्शरूपं मज्जानः स्वररूपं मांसं लोहितमित्येतदन्यच्चतुर्थमन्तस्थारूपमिति ह स्माह ह्रस्वो माण्डूकेयः(२) (३)त्रयं त्वेव न एतत् प्रोक्तं(३) (४)तस्यैतस्य त्रयस्याष्टां मज्ञां पर्वणामिति त्रीणीतः षष्टि शतानि त्रीणीतस्तानि सप्तविंशतिशतानि

भवन्ति सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः स एषोऽहःसम्मानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा(४) (५)स य एवमेतमहःसम्मानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाक्षां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान् भवति सर्वमायुरेति(५) ॥ १ ॥

ऐतरेयारण्यकभाष्यम् ।

प्रथमाध्याये संहितापदक्रमाणां नानाविधध्यानमुक्तं द्वितीयेऽक्षरादिबहुविधध्यानान्युच्यन्ते। तत्रादौ तावत्सिंहावलोकितन्यायेनाथातोऽनुव्याहाराः प्राणो वंश इति विद्यादिति यदुक्तं तदेतदनूद्योपपादयति । (१)"प्राणो वंश इति स्थविरः शाकल्यस्तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमस्मिन् प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितः"(१) इति। शकलस्य पुत्रः 'शाकल्यः', स तु बालोऽपि कश्चिदस्तीति 'स्थविर'शब्देन विशेष्यते। तेन प्रोक्तं प्राणस्य वंशत्वध्यानं साम्यसद्भावादुपपद्यते। यथा लोके 'शालाया आधारभूते स्तम्भाग्रेषु दण्डायमानत्वेन स्थापिते प्रौढे 'वंशे', स्यूताः 'अन्ये सर्वे वंशाः',सम्यक् प्रतिष्ठिताः,'स्युः''एवमस्मिन्' प्राणवायौ, 'चक्षुरादिकं शरीरान्तमवयवजातं तत्समष्टिरूपः 'सर्व आत्मा', च सम्यगाहितः, ॥

इत्थं वृद्धिस्थं वंशत्वमुपपादितम्। अथाक्षरध्यानं विधत्ते। (२)"तस्यैतस्यात्मनः प्राण ऊष्मरूपमस्थीनि स्पर्शरूपं

मज्जानः स्वररूपं मांसं लोहितमित्येतदन्यच्चतुर्थमक्षराणांरूपमिति ह स्माह ह्रस्वो माण्डूकेयः''(२) इति। योऽयं प्राणो वंश इति स्तुतिप्रसङ्गेन देहेन्द्रियादिसङ्घातरूपः सर्व आत्मोक्तः। 'तस्य एतस्य' सङ्घरूपस्य, 'आत्मनः,' यः 'प्राणः', अस्ति, तदेतत् 'ऊष्मणां स्वरूपं'। शषसहाख्या अक्षरविशेषाः 'ऊष्माणस्तेष्वक्षरविशेषेषु प्राणदृष्टिं कुर्यात्। मातृकापाठे ककारादयो मकारान्ता वर्णाः 'स्पर्शसञ्ज्ञकास्तेष्वस्थिदृष्टिः। अकारादय औकारान्ता वर्णाः स्वरसञ्ज्ञकास्तेषु 'मज्जदृष्टिः। यरलवाश्चत्वारो वर्णाः 'अन्तस्थसञ्ज्ञकास्तेषु 'मांसलोहितरूपं, पूर्वोक्तत्रयापेक्षया 'चतुर्थं', अङ्गं 'अन्यत्', ध्यातव्यम्। तदेतच्चतुर्थाङ्गध्यानं 'माण्डूकेयः', उक्तवान्॥

शाकल्यस्य मते तु न चतुर्थध्यानं, किन्तु पूर्वोक्ताङ्गत्रयध्यानमेवेत्येतद्दर्शयति। (३)"त्रयन्त्वेव न एतत् प्रोक्तं"(३) इति। 'नः' अस्मान् शिष्यान् प्रति, शाकल्येन प्राण ऊष्मरूपमित्यादि 'त्रयमेव, उक्तं', न 'तु', मांसमित्यादिकं चतुर्थं। एवं सति शाकल्यमाण्डूकेयपक्षद्वयानुसारेण ध्याने विकल्पो द्रष्टव्यः॥ तत्र शाकल्यमतमाश्रित्य ध्यातव्यगुणान्तरं विधत्ते। (४)"तस्यैतस्य त्रयस्याक्षरां मज्ञां पर्वणामिति त्रीणीतः षष्टि शतानि त्रीणीतस्तानि सप्तविंशतिशतानि भवन्ति सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः स एषोऽहःसम्मानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा''(४) इति। यान्यस्थीनि स्पर्शेषु ध्येयत्वेनोक्तानि। ये च मज्जानः स्वरेषु ध्येयत्वेनोक्ताः। यानि पर्वाण्यूष्मसु ध्येयत्वेनोक्तानि। यद्यप्यूष्मसु प्राण एव ध्येयत्वेनोक्तो

न तु पर्वाणि, तथापि तस्य प्राणस्य तेषु पर्वसु सञ्चारादभेदविवक्षा द्रष्टव्या। 'अस्थ्नां मज्ज्ञां पर्वणां', 'इति' यदुक्तं, तदेव 'तस्यैतस्य त्रयस्य', इति सङ्गृह्योच्यते। अस्थिमज्जपर्वरूपस्य त्रयस्य शकलविशेषाः पुरुषशरीरस्य 'इतः' दक्षिणपार्श्वे, 'त्रीणि शतानि षष्टिः', च 'भवन्ति'। 'इतः' वामपार्श्वे, 'त्रीणि शतानि षष्टिः', च 'भवन्ति'। 'तानि', मिलित्वा 'सप्त शतानि विंशतिः', च सम्पद्यन्ते। 'संवत्सरस्य', अपि 'अहानि रात्रयश्च मिलित्वा 'विंशत्यधिकसप्तशतसङ्ख्यया गण्यन्ते। तथा सति 'स एषः' पुरुषः, 'अहःसम्मानः' सङ्ख्यया संवत्सरगताहोरात्रपरिमितः। तथा 'चक्षुःश्रोत्रादिभिरुपेतत्वात्तन्मयः 'आत्मा'। तमेतमहःसम्मानत्वादिगुणविशिष्टमात्मानं ध्यायेदित्यर्थः॥

उक्तोपासनस्य फलं दर्शयति। (५)"स य एवमेतमहःसम्मानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाह्नां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान् भवति सर्वमायुरेति"(५) इति। 'अह्नां' अहरभिमानिदेवतानां, 'सायुज्य' तादात्म्यं, स्व'सरूपतां' पृथक्त्वे सति समानरूपत्वं, 'सलोकतां' समानलोकनिवासित्वं, 'अश्नुते' प्राप्नोति। भावनाया अत्यन्तोत्कृष्टत्वे सायुज्यं, मध्यमत्वे सारूप्यं, मन्दत्वे सालोक्यं, इति व्यवस्था द्रष्टव्या। तदेतत् सर्वं आमुष्मिकं फलं। 'पुत्री', इत्यादिकन्त्वैहिकं द्रष्टव्यम्॥ १॥

**(१)अथ कौण्डरव्यः(१) (२)त्रीणि षष्टि शतान्यक्षराणां त्रीणि षष्टि शतान्यूष्मणां त्रीणि षष्टि शतानि सन्धीनां(२)**

(३)यान्यक्षराण्यवोचामाह्नानि तानि यानूष्मणोऽवोचाम रात्रयस्ता यान्त्सन्धीनवोचामाहोरात्राणान्ते सन्धय इत्यधिदैवतं(३) (४)अथाध्यात्मं यान्यक्षराण्यधिदैवतमवोचामास्थीनि तान्यध्यात्मं यानूष्मणोऽधिदैवतमवोचाम मज्जानस्तेऽध्यात्मं(४) (५) एष ह वै सम्प्रतिप्राणो यन्मज्जैतद्रेतो न ह वा ऋते प्राणाद्रेतः सिच्यते यद्वा ऋते प्राणाद्रेतः सिच्येत पूयेन्न सम्भवेत्(५) (६)यान्त्सन्धीनधिदैवतमवोचाम पर्वाणि तान्यध्यात्मं(६) (७)तस्यैतस्य त्रयस्याश्वां मज्ज्ञां पर्वणामिति पञ्चेतश्चत्वारिंशच्छतानि पञ्चेतस्तदशीतिसहस्रं भवत्यशीतिसहस्रं वा अर्कांलिनो बृहतीरहरभिसम्पादयन्ति(७) (८) स एषोऽक्षरसम्मानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा(८) (९)स य एवमेतमक्षरसम्मानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाक्षराणां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान् भवति सर्वमायुरेति(९) ॥ २ ॥

ऐतरेयारण्यकभाष्यम्।

उपासनान्तरं प्रतिजानीते। (१)"अथ कौण्ठरव्यः"(१) इति। कुण्ठरवस्य पुत्रः 'कौण्ठरव्यः', * स च काञ्चिदुपासनां वक्तीतिशेषः ॥

---

* कौण्ठरव्यनामा महर्षिरिति क०, ग० ख।

तामुपासनामाह। (२)"त्रीणि षष्टि शतान्यक्षराणां त्रीणि षष्टि शतान्यूष्मणां त्रीणि षष्टि शतानि सन्धीनां"(२) इति। अकारादयः स्वराः 'अक्षर'शब्देन विवक्षिताः। 'ऊष्म'शब्देन शकारादिवाचकेन सर्वाणि व्यञ्जनानि ककारादीन्युपलक्ष्यन्ते। 'सन्धि'शब्देन स्वराणां व्यञ्जनानां परस्परसंयोगोऽभिधीयते। 'षष्टि', इत्येतदत्र पृथक् पदं। तथा सति स्वराणां 'त्रीणि शतानि', 'षष्टिः', च अधिकेत्युक्तं भवति। एकस्य संवत्सरस्य षष्ठ्युत्तरं शतत्रयं दिवसास्तेषु दिवसेषु उच्चार्यमाणाः स्वरास्तत्सङ्ख्ययैव गण्यन्ते। एवं व्यञ्जनेषु। स्वरव्यञ्जनसन्धिष्वपि योजनीयं। अयं न्यायः पूर्वस्यामुपासनायामपि एकैकपार्श्वगतास्थिमज्जपर्वसु द्रष्टव्यः। तथा सति त्रीण्यतः षष्टि शतानि त्रीणीत इत्येषा सङ्ख्योपपद्यते॥

उपास्यत्वेनाभिहितेषु अक्षरोष्मसन्धिषु अहरादिदृष्टिं विधत्ते। (३)"यान्यक्षराण्यवोचामाहानि तानि यानूष्मणोऽवोचाम रात्रयस्ता यान्त्सन्धीनवोचामाहोरात्राणान्ते सन्धय इत्यधिदैवतं"(३) इति। कालात्मानमहोरात्रं तत्सम्बन्धिरूपं दैवतमधिकृत्य वर्त्तत इति 'अधिदैवतम्'॥

देवतावयवानामहरादीनां दृष्टिर्यथाभिहिता तथा पुरुषशरीरावयवानामस्थ्यादीनां दृष्टिमपि विधत्ते। (४)"अथाध्यात्मं यान्यक्षराण्यधिदैवतमवोचामास्थीनि तान्यध्यात्मं यानूष्मणोऽधिदैवतमवोचाम मज्जानस्तेऽध्यात्मं"(४) इति। 'अथ' देवतावयवानामहरादीनां दृष्टिविधानानन्तरं, 'अध्यात्मं' उपासकशरीरावयवदृष्टिः अपि विधीयते। तत्र स्वरेष्वस्थिदृष्टिर्व्यञ्जनेषु मज्जदृष्टिः कर्त्तव्या॥

तामेतां मज्जदृष्टिं प्रशंसति। (५)"एष ह वै सम्प्रतिप्राणो यन्मज्जैतद्रेतो न ह वा ऋते प्राणाद्रेतः सिच्यते यद्वा ऋते प्राणाद्रेतः सिच्येत पूयेन्न सम्भवेत्"(५) इति। 'मज्जा', इति पदं यदस्ति 'एषः', एव 'सम्प्रतिप्राणः' समीचीनो मुख्यः प्राणवायुः। तत् कथमित्याशङ्क्य तदेव स्पष्टीक्रियते। मज्जकार्य्यभूतं 'एतद्रेतः', उत्पत्स्यमानजन्तुप्राणतादात्म्यं प्राप्य प्राणरूपेण वर्त्तते। अत उत्पादकेन पित्रा ऋतुकाले जनिष्यमाणजन्तोः 'प्राणादृते', गर्भाशये 'रेतो न सिच्यते'। किन्तु तदीयप्राणसहितमेव 'रेतः' सिच्यते। यदि कदाचिदुत्पत्स्यमानजन्तुप्राणादृते केवलं 'रेतः सिच्येत', तदानीं तद्रेतः 'पूयेत्' नश्येत्। 'न' तु पुत्ररूपेण 'सम्भवेत्'। अतः प्राणसहितरेतःकारणभूतं मज्जध्यानं प्रशस्तमित्यर्थः॥

स्वराणां व्यञ्जनानाञ्च सन्धिषु शरीरावयवसन्धिध्यानं विधत्ते। (६)"यान् सन्धीनधिदैवतमवोचाम पर्वाणि तान्यध्यात्मं"(६) इति॥

यथोक्तमस्थ्यादिध्यानं सङ्ख्याद्वारेण प्रशंसति। (७)"तस्यैतस्य त्रयस्याष्टौ मज्ज्ञां पर्वणामिति पञ्चेतश्चत्वारिंशच्छतानि पञ्चेतस्तदशीतिसहस्रं भवत्यशीतिसहस्रं वा अर्किलिनो बृहतीरहरभिसम्पादयन्ति"(७) इति। 'अस्थिमज्जपर्वणां यदेतत् त्रयमस्ति 'तस्यैतस्य त्रयस्य', गणनायां कृतायां 'अशीत्यधिकसहस्रं सम्पद्यते। तद्यथा 'अस्थिमज्जपर्वणां प्रत्येकं षष्ट्यधिकशतत्रये सति त्रीणि शतत्रयाणि मिलित्वा नवशतानि सम्पद्यन्ते। षष्टीनां त्रयं मिलित्वा अशीत्यधिकं शतं भवति। तदेवं 'अशी-

त्युत्तरं 'सहस्रं'। एतच्च शरीरस्य पार्श्वद्वये विभज्य योजनीयं। तथा योजनायां 'इतः' दक्षिणपार्श्वे, 'पञ्च शतानि चत्वारिंशत्', च भवन्ति पुनरपि 'इतः' वामपार्श्वे, 'पञ्च शतानि चत्वारिंशत्', च भवन्ति। एवमशीत्यधिकसहस्रसम्पत्तौ सत्यान्ततत्सङ्ख्योपेतास्थ्यादिमतः पुरुषस्यादित्यरूपत्वं सम्पद्यते। अर्कं लीयन्त इति 'अर्कत्विनः' आदित्यस्य रश्मयः, ते च 'अशीत्यधिकसहस्रं' 'भवति'। अतः पुरुषस्य सङ्ख्यासाम्यादादित्यरूपत्वं। आदित्यरश्मीनां सहस्रसङ्ख्या चाथर्वणिकैराम्नायते। सहस्ररश्मिः शतधा वर्त्तमानः प्राणः प्रजानामुदयत्येष सूर्य इति। तेन च सहस्रेणाशीतिरप्युपलक्ष्यते। किञ्चैता अस्थ्यादिगताः सङ्ख्याः 'बृहतीच्छन्दस्का ऋचः सम्पाद्य महाव्रताख्यं 'अहः', सर्वतः सम्पादयन्ति। तस्मिंश्चाहनि बार्हती तृचाशीतिर्विद्यते ताश्च बृहतीच्छन्दस्का एवमत्र सम्पादनीया। षट्त्रिंशदक्षरा तावदेका बृहती। तथासति षष्ट्युत्तरशतत्रयसङ्ख्यया दश बृहत्यः सम्पद्यन्ते। तस्यां च सङ्ख्यायां त्रिगुणितायां त्रिंशद् बृहत्यः सम्पद्यन्ते। तदेवं बृहतीद्वारेण महाव्रताख्यस्याह्नः सम्पादनाद्यथोक्तसङ्ख्योपेतमस्थ्यादिध्यानं प्रशस्तमित्यर्थः॥

आध्यात्मिकपुरुषध्याने गुणविशेषान्विधत्ते। (८)"स एषोऽक्षरसम्मानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा"(८) इति। योऽयमक्षरोपासकः पुरुषः 'स एषः', अक्षरैः सम्मीयते समानपरिमाणः क्रियत इति 'अक्षरसम्मानः'। स्वरेषु व्यञ्जनेषु तत्सन्धिषु च येयमशीत्यधिकसहस्रसङ्ख्या सेयमस्थिषु मज्जसु पर्वस्वप्यस्ति। तस्मादयमक्षरैः सम्मानः समा-

नपरिमाणः। चक्षुःश्रोत्रादिव्यवहारोऽपि तत्वात् 'चक्षुरादिमयः'। छन्दसामध्ययनात् 'छन्दोमयः'। तादृशः 'आत्मा', अहमित्येवमुपासीत ॥

तदुपासनस्य फलं दर्शयति। (९)"स य एवमेतमक्षरसम्मानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाक्षराणां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान् भवति सर्वमायुरेति"(९) इति। पूर्वोक्ताहःसम्मानफलवद्व्याख्येयं ॥ २ ॥

(१)चत्वारः पुरुषा इति बाध्यः(१) (२)शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति(२) (३)शरीरपुरुष इति यमवोचाम स य एवायं दैहिक आत्मा तस्य योऽयमशरीरः प्रज्ञात्मा स रसः(३) (४)छन्दः पुरुष इति यमवोचामाक्षरसमाम्नाय एव तस्यैतस्याकारो रसः(४) (५)वेदपुरुष इति यमवोचाम येन वेदान्वेद ऋग्वेदं यजुर्वेदं सामवेदं तस्यैतस्य ब्रह्मा रसः(५) (६)तस्माद्ब्रह्माणं ब्रह्मिष्ठं कुर्वीत यो यज्ञस्योल्बणं पश्येत्(६) (७)महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन्नन्यानि भूतान्यैक्या भावयन्नन्यानि तस्यैतस्यासावादित्यो रसः(७) (८)स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात् तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवति(८) (९)तदप्येतदृषिणोक्तं(९) (१०)चित्रं देवानामुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः।

आपा द्यावा पृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुष-श्च(१०) (११)इत्येतामनुविधं संहितां सन्धीयमानां मन्य इति ह स्माह बाध्वः(११) (१२)एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येवं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते(१२) (१३)स एष संवत्सरसम्मानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा(१३) (१४)स य एवमेतं संवत्सरसम्मानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं परस्मै शंसति(१४) ॥ ३ ॥

ऐतरेयारण्यकभाष्यम् ।

उपासनान्तरं विधत्ते। (१)"चत्वारः पुरुषा इति बाध्वः"(१) इति । 'बध्वस्य पुत्रो महर्षिर्वक्ष्यमाणाः 'चत्वारः पुरुषा उपासनीयाः 'इति', मन्यते ॥

तान् पुरुषान्निर्दिशति । (२)"शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति"(२) इति ॥

तत्र प्रथमपुरुषं विवृणोति । (३)"शरीरपुरुष इति यमवोचाम स य एवायन्दैहिक आत्मा तस्य योऽयमशरीरः प्रज्ञात्मा स रसः"(३) इति । बाध्वनामका वयं महर्षयः 'यं' ध्यातव्यं देवं, 'शरीरपुरुष'नाम्ना कथितवन्तः। तं स्पष्टीकुर्म इति शेषः। देह एव 'दैहिकः', स चाहं मनुष्य इति प्रत्ययवेद्यत्वात् 'आत्मा',

तादृशो योऽस्ति अयमेव 'सः' पूर्वोक्तः, 'शरीरपुरुषः', 'तस्य' देह-रूपस्य पुरुषस्य, स्वामित्वेनान्तर्वर्त्तमानः 'योऽयमशरीरः' मांस-शरीररहितः, 'प्रज्ञात्मा' चिद्रूपः पुरुषः, 'सः', अयं 'रसः' शरी-रपुरुषस्य सारः, तदुभयं ध्यायेदिति तात्पर्यार्थः ॥

द्वितीयं विवृणोति । (४)"छन्दःपुरुष इति यमवोचामाक्षर-समाम्नाय एव तस्यैतस्याकारो रसः"(४) इति । अग्निमीडे पुरोहितमित्यत्र श्रूयमाणानां अकारगकारनकारादीनामक्षराणां 'समाम्नायः' सम्यक् पाठः, योऽस्ति, स एव 'छन्दःपुरुष'शब्देन विवक्षितः । 'तस्यैतस्य' छन्दःपुरुषस्य, मध्ये सारोऽयं 'अकारः', वेदितव्यः । तथा च पूर्वमाम्नातं । अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवतीति ॥

तृतीयं विवृणोति । (५)"वेदपुरुष इति यमवोचाम येन वेदान्वेद ऋग्वेदं यजुर्वेदं सामवेदन्तस्यैतस्य ब्रह्मा रसः"(५) इति । लोके वेदवित्पुमान् 'येन' मनसा सावधानेन, 'वेदान्', जानाति । अग्निमीडे इत्यादिरयं 'ऋग्वेदः' तेन हौत्रं कर्त्त-व्यं । इषे त्वोर्जे त्वेत्यादिः 'यजुर्वेदः' तेनाध्वर्यवं कर्त्तव्यं । अग्न आयाहीत्यादिः 'सामवेदः' तेनौद्गात्रं कर्त्तव्यं । इत्येवमृग्वे-दादिज्ञापकं मानसं यदवधानं सोऽयं 'वेदपुरुष'शब्देनोच्यते । 'तस्यैतस्य' वेदपुरुषस्य, 'ब्रह्मा रसः' हिरण्यगर्भोपास्त्या तद्रू-पत्वमभिमन्यमानः पुरुषः सारभूतः ॥

अत्र प्रसङ्गात् होत्रध्वर्यूद्गातृव्यतिरिक्तस्य ब्रह्माख्यस्य चतु-र्थस्यर्त्विजः कञ्चिद्विशेषं विधत्ते । (६)"तस्माद् ब्रह्माणं ब्रह्मिष्ठं कुर्वीत यो यज्ञस्योल्बणं पश्येत्"(६) इति । यस्माद्वेदत्रयाभिज्ञान-

रूपस्य वेदपुरुषस्य हिरण्यगर्भोपासको ब्रह्मा रसः 'तस्मात्' ब्रह्मनामसाम्यात्, यागेऽपि 'ब्रह्माणं' ऋत्विजं, 'ब्रह्मिष्ठ'' अतिशयेन वेदत्रयगतं, 'कुर्वीत'। 'यः' ब्रह्मा, 'यज्ञस्य', सम्बन्धिनं 'उल्बणं' तीव्रगुणं दोषं वा द्रष्टुं समर्थः, तादृशं कुर्वीत ॥

चतुर्थं विवृणोति। (७)"महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन्नन्यानि भूतान्यैक्या भावयन्नन्यानि तस्यैतस्यासावादित्यो रसः"(७) इति। योऽयं 'संवत्सरः' कालात्मा, 'अन्यानि भूतानि' कानिचिद्गतायुष्काणि प्राणिशरीराणि,'ऐक्या प्रध्वंसयन्' स्वस्वकारणेन सहैक्यं यथा प्रतिपद्यन्ते तथा विनाशयन्, 'अन्यानि भावयन्' पुनः अन्यानि कानि चिन्नूतनशरीराणि उत्पादयन्, वर्त्तते। सोऽयं कालात्मा 'महापुरुष'शब्देन विवक्षितः। 'तस्यैतस्य' महापुरुषस्य, 'असौ' मण्डले दृश्यमानः, 'आदित्यः', 'रसः' सारः। यथा लोके वृक्षः स्वनिष्ठेन रसेन पूर्णः शोभते। एवमेते शरीरपुरुषादयः यथोक्तैः रसैः पूर्णाः शोभन्ते ॥

चतुरः पुरुषान् तद्रसांश्च ध्येयत्वेनाभिधायापरं कञ्चिन्मुख्यं गुणं ध्येयत्वेन विधत्ते। (८)"स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात्तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवति"(८)इति। शरीरपुरुषसारत्वेन 'योऽयं', 'प्रज्ञात्मा' जीवः, अभिहितः महापुरुषसारत्वेन 'यः', अयं 'आदित्यः' ईश्वरः, अभिहितः, 'एतत्' उभयमपि, 'एकं', एव अस्ति, 'इति', 'विद्यात्'। साक्षात्कारपर्यन्तमुपासीत, यस्मादुभयोरेकत्वं वास्तवं,'तस्मात्,' लोकेऽपि तत्तं 'पुरुषं', 'प्रति', सम्मुखः सन् 'आदित्यः', अव-

तिष्ठते। तथा च तैत्तिरीया आमनन्ति। असावादित्यः सर्वाः प्रजाः प्रत्युदङ्ङुदेति तस्मात्सर्व एव मन्यन्ते मां प्रत्युदगादिति॥

आदित्यमण्डले स्वशरीरे वस्त्वैक्यसम्पादकं मन्त्रमुदाहरति। (९)"तदप्येतदृषिणोक्तं"(९) इति॥

तमेव मन्त्रं पठति। (१०)"चित्रन्देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावा पृथिवी अन्तरिक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च"(१०)इति*। 'अनीक'शब्दो मुखवाची सैन्यवाची वा। यदेतदादित्यमण्डलं तदेतत् देवतानां मुखं, सर्वव्यवहारहेतुत्वाद् देवानां मध्ये मुख्यमित्यर्थः। सैन्यपक्षे बहुविधरश्मिसमूहरूपमिति व्याख्येयं। तच्च मण्डलं 'चित्रं' चायनीयं पूजनीयं। यद्वा सर्वदिक्षु रश्मिप्रसारणेन 'चित्रं'। 'देवानां' मुखमिति यदुक्तं तदेव'चक्षुरित्यादिना प्रपञ्च्यते। 'मित्रावरुणादीनां 'चक्षुः'स्थानीयमिदं मण्डलं, एतदीयेन हि प्रकाशेन सर्वे देवाः पश्यन्ति। तच्च मण्डलं लोकत्रयं 'आप्राः' सर्वतः पूर्णं सद्वर्त्तते। तन्मण्डलस्थः 'सूर्य्यः', 'जगतः' जङ्गमस्य, 'तस्थुषः' स्थावरस्यापि, प्राणिजातस्य, 'आत्मा', प्रत्यक्षस्वरूपं, इति मन्त्रस्यार्थः॥

यथोक्तपुरुषचतुष्टयोपासकस्य बाध्वस्य वचनमुपसंहरति। (११)"एतामनुविधं संहितां सन्धीयमानां मन्य इति ह स्माह बाध्वः"(११)इति। शरीरपुरुष इत्याद्यनुक्रमेणोक्तां विधां-प्रकारमनुसृत्य इति 'अनुविधं', तथा 'सन्धीयमानां' सम्यक्चित्ते

---

* ऋग्वेदे म०१, सू०११५, ऋ०१।

धार्यमाणां, 'संहितां', 'मन्ये' चिन्तयामि, 'इति' एवं, 'बाध्वः', महर्षिः, उक्तवान् ॥

अध्यात्ममधिदैवतञ्च योऽयमेकः परमात्मा ध्येयत्वेनोक्तस्तस्य प्रशंसार्थं सर्वत्र ध्येयतां दर्शयति। (१२)"एतं ह्येव बह्वृचा। महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामेतन्दिव्येतं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते"(१२)इति। बह्व ऋचो यागप्रयोगार्थं येषां होतॄणां ते होतारो 'बह्वृचाः', ते च यथोक्तमध्यात्माधिदैवतयोरेकमेव सन्तं परमात्मानं 'महत्युक्थे' प्रौढे शस्त्रे, 'मीमांसन्ते' विचारयन्ति, ध्यायन्तीत्यर्थः। 'अध्वर्यवः', तु 'एतं' परमात्मानं, इष्टकाचयनेन निष्पादिते 'अग्नौ', उपासते। 'छन्दोगाः', तु 'महाव्रताख्ये कर्म्मणि 'एतं', उपासते। एवं तत्तद्वेदगतकर्माङ्गेषु तैस्तैरेवमात्मन उपास्यत्वमुक्तं। तथा यागाद्बहिर्भूतेषु पृथिव्यादिषु 'सर्वभूतान्तेषु प्रतीकेषु 'एतमेव' परमात्मानं, तत्तत्फलकामा उपासते। वेदान्ताभिज्ञास्तु 'एतमेव' चिदात्मानं, जगत्कारणं 'ब्रह्म इत्याचक्षते'। तस्मादादित्यमण्डले शरीरे च वर्त्तमानस्यैकस्य परमात्मन उपासनं प्रशस्तमित्यर्थः ॥

तस्य ध्यातव्यान् कांश्चिदन्यान् गुणान् विधत्ते। (१३)"स एष संवत्सरसम्मानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा"(१३) इति। 'संवत्सरनिष्पादकेनादित्येन सहैकत्वेन विचिन्त्यमानत्वात् 'सः' एव ध्येयः पुरुषः, संवत्सररूपकालात्मसदृशः, 'चक्षुर्मयत्वादिकं पूर्ववत्फलमहःसम्मानाक्षरसम्मानयोरिव संवत्सरसम्मानेऽपि उन्नेतव्यम् ॥

अत्र प्रसङ्गादुपासकस्य परकीये यागे शंसनमपवदितुमनुवदति। (१४)"स य एवमेतं संवत्सरसम्मानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं परस्मै शंसति"(१४)इति। ईदृशं 'आत्मानं', विदित्वोपासकोऽपि 'परार्थं' शंसेत्। इत्येषोऽनुवाद उत्तरार्थः ॥ ३ ॥

(१)दुग्धदोहा अस्य वेदा भवन्ति न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमिति(१) (२)तदप्येतदृषिणोक्तं(२) (३)यस्तित्याज सचिविदं सखायन्न तस्य वाच्यपि भागो अस्ति। यदीं शृणोत्यलकं शृणोति न हि प्र वेद सुकृतस्य पन्थामिति(३) (४)न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमित्येतत्तदुक्तं भवति(४) (५)तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयान्न परस्मै महाव्रतेन स्तुवीत न परस्मा एतदहः शंसेत्(५) (६)कामं पित्रे वाचार्याय वा शंसेदात्मन एवास्य तत् कृतं भवति(६) (७)स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम तौ यत्र विहीयेते चन्द्रमा इवादित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति लोहिनी द्यौर्भवति यथा मञ्जिष्ठा व्यस्तः पायुः काककुलायगन्धिकमस्य शिरो वायति सम्परेतोऽस्यात्मा न चिरमिव जीविष्यतीति विद्यात्(७)(८)स यत् करणीयं मन्येत तत् कुर्वीत यदन्ति यच्च दूरक इति सप्त जपेदादित-

प्रत्नस्य रेतस इत्येका यत्र ब्रह्मा पवमानेति षडुदयन्तम-
स्यपरीत्येका(८) (९)अथापि यत्र छिद्र इवादित्यो दृश्यते
रथनाभिरिवाभिख्यायेत छिद्रां वा छायां पश्येत्तदप्ये-
वमेव विद्यात् ९)(१०)अथाप्यादर्शे वोदके वा जिह्मशिरसं
वाशिरसं वात्मानं पश्येद्विपर्यस्ते वा कन्याके जिह्मेन वा
दृश्येयातां तदप्येवमेव विद्यात्(१०) (११)अथाप्यपिधा-
याक्षिणी उपेक्षेत तद्यथा बटरकाणि सम्पतन्ती दृश्यन्ते
तानि यदा न पश्येत्तदप्येवमेव विद्यात्(११) (१२)अथाप्य-
पिधाय कर्णौ उपशृणुयात् स एषो ऽग्नेरिव प्रज्वलतो
यदा न शृणुयात् तदप्येवमेव विद्यात्(१२) (१३)अथापि
यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवाऽमेघे वा विद्युतं
पश्येन्मेघे वा विद्युतं न पश्येन्महामेघे वा मरीचीरिव
पश्येत तदप्येवमेव विद्यात् १३) (१४)अथापि यत्र भूमिं
ज्वलन्तीमिव पश्येत तदप्येवमेव विद्यात्(१४) (१५)इति
प्रत्यक्षदर्शनानि(१५) (१६)अथ स्वप्नाः(१६) (१७)पुरुषं
कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति वराह एनं हन्ति
मर्कट एनमास्कन्दयत्याशु वायुरेनं प्रवहति सुवर्णं खा-
दित्वापगिरति मध्वश्नाति बिसानि भक्षयत्येकपुण्डरीकं
धारयति खरैर्वराहैर्युक्तैर्याति कृष्णान्धेनुं कृष्णवत्सां
नलदमाली दक्षिणामुखो व्राजयति(१७)(१८)स यद्येतेषां

किञ्चित्पश्चादुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वान्येनान्नेन ब्राह्मणान् भोजयित्वा चरुं स्वयं प्राश्नीयात्(१८) (१९)स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टादेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः स म आत्मेति विद्यात्(१९) ॥ ४ ॥

ऐतरेयारण्यकभाष्यम् ।

इदानीमनुमितेऽर्थे प्रत्यवायं दर्शयति । (१)"दुग्धदोहा अस्य वेदा भवन्ति न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमिति"(१)इति । यः परार्थं शंसति 'अस्य', 'वेदाः', गुरुमुखादधीताः 'दुग्धदोहा भवन्ति' । दोहः क्षीरं तच्च पूर्वमेव दुग्धनिःसारितं । इतः परं दोहनीयं किमपि नास्ति, अधीता वेदा निष्फला भवन्तीत्यर्थः । तदेव स्पष्टीक्रियते । 'तस्य' परार्थं शंसनं कृतवतः पुरुषस्य, 'अनूक्ते' गुरूपदेशमनु पठिते वेदे, 'भागः' सौभाग्यं, 'नास्ति', अध्ययननिमित्तं सुकृतं न निष्पद्यत इत्यर्थः । तथा 'सुकृतस्य पन्थानं' पुण्यस्य मार्गं, 'न वेद', अर्थज्ञानमपि न सम्पद्यत इत्यर्थः ॥

उक्तेऽर्थे संवादकं मन्त्रमुदाहरति । (२)"तदप्येतदृषिणोक्त"(२) इति ॥

तमेतं मन्त्रं पठति । (३)"यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति यदीं शृणोत्यलकं शृणोति न हि प्रवेद

सुकृतस्य पन्थामिति"*(३)इति। योऽयं वेदः सोऽयं यथाशास्त्रमध्येतॄणां पुरुषाणां 'सखा' स्वार्थबोधिनोपकारित्वात्। न केवलं सखा किन्तु 'सचिविदपि। 'सचिवित्' शब्दः सखिवाची। अत एव शाखान्तरे सखिविदमिति पठन्ति। यो माणवकोऽध्येता सोऽपि वेदस्य सखा। सम्प्रदायोच्छेदकनिवारकत्वेन वेदं प्रत्युपकारित्वात् तादृशमुपकारिणमध्येतारं वेत्तीति 'सचिवित्', तमेतमभिन्नं 'सखायं' वेदं, 'यः', पुमान्, 'तित्याज' परार्थविनियोगेन परित्यजति, 'तस्य' पुरुषस्य, 'वाच्यपि भागो नास्ति' अध्ययननिमित्तमपि सुकृतं न विद्यते। 'यदीं शृणोति' यदपि वेदार्थश्रवणं, तदपि 'अलकं शृणोति' अलीकश्रवणमेतत्। तत्र हेतुरुच्यते। 'हि' यस्मात्, 'सुकृतस्य पन्थां न प्रवेद' अज्ञाराहित्यादनुष्ठानमार्गं न जानाति, तस्मात्तदीयश्रवणमपि निस्फलमित्यर्थः॥

तृतीयचतुर्थपादयोरभिप्रायं दर्शयति। (४)"न तस्यानूक्तौ भागोऽस्ति न वेद सुकृतस्य पन्थानमित्येतत्तदुक्तं भवति"(४)इति॥

इत्थं परार्थशंसने दोषमभिधाय तत्प्रसङ्गाच्चयनादीनि त्रीणि निषेधति। (५)"तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयान्न परस्मै महाव्रतेन स्तुवीत न परस्मा एतदहः शंसेत्"(५) इति। यस्मात् परार्थानुष्ठाने प्रत्यवायो भूयानस्ति 'तस्मात्', 'एवं', 'विद्वान्', अध्वर्युः, 'परार्थं' 'महाव्रताङ्गं' 'अग्निचयनं 'न', कुर्यात्। उद्गाता च 'महाव्रताङ्गेन साम्ना 'परार्थं' 'न स्तुवीत'। होतापि 'एतदहः', महाव्रताख्येनाङ्गोपलक्षितं शस्त्रं, 'परार्थं' 'न शंसेत्'॥

---

* ऋग्वेदे म०१०, सू०७१, ऋ० ६।

क्वचित् भ्रंसनप्रतिप्रसवं दर्शयति । (६)"कामं पित्रे वाचार्याय वा भ्रंसेदात्मन एवास्य तत् कृतं भवति"(६) इति ॥

इत्थं प्रसङ्गाद्भ्रंसनस्य विधिनिषेधावुदाहृतौ । अथाल्पायुषः परमपुरुषार्थसाधनोपायमुपदेष्टुं आयुषोऽल्पत्वज्ञापकानि कानिचिदरिष्टान्युदाहरति । (७)"स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम तौ यत्र विहीयेते चन्द्रमा इवादित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति लोहिनी द्यौर्भवति यथा मञ्जिष्ठा व्यस्तः पायुः काककुलायगन्धिकमस्य शिरो वायति सम्परेतोऽस्यात्मा न चिरमिव जीविष्यतीति विद्यात्"(७) इति । आदित्यमण्डले स्वशरीरे च तत्त्व"एकं", एव 'इति', यत् 'अवोचाम', तदेकत्वन्निरोधाय 'तौ' आदित्यस्वशरीरपुरुषौ, 'यत्र विहीयेते' यदा वियुक्तौ भवतः । वियोगस्य लिङ्गमुच्यते । 'चन्द्रवत् 'आदित्यः', शीतरश्मिर्भासते, 'न', तु दृष्टिप्रतिघातका उष्ण'रश्मयः', 'प्रादुर्भवन्ति', तदिदमेकमरिष्टं । 'यथा', 'मञ्जिष्ठा'साम्येन 'द्यौर्लोहिनी दृश्यते', तदिदं द्वितीयं । 'पायुर्द्वारमत्यन्तं विवृतं भवति, न तु सङ्कोचयितुं शक्यते तदिदं तृतीयं । 'काकस्य 'कुलायः नीड़ं, तत्र यादृशो 'गन्धः, तादृशदुर्गन्धोपेतं 'अस्य शिरः', भवति, तच्च 'शिरः', स्वकीयं दुर्गन्धं 'वायति' दूरदेशे प्रसारयति, एतच्चतुर्थं । एतेषामन्यतरस्मिन् सम्पन्ने सति 'अस्य' पुरुषस्य, 'आत्मा' जीवः, 'सम्परेतः' मृतः, 'न', त्वितः परं 'जीविष्यति',* 'इति', निश्चिनुयात् ॥

* दीर्घकालं जीविष्यति इति क०, ग० च० ।

अस्त्वेवं निश्चयः किं तत इत्याशङ्क्याह। (८)"स यत् करणीयं मन्येत तत् कुर्वीत यदन्ति यच्च दूरक इति सप्त जपेदादित्यस्य रेतस इत्येका यत्र ब्रह्मा पवमानेति षडुद्वयं तमसस्परीत्येका"(८) इति। अरिष्टस्य दर्शनेन प्रत्यासन्नं मरणं निश्चित्यावस्थितः 'सः' पुमान्, लौकिकं वैदिकं वा कर्त्तव्यविशेषं यदि मनसि धारयति तदानीं 'तत्' सर्वं, सहसा 'कुर्वीत', तावद्विलम्बसिध्यर्थं 'यदन्तीत्यादिका विहिता ऋचस्तत्सङ्ख्याकाः सर्वाः 'जपेत्'॥

अरिष्टान्तरं दर्शयति। (९)"अथापि यत्र छिद्र इवादित्यो दृश्यते रथनाभिरिवाभिख्यायेत छिद्रां वा छायां पश्येत्तदप्येवमेव विद्यात्"(९) इति। 'अथापि' पुनरपि, अन्यदरिष्टमुदाह्रियत इतिशेषः। 'यत्र' यदा, 'आदित्यः', 'छिद्रोपेतः 'इव दृश्यते'। यथा 'रथचक्रस्य 'नाभिः',सच्छिद्रो भवति,तद्वदादित्यस्य मण्डलं सच्छिद्रं प्रतीयते। यद्वा स्वदेह'च्छायां', स'च्छिद्रां' 'पश्येत्'। तदानीं 'अप्येवमेव' सम्परेतोऽस्मात्मेत्यारभ्य उद्वयं तमसस्परीत्येकेत्यन्तेन ग्रन्थेनोक्तप्रकारमेव, 'विद्यात्'॥

अरिष्टान्तरं दर्शयति। (१०)"अथाप्यादर्शे वोदके वा जिह्मशिरसं वाशिरसं वात्मानं पश्येद्विपर्यस्ते वा कन्याके जिह्मेन वा दृश्येयातां तदप्येवमेव विद्यात्"(१०) इति। 'आदर्शो दर्पणः, तेनोदकेन च प्रतिबिम्बयोग्यानि स्वच्छानि खड्गादिद्रव्याण्युपलक्ष्यन्ते। तेषु द्रव्येषु स्वकीयदेहप्रतिबिम्बं 'जिह्मशिरसं' कुटिलशिरस्कं, 'पश्येत्'। यद्वा शिरोरहितं 'पश्येत्'। अथवा 'कन्याके' कनीनिके, प्रतिबिम्बस्य चक्षुगर्त्ते शुक्लकृष्णमण्डले, 'विप

यंस्ते' विद्यमानसन्निवेशाद्विपरीते, शुक्लमण्डलमध्ये कृष्णमण्डलमित्यसौ विद्यमानसन्निवेशः, तद्विपर्ययः कृष्णमण्डलमध्ये शुक्लमण्डलं। यद्वा यथावस्थितमार्जवं परित्यज्य 'जिह्मेन' वक्रत्वेन, कनीनिके 'दृश्येयातां'। तान्येतानि चत्वार्यरिष्टानि॥

पुनरप्यरिष्टान्तरं दर्शयति। (११)"अथाप्यपिधायाक्षिणी उपेक्षेत तद्यथा बटरकाणि सम्पतन्तीव दृश्यन्ते तानि यदा न पश्येत्तदप्येवमेव विद्यात्"(११) इति। लोके सर्वोऽपि पुरुषश्चक्षुषी निमील्य नेत्रस्यापाङ्गमवष्टभ्य 'उपेक्षेत' नेत्रसमीपं पश्येत्। 'तत्' तदानीं, अनुभवतो 'यथा',भवति तथोदाह्रियते। तेन 'बटरकाणि' वर्तुलानि सूक्ष्माणि शुक्लवर्णानि केशोण्डुकशब्दाभिधेयानि 'सम्पतन्तीव' सम्यङ्नेत्रान्निर्गच्छन्तीव रूपैर्दृश्यन्ते। 'तानि' बटरकाणि, 'यदा न पश्येत्', तदानीमप्यरिष्टं निश्चेयं॥

अरिष्टान्तरं दर्शयति। (१२)"अथाप्यपिधाय कर्णौ उपशृणुयात् स एषोऽग्नेरिव प्रज्वलतो रथस्येवोपब्दिस्तं यदा न शृणुयात्तदप्येवमेव विद्यात्"(१२) इति। सर्वोऽपि जनः स्वकर्णावुभावप्यङ्गुलिभ्यां दृढं 'पिधाय', देहमध्ये कञ्चिच्छब्दं 'शृणुयात्'। तस्य दृष्टान्तद्वयमुच्यते। 'प्रकर्षेण 'ज्वलतः' वह्नेः प्रौढस्य, शब्दो यादृशो भवति। 'रथस्य', त्वरया गच्छतः 'उपब्दिः,' घोषः, यादृशो भवति, स एष देहमध्ये श्रूयमाणः शब्दः 'तं' यदा 'न शृणुयात्', तदानीमरिष्टं 'विद्यात्'॥

अरिष्टान्तरं दर्शयति। (१३)"अथापि यत्र नील इवाभ्निर्दृश्यते यथा मयूरग्रीवाऽमेघे वा विद्युतं पश्येन्मेघे वा विद्युतं

न पश्येन्महामेघे वा मरीचीरिव पश्येत तदप्येवमेव विद्यात्"(१३) इति। यथा 'मयूरस्य 'ग्रीवा', लोके अतिशयेन 'नीलवर्णा, तद्वत् प्रौढो वह्निर्ज्वलन् 'यदा नील इव दृश्यते'। तथा 'मेघरहिते निर्मल आकाशे केनाप्यन्येनादृश्यमानां महतीं 'विद्युतं', पश्येत्। 'मेघे वा', प्रौढे सर्वैर्दृश्यमानां 'विद्युतं', 'स्वयं' 'न पश्येत्'। यदा वर्षर्त्तुमध्ये भूमौ सर्वत्रान्धकारमापादयन् प्रौढ़ो मेघो मध्याह्नादिकाले कदाचिद्भवति, तस्मिन् 'मेघे', भासुरा 'मरीचीरिव', 'पश्यति। तान्येतानि चत्वार्यरिष्टानि॥

अरिष्टान्तरं दर्शयति। (१४)"अथापि यत्र भूमिं ज्वलन्तीमिव पश्येत तदप्येवमेव विद्यात्"(१४) इति। शुष्कतृणकाष्ठादिरहिता केवला मृत्तिकैव प्रौढज्वालायुक्ता यदा दृश्यते। तदानीमरिष्टं विद्यात्॥

उदाहृतान्यरिष्टान्युपसंहरति। (१५)"इति प्रत्यक्षदर्शनानि"(१५)इति। 'इति' एवं पूर्वमुक्तानि, तौ यत्र विहीयेते चन्द्रमा इवादित्यो दृश्यत इत्यारभ्य भूमिं ज्वलन्तीमिव पश्येतेत्यन्तानि जागरणावस्थायां 'प्रत्यक्षेण दृश्यमानान्यरिष्टानि विज्ञेयानि॥

वक्ष्यमाणानि प्रतिजानीते। (१६)"अथ स्वप्नाः"(१६) इति। जागरणप्रत्यक्षारिष्टकथनानन्तरं 'स्वप्नगता अरिष्टविशेषाः कथ्यन्त इति शेषः॥

दशसङ्ख्याकानि स्वप्नारिष्टानि दर्शयति। (१७)"पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति वराह एनं हन्ति मर्कट एनमास्कन्दयत्याशु वायुरेनं प्रवहति सुवर्णं खादित्वापगिरति

मध्वश्नाति बिसानि भक्षयत्येकपुण्डरीकं धारयति खरैर्वरा-हैर्युक्तैर्याति कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो व्राजयति"(१७) इति। स्वप्ने साकल्येनात्यन्तं 'कृष्णवर्णं 'पुरुषद्देहं 'कृष्णवर्णैर्दन्तैर्युक्तं 'पश्यति', 'सः' च पुरुषः, आगत्य 'एनं' स्वप्नद्रष्टारं, 'हन्ति' स्वप्नमध्ये मारयति, तदिदमेकमरिष्टं। तथारण्यमध्ये प्रौढो 'वराहः' आगत्य मारयति। तदिदं द्वितीयं। 'मर्कटः', कश्चिदागत्य 'एनं' स्वप्नद्रष्टारं 'आस्कन्दयति' समन्तान्मूर्धपर्यन्तमारोहति। तदिदं तृतीयं। अतिशीघ्रगामी प्रौढो 'वायुः', 'एनं', गृहीत्वा निम्नदेशे जलवत् 'प्रवहति'। एतच्चतुर्थं। 'सुवर्णनिर्मितमाभरणं लड्डुकादिवद्भक्षयित्वा पुनरपि वमति। एतत्पञ्चमं। माक्षिकं यत् 'मधु', तद् आकण्ठं 'अश्नाति'। एतत् षष्ठं। 'बिसानि' पद्मादीनां नालानि, 'भक्षयति', एतत्सप्तमं। 'एकपुण्डरीकं' रक्तवर्णमिति सम्प्रदायः। तच्छिरसि 'धारयति', एतदष्टमं। 'युक्तैः' अश्ववत्सज्जीकृतैः, गर्दभैः 'वराहैः', वा ग्रामान्तरं गच्छति। एतन्नवमं। 'नलदमाली' रक्तकुसुमग्रथितस्रग्वी,'दक्षिणादिगभिमुखो भूत्वा काञ्चित् 'कृष्णवत्सोपेतां 'कृष्णां धेनुं', 'व्राजयति' देशान्तरे प्रेरयति। एतद्दशमं॥

एतैर्जागरणस्वप्नगतैररिष्टैः प्रत्यासन्नं मरणं निश्चित्यानन्तरं यत् कर्त्तव्यं तद्दर्शयति। (१८)"स यदैतेषां किञ्चित् पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वान्येनान्नेन ब्राह्मणान् भोजयित्वा चरुं स्वयं प्राश्नीयात्"(१८) इति। 'सः' पुमान्, 'एतेषां' अरिष्टानां मध्ये 'यत् किम्', अपि अरिष्टं

यदा 'पश्येत्', तस्मिन् दिने स्वयमुपवासं कृत्वा 'स्थालीपाकवि-धानोपेतं 'पायसं',रात्रौ व्युच्छदायतीत्यस्मिन् सूक्ते 'प्रतिमन्त्रं'पा-यसं', 'हुत्वा', स्वगृहे निष्पादितेन 'अन्नेन', यथाशक्ति 'ब्राह्म-णान्', 'भोजयित्वा', पश्चाद्धोमशेषं 'चरुं', 'स्वयं', प्राश्नीयात्'। एतावता सम्पादनीयस्य पुरुषार्थस्य उपस्थितो विघ्नः परिहृतो भवति॥

विघ्नं परिहृत्य पश्चात्सम्पादनीयं पुरुषार्थं दर्शयति। (१९) "स योऽन्तोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टादेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूता-नामन्तरपुरुषः स म आत्मेति विद्यात्"(१९) इति। कृतवि-घ्नपरिहारः 'सः' पुमान्, 'इति विद्यात्,' इत्यन्वयः। कथं विद्या-दिति तदुच्यते। 'यः', 'सर्वेषां भूतानामन्तरपुरुषः' ब्रह्मादि-स्तम्बान्तानां सर्वप्राणिनां देहमध्ये तत्तद्देहसाक्षित्वेन भासमानः परिपूर्णः परमात्मा, अस्ति, 'सः' अयं परमात्मा, 'मे' मम मुमु-क्षोः पुरुषस्य, 'आत्मस्वरूपं 'इति' एवं, 'विद्यात्' प्रमाणेन साक्षात् कुर्यात्। तदशक्तावुपासीतेत्यपि द्रष्टव्यं। 'अतः', इत्यादिभिः पदैः सर्वभूतान्तरं पुरुषं विशिनष्टि। 'अतः', अस्माद्देहेन्द्रियादिसङ्घातात्, विलक्षण इति शेषः। 'अश्रुतः', इत्यादिसप्तभिर्विशेषणैरिन्द्रियजन्यक्रियाकर्मत्वं निवारयति। अ-कारादयो वर्णाः परैरुच्चार्यमाणा उदात्तादिस्वरा वा यथा श्रोत्रेन्द्रियेण श्रूयन्ते। नैव 'आत्मा', श्रोत्रेण श्रुतः',। यथा पादेन्द्रियजन्यया गमनक्रियया ग्रामान्तरं गम्यते। नैवमसौ गतः'। यथा चतुर्भुजाद्युपेता विष्ण्वादिमूर्त्तिर्जडत्वात् मनसा

ध्यानकाले प्रकाश्यते। नैवमसौ मतः’,। स्वप्रकाशत्वादात्मनः ‘अमतः’ अविकारितः। यथा पुत्रभृत्यादिस्तत्स्वामिना नम्यते वशीक्रियते। नैवमसौ नतः’,। स्वतन्त्रत्वात् केनापि न वशीकृतः। यथा नीलपीतादिकं रूपं चक्षुषा दृश्यते। नैवमसौ दृष्टः’,। यथा मनसा सन्दिह्यमानं वस्तु स्थाणुचोरादिकं विज्ञानशब्दवाच्यया बुद्ध्या निर्णीयते। नैवमसौ विज्ञातः’,। सन्देहरहितत्वात् बुद्ध्या न निर्णेतव्यः। यथा जातिगुणादियुक्ता गवाश्वादिपदार्थास्तद्वाचकैः शब्दैरादिश्यन्ते नैवमसौ आदिष्टः’,। वाच्यार्थस्य जात्यादेस्तस्मिन्नभावात्। एतैर्विशेषणैरिन्द्रियव्यापारविषयत्वं निवारितं। कथन्तर्हि आत्मा बोद्धुं शक्यत इत्याशङ्क्यात्मनः कर्मकारकत्वाभावेऽपि तत्तद्व्यापारकर्तृत्वेनोपलक्षयितुं शक्यत इत्यभिप्रेत्य ‘श्रोता मन्ता’, इत्यादिसप्तविशेषणान्युच्यन्ते। आत्मा विषयो न भवति विषयी तु भवत्येव। अतो विषयित्वेनावगन्तव्यः। अत एवान्तर्यामिब्राह्मणे विषयत्वनिषेधपुरःसरं विषयित्वमाम्नायते। अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञातेति। अक्षरब्राह्मणेऽपि तथैवाम्नातं। यद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञात्रिति। कौषीतकिनोऽप्यामनन्ति। न वाचं विजिज्ञासीत वक्तारं विद्यादित्यादिना। प्रश्नोपनिषद्यपि दर्शनादिक्रियाकर्तृत्वमाम्नातं। एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुष इति। तत्तदिन्द्रियावभासकत्वेन तत्तत्कर्तृत्वव्यवहारत्वं न तु क्रियाश्रितत्व* कर्त्तृत्वमित्यभिप्रेत्योत्तरतापनीये पठ्यते। चक्षुषो द्रष्टा

श्रोत्रस्य द्रष्टा वाचो द्रष्टा मनसो द्रष्टा बुद्धेर्द्रष्टा प्राणस्य द्रष्टा तमसो द्रष्टा सर्वस्य द्रष्टेति। चक्षुर्भासकत्वमपि भासनाक्रियाश्रयत्वं न भवति, किन्तु स्वप्रकाशचैतन्यरूपस्य तत्तद्भानानुकूल्येनावस्थानं साक्षित्वमेवेति तत्रैवाम्नातं। चक्षुषः साक्षी श्रोत्रस्य साक्षी वाचः साक्षी मनसः साक्षी बुद्धेः साक्षी प्राणस्य साक्षी तमसः साक्षी सर्वस्य साक्षीति। एवमसङ्गो ह्ययं पुरुष इत्यादीन्यप्युदाहरणीयानि। यद्यप्यादेष्टा घोष्टेतिपदद्वयेन वाग्व्यापारकर्तृत्वमेवाभिधीयते। तथापि राजादिवदाज्ञापयितृत्वमादेष्टृत्वं सैन्याद्याह्वयितृत्वं, याष्टिकवदुच्चध्वनिकर्तृत्वं घोष्टृत्वमिति विवेकः। विज्ञातृत्वप्रज्ञातृत्वे अपि अवान्तरभेदेन विवेचनीये। देहेन्द्रियादिभ्यः प्रत्यगात्मानं विविच्य ज्ञातृत्वं विज्ञातृत्वं। तस्य च विविक्तस्य प्रकृष्टब्रह्मरूपत्वेन ज्ञातृत्वं प्रज्ञातृत्वं। 'सर्वेषां भूतानामन्तरपुरुषः स म आत्मा', इत्यनेन हिरण्यगर्भाद्युपाधिप्रयुक्तमात्मनो नानात्वं निराकृतं। तादृशस्य परमात्मनः 'स म आत्मेति विद्यात्', इतिवाक्येन स्वकीयसंसारित्वनिवारणाय तादात्म्यमुपन्यस्तं। ईदृग्वस्तुसाक्षात्कारे सति देहपातकाल एव विमुच्यते, तथाविधवस्तूपासने तु ब्रह्मलोकप्राप्तिद्वारा क्रमेण विमुच्यते। इत्येवमादित्यमण्डलस्थस्वशरीरान्तःपुरुषैक्यध्यानप्रसङ्गागतान्यरिष्टदर्शनानि तद्युक्तस्य परमपुरुषार्थहेतुभूता ब्रह्मविद्या च परिसमापिता ॥ ४ ॥

(१) अथ खल्वियं सर्वस्यै वाच उपनिषत् सर्वा ह्येवेमाः सर्वस्यै वाच उपनिषद इमां त्वेवाचक्षते(१) (२)पृथिव्या

रूपं स्पर्शा अन्तरिक्षस्योष्माणो दिवः स्वरा अग्ने रूपं स्पर्शा वायोरूष्माण आदित्यस्य स्वरा ऋग्वेदस्य रूपं स्पर्शा यजुर्वेदस्योष्माणः सामवेदस्य स्वराश्चक्षुषो रूपं स्पर्शाः श्रोत्रस्योष्माणो मनसः स्वराः प्राणस्य रूपं स्पर्शा अपानस्योष्माणो व्यानस्य स्वराः(२) (३)अथ खल्वियं दैवी वीणा भवति तदनुकृतिरसौ मानुषी वीणा भवति(३) (४)यथास्याः शिर एवममुष्याः शिरो यथास्या उदरमेवममुष्या अम्भणं यथास्यै जिह्वैवममुष्यै वादनं यथास्यास्तन्त्रय एवममुष्या अङ्गुलयो यथास्याः स्वरा एवममुष्याः स्वरा यथास्याः स्पर्शा एवममुष्याः स्पर्शा यथा ह्येवेयं शब्दवती तर्द्मवत्येवमसौ शब्दवती तर्द्मवती यथा ह्येवेयं लोमशेन चर्मणा पिहिता भवत्येवमसौ लोमशेन चर्मणा पिहिता(४) (५)लोमशेन ह स्म वै चर्मणा पुरा वीणा अपि दधति(५) (६)स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति भूमिप्रास्य कीर्त्तिर्भवति यत्र क्व चार्या वाचो भाषन्ते विदुरेनं तत्र(६)(७)अथातो वाग्रसो यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचुषेत तत्रैतामृचं जपेत्(७) (८)ओष्ठापिधाना नकुली दन्तैः परिवृता पविः सर्वस्यै वाच ईशाना चारु मामिह वादयेदिति वाग्रसः(८) ॥ ५ ॥

प्रासङ्गिकं परिसमाप्य प्रकृतामेवोपासनां प्रकारान्तरेण वक्तुं प्रतिजानीते। (१)"अथ खल्वियं सर्वस्यै वाच उपनिषत्सर्वा ह्येवेमाः सर्वस्यै वाच उपनिषद इमान्त्वेवाचक्षते"(१) इति। प्रासङ्गिकब्रह्मविद्याकथनानन्तर्यार्थः 'अथ'शब्दः। वक्ष्यमाणोपासनायाः प्रसिद्धार्थः 'खलु'शब्दः। 'इयमेव' वक्ष्यमाणोपनिषदुपासना, 'सर्वस्यै वाचः', सम्बन्धिनी अकारादिक्षकारान्तानां मातृकामन्त्रगतानां सर्वेषां वर्णानामत्रोपासनसत्त्वात्। यद्यप्यस्मिन्नारण्यके प्रोक्ताः 'सर्वाः' अपि संहितोपासनाः, कृत्स्नवाग्विषयाः 'एव'। तथाप्यभिज्ञाः पुरुषाः 'इमां एव' उपनिषदं, वक्ष्यमाणामुपासनामेव, सर्वोत्कृष्टां 'आचक्षते'॥

प्रतिज्ञातमुपासनान्तरं दर्शयति। (२)"पृथिव्या रूपं स्पर्शा अन्तरिक्षस्योष्माणो दिवः स्वरा अग्ने रूपं स्पर्शा वायोरूष्माण आदित्यस्य स्वरा ऋग्वेदस्य रूपं स्पर्शा यजुर्वेदस्योष्माणः सामवेदस्य स्वराश्चक्षुषो रूपं स्पर्शाः श्रोत्रस्योष्माणो मनसः स्वराः प्राणस्य रूपं स्पर्शा अपानस्योष्माणो व्यानस्य स्वराः"(२) इति। ककारादयो मकारावसाना वर्गपञ्चकनिष्ठा वर्णाः 'स्पर्शसञ्ज्ञकाः'। शषसहाश्चत्वारः 'ऊष्मसञ्ज्ञकाः'। अकारादय औकारान्ताश्चतुर्दश 'स्वरसञ्ज्ञकाः'। एतेषु स्पर्शोष्मस्वरेषु 'पृथिव्यादिलोकदृष्टिः', 'अग्न्यादिदेवतादृष्टिः', 'ऋगादिवेददृष्टिः' 'चक्षुरादीन्द्रियदृष्टिः', 'प्राणादिवायुदृष्टिश्च कर्त्तव्या॥

अस्या उपासनाया अङ्गत्वेन स्वतन्त्रत्वेन वा वीणाध्यानं विधत्ते। (३)"अथ खल्वियं दैवी वीणा भवति तदनुकृतिरसौ

मानुषी वीणा भवति"(२) इति। 'अथ' पृथिव्यादिध्यानकथनानन्तरं। 'खलु'शब्दः 'वीणा'प्रसिद्ध्यर्थः। 'इयं' अस्माभिर्दृश्यमाना शरीररूपा, 'दैवी' देवनिर्मिता, काचित्, 'वीणा', विद्यते। न हि देवव्यतिरेकेण कश्चिदपि इमं देहं निर्मातुं क्षमते। या तु गायकैर्धार्यमाणा काष्ठमयी 'वीणा', सा मनुष्यैर्निर्मितत्वात् 'मानुषी',। 'असौ', च 'तदनुकृतिर्भवति', तां दैवीं वीणामनुकृत्य कृतिर्निष्पादनं यस्याः सा 'तदनुकृतिः' तत्सदृशीत्यर्थः॥

शरीररूपाया दैवीवीणायाः काष्ठनिर्मिताया मानुषीवीणायाश्च सादृश्यव्याख्यानार्थं दर्शयति। (४)"यथास्याः शिर एवममुष्याः शिरो यथास्या उदरमेवममुष्या अम्भणं यथास्यै जिह्वैवममुष्यै वादनं यथास्यास्तन्त्रय एवममुष्या अङ्गुलयो यथास्याः स्वरा एवममुष्याः स्वरा यथास्याः स्पर्शा एवममुष्याः स्पर्शा यथा ह्येवेयं शब्दवती तर्द्मवत्येवमसौ शब्दवती तर्द्मवती यथा ह्येवेयं लोमशेन चर्मणा पिहिता भवत्येवमसौ लोमशेन चर्मणा पिहिता"(४) इति। 'अस्याः' अस्माभिर्दृश्यमानायाः शरीररूपाया दैव्या वीणायाः, ऊर्ध्वभागे प्रसिद्धं 'यथा शिरः', भवति, 'एवं,' 'अमुष्याः' उपासकशरीराद्व्यतिरिक्तायाः काष्ठनिर्मिताया मानुष्या वीणायाः, ऊर्ध्वभागे 'शिरः', द्रष्टव्यं। यो भागो गायकस्य वामांसमाश्रित्यावस्थितः तत्रालावुखण्डोपेतत्वेन शिरस आकारो दृश्यते। तदिदमेकं सादृश्यं अपराण्यपि सादृश्यान्येवं द्रष्टव्यानि। 'अस्याः' शरीरवीणायाः, प्रसिद्धोदरवत् 'अमुष्याः' काष्ठवीणायाः, 'अम्भणं' वीणादण्डमध्यवर्त्ति-

मध्यच्छिद्रं। शरीरवीणायामवस्थिता 'जिह्वा', 'यथा', स्वरोत्पत्तिहेतुः, तथैव 'अमुष्याः' काष्ठवीणायाः, हस्तेन 'वादनं', स्वरोत्पत्तिहेतुः। 'तन्त्रयोऽङ्गुलयः', इति पदद्वयं व्यत्यासेन योजनीयं। 'अस्याः' शरीरवीणायाः, 'अङ्गुलयः', 'यथा', बहुविधा दीर्घा वर्त्तन्ते, तथैव 'अमुष्याः' काष्ठवीणायाः, 'तन्त्रयः' दीर्घतन्त्वः। 'यथा', 'अस्याः' शरीरवीणायाः, 'स्वराः' कोष्ठाग्निप्रेरितवायोः सम्बन्धविशेषेणोत्पन्नाः षड्जर्षभगान्धारादयः, 'यथा', वर्त्तन्ते, तथैव 'अमुष्याः' काष्ठवीणायाः, तत्तत्स्थानेष्वङ्गुलिधारणेन षड्जादयः 'स्वराः', आविर्भवन्ति। स्वराभिव्यक्त्यर्थं 'यथा', शरीरमध्ये वायोः 'स्पर्शविशेषाः प्रयत्नात् सम्पद्यन्ते, तथा काष्ठवीणाया अङ्गुलिस्पर्शविशेषाः प्रयत्नसम्पाद्याः। 'यथा', च 'इयं' शरीरवीणा, 'शब्दवती' स्वराभिव्यक्तिहेतुभूतध्वनियुक्ता, तथा 'तर्द्मवती' दृढबन्धनयुक्ता, शरीरावयवानां दृढबन्धनं तर्दनं। तथैव काष्ठवीणापि 'शब्दवती' स्वरविशेषाभिव्यक्तिहेतुभूतध्वनियुक्ता, तथा 'तर्द्मवती' तर्दनेन तन्त्रीणां दृढबन्धनेन युक्ता, 'यथा', च 'इयं' शरीरवीणा, 'लोमशेन' प्रभूतरोमाधारेण, 'चर्म्मणा', 'पिहिता' आच्छादिता, 'भवति'। 'एवं', 'असौ' काष्ठवीणादण्डः, 'अपि', 'लोमशेन' व्याघ्रादिचर्म्मणा, आच्छादिता 'भवति'॥

नन्विदानीन्तनाः काष्ठवीणाश्चर्म्मणा न बध्यन्त इत्याशङ्क्याह। (५)"लोमशेन ह स्म वै चर्म्मणा पुरा वीणा अपि दधति"(५)इति। इदानीमत्र चर्म्मणा पिधानाभावेऽपि पूर्वकाले देवलोकादौ तद्विद्यत इति द्रष्टव्यं॥

वीणाध्यानफलं दर्शयति। (६)"स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति भूमिप्रास्य कीर्त्तिर्भवति यत्र क्व चार्या वाचो भाषन्ते विदुरेनन्तत्र"(६)इति। 'यः' पुमान्, मानुषीवीणासादृश्यानुसन्धानपुरःसरं शरीररूपां 'दैवीं वीणां' उपास्ते, 'सः', अयं, 'श्रुतवदनः' सर्वजनश्रोत्रप्रियं वदनम् उक्तिर्यस्यासौ श्रुतवदनः। विद्वत्सभायां राजसभायां वा सर्वेषां प्रियतमैर्वचनैरत्यन्तं रञ्जको भवति। तथा 'अस्य कीर्त्तिः', 'भूमिप्रा' भूमेः पूरयित्री, 'भवति', सर्वस्यां भूमावविवादेन सर्वेऽपि जना एनं विद्याधिकं मन्यन्त इत्यर्थः। किञ्च 'यत्र क्व च' यस्मिन् कस्मिन्नपि देशे, यस्मिन् कस्मिन्नपि ग्रामविशेषे, केचित् 'आर्याः' वेदशास्त्रपारङ्गतास्तदनुष्ठानपरा बहवः, सभायामुपविश्य 'भाषन्ते' विद्याप्रसङ्गं कुर्वन्ति। 'तत्र' तस्यां सभायां, 'एनं विदुः' सर्वज्ञोऽयमत्यन्तपण्डित इत्येवमुपासकं स्मरन्ति॥

वीणाध्याने फलोक्तिप्रसङ्गेन विद्वत्सभारञ्जनहेतुं मन्त्रविशेषं विधत्ते। (७)"अथातो वाग्रसो यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचुषेत तत्रैतामृचं जपेत्"(७)इति। 'अथ' वीणोपास्तिकथनानन्तरं, यतः कारणात् फलोक्तिप्रसङ्गेन सभारञ्जनहेतुर्मन्त्रो बुद्धिस्थः। 'अतः' कारणात्, 'वाग्रसः' वाचः सारभूतो मन्त्रः, अभिधीयते इति शेषः। 'यस्यां संसदि' विद्वत्सभायां, 'अधीयानः' वेदशास्त्रगोष्ठीः कुर्वाणः पुरुषः, राजसभायां 'वा', लौकिकान्युचितवाक्यानि 'भाषमाणः', 'वा', 'न', 'विरुरुचुषेत' विशेषेण रुचिकरः सर्वजनानां रञ्जको यदि न भवेत्। 'तत्र' तस्यां सभायां, रञ्जकत्व-

सिध्यर्थं 'एतां' वक्ष्यमाणामृचं, 'जपेत्' तन्मन्त्रपुरश्चरणादिकं कुर्यात् ॥

तामेतामृचं दर्शयति। (८)"ओष्ठापिधाना न कुलीदन्तैः परिवृता पविः सर्वस्यै वाच ईशाना चारु मामिह वादयेदिति वाग्रसः"(८) इति। 'सर्वस्यै वाचः' वेदशास्त्रलौकिकोक्तिरूपस्य सर्वस्यापि वचनजातस्य, 'ईशाना' स्वामिरूपा वाग्देवता, 'मां' सभारञ्जकोक्तिकामं, अस्यां विद्वत्सभायां राजसभायां वा 'चारु' शोभनं सर्वरञ्जकं यथा भवति तथा, 'वादयेत्' सम्भाषणोक्तिं प्रेरयतु। कीदृशी वाग्देवता, 'ओष्ठापिधाना न',। उपमार्थः 'न' कारः। ओष्ठद्वयमपिधानं वस्त्रवदाच्छादनं यस्या जिह्वादिस्थानगताया वाग्देवतायाः सेयं 'ओष्ठापिधाना'। ओष्ठयोराच्छादकवस्त्रसादृश्यमेव, न तु मुख्यमाच्छादकवस्त्रत्वमित्यभिप्रेत्योपमार्थो न कारः पठितः। 'कुलीदन्तैः' वज्रवद् घनीभूतैः अन्तरालच्छिद्ररहितैः, दन्तैः, 'परिवृता' परितो वेष्टिता, वाग्देवता। दन्तानां विरलत्वे सति उच्चार्यमाणा वर्णा वर्णाभासा भवन्ति। 'पविः' वज्रवत्तीक्ष्णा, शब्दोच्चारणे अत्यन्तपट्वी देवता इत्यर्थः। अथवा ओष्ठेत्यादिविशेषणैर्देवता न प्रकाश्यते। किन्तु स्वकीयवाचि दोष उद्भाव्यते। अस्मिन् पक्षे 'न' कारो निषेधार्थः। येयं मदीया वाक् सेयमोष्ठाभ्यां बहिराच्छादिता यतः कुलीदन्तैः परितो वेष्टिता। अतो बहिर्निर्गता सभां रञ्जयितुं 'नपविः' नात्यन्तपटुः। अतः कारणाद्वाग्देवते सर्वस्या इत्यादिना त्वामहं प्रार्थये इत्येवमुक्तो यो मन्त्रः सोऽयं 'वाग्रसः'। सर्वस्या वचः सारभूतोऽवगन्तव्यः ॥ ५ ॥

(१)अथ हास्मा एतत् कृष्णहारितो वाग्ब्राह्मणमिवोपोदाहरति(१) (२)प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत संवत्सरः स छन्दोभिरात्मानं समदधाद्यच्छन्दोभिरात्मानं समदधात्तस्मात्संहिता(२) (३)तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा(३) (४)स यो हैतौ णकारषकारावनुसंहितमृचो वेद सबलां सप्राणां संहितां वेदायुष्यमिति विद्यात्(४)(५)स यदि विचिकित्सेत्सणकारं ब्रवाणी३ अणकारां३ इति सणकारमेव ब्रूयात् सषकारं ब्रवाणी३ अषकारां३ इति सषकारमेव ब्रूयात्(५) (६) तं यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारा उपाप्ताविति ह स्माह ह्रस्वो माण्डूकेयः(६)(७)अथ यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारा उपाप्ताविति ह स्माह स्थविरः शाकल्यः(७)(८)एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे वाचि हि प्राणं जुहुमः प्राणो वा वाच योह्येव प्रभवः स एवाप्ययः(८) (९)ताएताः संहिता नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नाप्रवक्त्र इत्याचार्या आचार्याः(९) ॥ ६ ॥

ऐतरेयारण्यकभाष्यम्।

उपासनान्तरं विधातुं प्रजापतिवृत्तान्तमवतारयति। (१)“अथ हास्मा एतत् कृष्णहारितो वाग् ब्राह्मणमिवोपोदाहरति”(१) इति। ‘अथ’ यथोक्तसर्वसंहितोपास्तिकथनानन्तरं, न्यूनातिरिक्तदोषसमीकरणार्थं किञ्चित् संहितविषयमुपासनमुच्यत इति शेषः। यथा प्रधानयागेष्वनुष्ठितेषु पश्चात् स्विष्टकृदनुष्ठीयते, तद्वदिदं द्रष्टव्यं। हरितस्य पुत्रो ‘हारितः’, स च ‘कृष्णवर्णस्तादृशः कश्चिन् महर्षिः ‘अस्मै’ पुत्राय शिष्याय वा, ‘एतत्’ वक्ष्यमाणं, ‘वाग्ब्राह्मणं’ वाग्रूपसंहितोपास्तिविशेषविधायकं ब्राह्मणवाक्यं, ‘उपोदाहरति,’ रहस्यत्वेन समीपमागत्य कर्णे कथयति। ‘इव’ शब्दोऽवधारणार्थः, अनर्थको वा। संहिताविषयमेव ब्राह्मणं न त्वन्यदित्यर्थः॥

प्रतिज्ञातं प्रजापतिवृत्तान्तप्रतिपादकं ब्राह्मणं दर्शयति। (२)“प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत संवत्सरः स छन्दोभिरात्मानं समदधाद्यच्छन्दोभिरात्मानं समदधात्तस्मात् संहिता”। (२)इति। ‘संवत्सरः प्रजापतिः’ कालात्मकः परमेश्वरः, देवतिर्यङ्मनुष्यरूपाः ‘प्रजाः’, ‘सृष्ट्वा’, ‘व्यस्रंसत’ श्रमेण विस्रस्तावयवोऽभूत्। ‘सः’, पुनः ‘छन्दोभिः’ वेदैः, ‘आत्मानं’ सर्वावयवसङ्घातरूपं, ‘समदधात्’। वेदोक्तमन्त्रपाठसामर्थ्येन स्वावयवपाटवं सम्पादितवान्, इत्यर्थः। यस्मादयं ‘छन्दोभिः’, स्वशरीरं समाहितवान्। ‘तस्मात्’ समाधानहेतुत्वात्, छन्दःपाठः ‘संहिता’, इत्युच्यते॥

इत्थं निर्वचनेन संहितां प्रशस्य तत्रोपासनविशेषं विधत्ते।

(३)"तस्यै वा एतस्य संहितायै णकारो बलं षकारः प्राण आत्मा"(३) इति। येयं वैदिकशब्दानामविच्छिन्नपाठरूपा 'संहिता तस्याः संहितायाः 'णकारः' टवर्गपञ्चमः, 'बलं', इति ध्यायेत्। कादयो मावसानाः स्पर्शनामकाः पञ्च वर्गा ये सन्ति, तेषु मध्यवर्गस्थत्वात् बलत्वं युक्तं। स्पृष्टकरणं स्पर्शानामिति लक्षणानुसारेण दृढप्रयत्ननिष्पाद्याः स्पर्शवर्णाः। तथैवोष्मसन्त-र्भूतस्य 'षकारस्य 'प्राणत्वध्यानं युक्तं। य ऊष्माणः स प्राण इत्येवमुपासनान्तरे पूर्वमभिहितत्वात्। प्राणत्वादेव च जीवा-त्मत्वमपि सम्भवति॥

प्राणाधारो हि जीवात्मा यथोक्तणकारषकारध्यानं प्रशं-सति। (४)"स यो हैतौ णकारषकारावनुसंहितमृचो वेद स-बलां सप्राणां संहितां वेदायुष्यमिति विद्यात्"(४) इति। 'यः' कश्चित् संहितोपासकः, 'एतौ णकारषकारौ', बलप्राणत्वेन ध्यातव्यौ। 'अनुसंहितं' या या संहिता तान्तामनुगताविति ध्यायन् 'ऋचो वेद' ऋग्रूपान्मन्त्रान् पठेत्, 'सः' पुमान्, स्वेनो-पास्यां 'संहितां', 'बलसहितां 'प्राणसहिताञ्चोपास्ते। अन्यथा उपास्यमाना संहिता दुर्बला प्राणरहिता च प्रसज्येत। तस्मात् संहितायां 'आयुष्यध्यानमिदं 'इति', निश्चिनुयात्॥

इदानीं गुरुशिष्ययोः प्रश्नोत्तरमुखेन णकारषकारध्यानं द्रढयति। (५)"स यदि विचिकित्सेत् स णकारं ब्रवाणीं३ अणकारां३ इति। सणकारमेव ब्रूयात् सषकारं प्रवाणीं३ अ-षकारां३ इति सषकारमेव ब्रूयात्"(५)इति। पूर्वग्रन्थे णकार-षकारध्यानरहितानि संहितोपासनान्युक्तानि। अत्र तु तत्तांसु

ध्यानमुच्यते। अतः किं प्रशस्तमिति सन्दिहानः शिष्यो गुरुं पृच्छति। हे गुरो योऽहमुपासकः 'सः', अहं, णकारध्यानसहितं यथा भवति तथा किं संहितामुच्चारयामि च किंवा तद्राहित्येन। सानुनासिकं प्लुतद्वयं विचारार्थं। णकारध्यानसहितायाः संहितायाः प्रशस्तत्वात्तत्सहितं यथा भवति तथा संहितां ब्रूहीत्येवं गुरुः प्रत्युत्तरं 'ब्रूयात्'। एवं षकारेऽपि योजनीयम्॥

उक्तार्थस्य साम्प्रदायिकत्वं दर्शयितुं माण्डूकेयस्य वचनमुदाहरति। (६)"ते यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारा उपाप्ताविति ह स्माह ह्रस्वो माण्डूकेयः"(६) इति। तां संहितां ध्यातव्यामनुप्राप्य वर्त्तत इति णकारषकारध्यानं 'अनुसंहितं', इत्युच्यते। तच्चानुसंहितमनुसन्दधानाः 'ते' प्रसिद्धाः, 'वयं' ह्रस्वदेहा माण्डूकेयनामका उपासकाः, 'ऋचोऽधीमहे' संहितां पठामः, इति 'यत्', अस्ति, किञ्च 'माण्डूकेयीयं' शूरवीरेण माण्डूकेयेन प्रोक्तं निर्भुजादिध्यानस्य प्राणवंशध्यानस्य च प्रतिपादकं पूर्वोक्तमध्यायं ग्रन्थविशेषं, 'प्रब्रूमः' प्रकृष्टध्यानसहितं यथा भवति तथा पठामः, इति च 'यत्', अस्ति, 'तेन' उभयेन सर्वसंहिताध्यानेन, विशेषतो निर्भुजप्राणवंशध्यानेन, च 'नः' अस्माकं ह्रस्वानां माण्डूकेयानां, 'णकारषकारौ' बलप्राणरूपौ, चायुषो हेतू, 'उपाप्तौ' सामीप्येन प्राप्तौ, 'इति' एवं, 'माण्डूकेयस्य वचनं'॥

तद्वच्छाकलस्य वचनमप्युदाहरति। (७)"अथ यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो

णकारषकारा उपांशाविति ह स्माह स्थविरः शाकल्यः"(७) इति। ऋस्वमाण्डूकेयवाक्यवद्व्याख्येयं। तदिदं णकारषकार-ध्यानं सर्वेषु यागेषु स्विष्टकृद्धोम इव सर्वासु संहितोपासनासु अनुसन्धेयमिति तात्पर्यार्थः॥

ननु साक्षात्कारपर्यन्तासु सर्वासूपासनासु नैरन्तर्येणोपासनायत्तत्वात् नित्यनैमित्तिककर्मानुष्ठानलोपप्रत्यवायः स्यादित्याशङ्क्योपासकव्यतिरिक्तविषयं तत्प्रत्यवायशास्त्रं। उपासकस्य तु उपासनमेव सर्वकर्मफलप्रापकमित्येतद्दर्शयति। (८)"एतद्ध स्म वै तद्विद्वांस आहुरृषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे वाचि हि प्राणं जुहुमः प्राणे वा वाचं यो ह्येव प्रभवः स एवाप्ययः"(८) इति। कवषस्य पुत्राः 'कावषेयाः', बहवः, तेषां मध्ये केचित् 'तदेतद्विद्वांसः' पूर्वोक्तसंहितास्वरूपमुपासीनाः, अन्ये केचिच्छास्त्रान्तरप्रसिद्धं तदेतत् सगुणब्रह्मोपासीनाः, अपरे तु तदेतत्सर्ववेदान्तप्रसिद्धं ब्रह्मतत्त्वं साक्षात्कृतवन्तः, ते च सर्वे मिलित्वा परस्परमिदं 'आहुः'। 'वयं', सर्वे, यथोक्तोपासनेन ब्रह्मज्ञानेन च कृतकृत्याः सन्त इतः परं 'किं', प्रयोजनं, उद्दिश्य ब्रह्मयज्ञाध्ययनादिकं वा ज्योतिष्टोमादियागान्वा करिष्यामः। सर्वस्य पुरुषार्थस्य सम्पन्नत्वात्। नास्त्यस्माकमध्ययनयागाभ्यां प्रयोजनमित्यर्थः। अथापि श्रद्धाजडानां परितोषाय यद्यनुष्ठानमपेक्षेत तथापि सायम्प्रातःकालीनाग्निहोत्रद्वयवत् अस्माकं स्वतःसिद्धं होमद्वयं सर्वदा प्रवर्त्तते। तद्यथा कालविस्तारार्थं यदा वेदमधीमहे लौकिकं वा वृत्तान्तं भाषामहे तदानीमस्मा-

द्दीयायां 'वाचि', वह्निस्थानीयायां,'प्राणरूपं होमद्रव्यं 'जुहुमः'। अथवा', यदि तूष्णीम्भवामो निद्रां कुर्महे तदानीं 'प्राणाख्ये वह्नौ' वाग्रूपं होमद्रव्यं 'जुहुमः'। तदेतद्धोमस्वरूपत्वमुपपाद्यते। वाक्प्राणयोरन्यतरः 'यः' पदार्थः, इतरस्योद्भवः, उत्पत्तिहेतुः, 'स एव', कालान्तरे तस्य 'अप्ययः' लयहेतुः, भवति। वाच उपरमेण हि प्राणवृत्तिरुद्भवति। तस्या एव वाचः प्रवृत्तौ प्राणवृत्तिर्लीयते। एवं प्राणस्योपरमेण वाग्वृत्तिरुद्भवति। तथा प्राणस्य प्रवृत्तौ वाग्वृत्तिर्लीयते। सोऽयं निरन्तरं पर्यायेणान्योन्यस्मिन्विलयो हुतद्रव्यदर्शनहेतुत्वाद्धोम इत्युच्यते। अतः अज्ञानजन् प्रति नित्यसिद्धो होमोऽस्तीति प्रतिपादनीयं। विवेकिनं प्रति तु नास्त्येव कर्त्तव्यान्तरमिति बोधनीयमित्यर्थः। कौषीतकिनस्त्वथातः सायन्तनं प्रातस्तनमित्यादिना यथोक्तं परस्परहोमस्य ध्येयत्वमामनन्ति। तद्वदत्रापि होमद्रव्यं वा ध्यानं वा द्रष्टव्यम् ॥

इदानीं संहिताविद्यायाः सम्प्रदानविधिरुच्यते। (८)"ता एताः संहिता नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नाप्रवक्त्र इत्याचार्या आचार्याः"(८) इति। अथातः संहिताः या उपनिषदित्यारभ्य प्रोक्ताः, 'एताः' णकारषकारध्यानपर्यन्ताः संहितोपासनाः, 'अनन्तेवासिने' शास्त्रोक्तशिष्यलक्षणरहिताय, 'न', उपदिशेत्। सत्स्वपि शिष्यलक्षणेषु गुरुसमीपे 'संवत्सरनिवासात् पूर्वं 'न', 'ब्रूयात्'। उक्तगुणसम्पत्तावपि यः पुमान् 'प्रवक्ता न भवति। शिष्यान् बोधयितुं सामर्थ्याभावादालस्याद्वा प्रवचनं शिष्योपदेशं न करोति तादृशाय 'न ब्रूयात्'। किन्तु शिष्यलक्षण

सम्पन्नाय संवत्सरं गुरुसेविने शिष्योपदेशक्षमाय पुरुषाय 'ब्रूयात्'। इत्येवं 'आचार्यलक्षणसम्पन्ना महान्त आचक्षते। आचार्यलक्षणन्त्वेवं स्मर्यते।

आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि।
स्वयमाचरते यस्मादाचार्यः परिकीर्त्यते॥ इति।

निरुक्तकारोऽप्याह। आचार्यः कस्मादाचार्य आचारं ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिमिति वेति। अभ्यासोऽध्यायसमाप्त्यर्थः, तृतीयारण्यकसमाप्त्यर्थः, कृत्स्नोपनिषत्समाप्त्यर्थश्च॥ ६॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्री विद्यातीर्थमहेश्वरापरावतारस्य वैदिकमार्गप्रवर्त्तकस्य श्रीवीरबुक्कमहाराजस्याज्ञापालकेन सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऐतरेयारण्यके तृतीयारण्यके द्वितीयोऽध्यायः॥

समाप्तञ्च तृतीयारण्यकं समाप्ता चोपनिषत्।

---

# ऐतरेयारण्यकम् ।

चतुर्थम् ।

हरिः ओम् ।

(१)विद्मा मघवन्विद्मा गातुमनुशंसिषो दिशः ॥ शिक्षा शचीनां पते पूर्वीणां पुरूवसो(१) ॥ (२)आभिष्ट्वमभिष्टिभिः प्रचेतन प्रचेतय ॥ इन्द्र द्युम्नाय न इष एवा हि शक्रः(२) ॥ (३)राये वाजाय वज्रिवः शविष्ठ वज्रिन्नृञ्जसे मंहिष्ठ वज्रिन्नृञ्जस आयाहि पिब मत्स्व(३) ॥ (४)विद्मा रायः सुवीर्यं भुवो वाजानां पतिर्वशाँ अनु । मंहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणाम्(४) ॥ (५)यो मंहिष्ठो मघोनां चिकित्वो अभि नो नय ॥ इन्द्रो विदे तमु स्तुषे वशी हि शक्रः(५) ॥ (६)तमूतये हवामहे जेतारमपराजितम् ॥ स नः पर्षदति द्विषः क्रतुः छन्द ऋतं बृहत्(६) । (७)इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम् ॥ स नः पर्षदति द्विषः स नः पर्षदति द्विषः(७) ॥ (८)पूर्वस्य यत्ते अद्रिवः सुम्न आधेहि नो वसो ॥ पूर्तिः शविष्ठ शस्यत ईशे हि शक्रः(८) ॥ (९)नूनं तं नव्यं सन्यसे प्रभो जनस्य वृत्रहन् ॥ समन्येषु ब्रवावहै

शूरो यो गोषु गच्छति सखा सुशेवो अद्वयाः(९) ॥
(१०)एवा ह्येवैवा ह्यग्ना ३इ(१०) ॥ (११)एवा ह्येवैवा
हीन्द्रम् ॥ एवा ह्येवैवा हि विष्णा ३ उ एवा ह्येवैवा
हि पूषा३न् ॥ एवा ह्येवैवा हि देवाः(११) ॥ (१२)एवा
हि शक्रो वशी हि शक्रो वशां अनु (१२) ॥ आयो मन्याय
मन्यव उपो मन्याय मन्यवे(१३)॥ (१४)उपैहि विश्वध(१४) ॥
विदा मघवन्विदा३म्(१५) ॥ १ ॥

इत्यैतरेयारण्यके चतुर्थारण्यकं समाप्तम् ॥

ऐतरेयारण्यकभाष्यम् ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
कथितोपनिषत्तस्त्वं महानाम्न्याख्यमन्त्रकाः ।
अरण्याध्ययनार्थन्ते प्रोच्यन्तेऽथ चतुर्थके ॥ २ ॥

तेषां च मन्त्राणां विनियोग आश्वलायनसूत्रे द्रष्टव्यः । स चाश्वलायनः सप्तमाध्याये पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिनसवने मरुत्वतीयशस्त्रस्य ऊर्ध्वं निष्केवल्यशस्त्रस्य कृप्तिं कुर्वन्नेवमाह । शाक्वरश्चेत्पृष्ठं महानाम्नः स्तोत्रियस्ता अर्धर्चशः नव प्रकृत्या तिस्रो भवन्ति, ताभिः पुरीषपदान्युपसन्तनुयात्पञ्चाक्षरशः पूर्वाणि पञ्चसर्वाणि वा यथानिशान्तमिति । अस्य सूत्रस्यायमर्थः । शाक्वरनामकं सामवेदप्रसिद्धं किञ्चित् सामास्ति, तच्चेदुद्गातारः पृष्ठस्तोत्ररूपेण गायेयुः तदानीं महानाम्नीसंज्ञया व्यवह्रियमाणा विदा मघवन्नित्याद्या नव संख्याका ऋचो याः सन्ति, ताः सर्वा मिलित्वा स्तोत्रसम्बन्धितया स्तोत्रि-

यस्तृच इत्यभिधीयन्ते। तिसृभिस्तिसृभिर्ऋग्भिर्मिलिताभिरेकैकस्यामृचि निष्पादितायां सत्यां प्रकृत्या स्वभावतो नवसङ्ख्याका अपि सम्पादनेन तिस्र ऋचो भवन्ति। तादृशीस्ता ऋचोऽर्धर्चशः शंसेत्। अधिकमर्द्धं यस्या ऋचः सेयमृक् अध्यर्द्धा तामध्यर्द्धां कृत्वा शंसेत्। समाम्नातक्रमेणार्द्धत्रयं पठित्वा तत्रावसाय पुनरर्द्धत्रयं पठित्वा तदन्ते प्रणवं कुर्यात्। अनेन प्रकारेण नवसङ्ख्याकाः समाम्नाता ऋचः शस्त्वा ताभिर्नवभिर्ऋग्भिः सह पुरीषपदानि संयोजयेत्। अन्तिमेन प्रणवेन सह पठेत्। एवा ह्येवेत्यादयो नव मन्त्राः फलपूर्त्तिहेतुत्वात्पुरीषपदानीत्युच्यन्ते। तेषु नवस्वाद्यानि पञ्चसङ्ख्याकानि पुरीषपदानि पञ्चाक्षरशः शंसेत्। तद्यथा। एवा ह्येवेति पञ्चाक्षराणि पठित्वा सकृदवसाय पश्चात् एवा ह्यग्न इति एतानि पञ्चाक्षराणि पठेत् यद्यप्यत्रोभयत्र चत्वार्येवाक्षराणि दृश्यन्ते। तथापि हिशब्दं एवशब्दञ्च विश्लिष्टं कुर्यात्। तथोत्तरत्रापि हिशब्दमग्निशब्दञ्च सन्धिरहितं कृत्वा पञ्चाक्षरत्वं द्रष्टव्यं। अनेन प्रकारेण पञ्च मन्त्रान् पठित्वा पश्चादेवा हि शक्र इत्यादींश्चतुरो मन्त्रान् मध्ये विच्छेदमकृत्वा पठेत्। यद्वा सर्वानपि नव मन्त्रान् एतान् यथानिशान्तं यथासमाम्नायमध्ययनपाठक्रमेण पठेत्। न तु मन्त्रस्य मध्येऽवसानं कर्त्तव्यमिति। सोयं सूत्रोक्तो मन्त्राणां विनियोगः॥

तत्र नवसृत्तु प्रथमामृचमाह। (१)"विदा मघवन्विदा गातुमनुशंसिषो दिशः। शिक्षा शचीनां पते पूर्वीणां पुरूवसो"(१) इति। हे 'मघवन्' इन्द्र, 'विदा' त्वं वेत्सि, अत्र वेदितव्यस्य कर्म-

कारकस्य कस्यचिद्विशेषस्यानुपादानात् सामान्याकारेण सर्वं जानासीत्ययमर्थो लभ्यते। यस्मात्सर्वज्ञस्त्वं तस्मात् 'गातु' यजमानेन गन्तव्यं मार्गं, 'विद्' वेत्सि जानासि, ततो यजमानस्य समीचीनेन मार्गेण स्वर्गं गन्तुं 'दिशः' मार्गोपयुक्तान्दिग्विशेषान्, 'अनुशंसिषः' अनुक्रमेण शंस उपदिश। किञ्च 'पूर्वीणां' पूर्वसिद्धानां, 'प्रचीनां' शक्तीनां, 'पते' हे पालक, पुरु प्रभूतं वसु धनं यस्यासौ पुरुवसुः, तत्सम्बोधनं हे 'पुरुवसो'- 'शिक्ष' यजमानस्य हितोपदेशं कुरु, सर्वशक्तिमत्त्वेन प्रभूतधनत्वेन च हे इन्द्र त्वं यजमानं समीचीने कर्मणि प्रवर्त्तयितुं तत्फलं दातुञ्च प्रभवसीत्यर्थः॥

द्वितीयामृचमाह। (२)"आभिष्ट्वमभिष्टिभिः प्रचेतन प्रचेतय। इन्द्र द्युम्नाय न इष एवा हि शक्रः"(२) इति। प्रकृष्टा चेतना बुद्धिर्यस्यासौ प्रचेतनः हे 'प्रचेतन', 'आभिः' यजमानेन क्रियमाणाभिः, 'अभिष्टिभिः' तवाभीष्टाभिः स्तुतिभिः, 'प्रचेतय' प्रकर्षेण यजमानसेवां जानीहि। हे 'इन्द्र', त्वं 'नः' अस्माकं 'द्युम्नाय' धनलाभाय, 'इषे' अन्नलाभाय च 'शक्रः', शक्तिमान्, 'एव हि'। तस्मात् 'प्रचेतय' अनुगृहाणेत्यर्थः॥

तृतीयामृचमाह। "(३)राये वाजाय वज्रिवः शविष्ठ वज्रिन्नृञ्जसे। मंहिष्ठ वज्रिन्नृञ्जस आयाहि पिब मत्स्व"(३) इति। हे 'वज्रिवः' वज्रयुक्तेन्द्र, 'राये' धनलाभाय, 'वाजाय' अन्नलाभाय, च प्रसन्नो भवेतिशेषः। हे 'शविष्ठ' अतिशयेन बलवन्, 'वज्रिन्' वज्रयुक्तेन्द्र, 'ऋञ्जसे' वर्जयसि, अनिष्टं परिहरसीत्यर्थः। हे 'मंहिष्ठ' अतिशयेन पूज्य, 'वज्रिन्' वज्रयुक्तेन्द्र, 'ऋ-

ऋञ्जसे' सर्वथा त्वमनिष्टं परिहरसि, तस्मात् कारणात् 'आयाहि' अस्मिन् कर्म्मणि आगच्छ, आगत्य च सोमं 'पिब', पीत्वा च 'मत्स्व' हृष्टो भव ॥

चतुर्थीमृचमाह । (४)"विद्मा रायः सुवीर्य्यम्भुवो वाजानां पतिर्वशां अनु । मंहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणां"(४) इति । हे इन्द्र 'रायः' धनस्य, 'सुवीर्य्यं' शोभनसामर्थ्यं, 'विद्मा' वेत्सि, जानासि । अतो धनसाराभिज्ञत्वात् 'भुवः' भूलोकस्य, 'वाजानां' तत्रत्यानामन्नानां, च 'पतिः' पालकः, त्वं 'वशान्' अनु-वशान्त्वदधीनान् यजमानान्, 'अनुगृहाण । हे 'मंहिष्ठ' अति-शयेन पूज्य,'वज्रिन्' वज्रयुक्तेन्द्र,'यः', त्वं 'शूराणां', मध्ये 'शविष्ठः' अतिशयेन बलवान्, तादृशस्त्वं 'ऋञ्जसे' अनिष्टं वर्जयसि, यद्वा अभीष्टं साधयसि । ऋञ्जतिः प्रसाधनकर्मेति निरुक्तेऽभि-धानात् ॥

पञ्चमीमृचमाह । "(५)यो मंहिष्ठो मघोनाञ्चिकित्वो अभि नो नय । इन्द्रो विदे तमु स्तुषे वशी हि शक्रः"(५) इति । हे 'चिकित्वः' अस्मत्सेवाभिज्ञेन्द्र,'यः', त्वं,'मघोनां' धनवतां, मध्ये 'मंहिष्ठः' अतिशयेन पूज्यः, तादृशस्त्वं 'नः' अस्मान्, 'अभिनय' सर्वतो धनं प्रापय । 'इन्द्रः' परमैश्वर्य्ययुक्तः, त्वं, 'विदे' वेत्सि, सेवां जानासि । अतः 'तमु' तमपि यजमानं, 'स्तुषे' स्तौषि, सम्यक्सेवितवानिति प्रशंससि । त्वन्तु 'वशी' सर्ववस्तुविषय-वशीकारवान् । अतएव 'शक्रः' शक्तिमान्, 'हि', तस्मात्तव एतद्यजमानानुग्रहणं युक्तमित्यर्थः ॥

षष्ठीमृचमाह । (६)"तमूतये हवामहे जेतारमपराजितं ।

स नः पर्षदति द्विषः क्रतुश्छन्द ऋतं बृहत्"(६) इति। 'तं इन्द्रं', 'ऊतये' अस्मद्रक्षार्थं, 'हवामहे' आह्वयामः। कीदृशं, शत्रून् युद्धे 'जेतारं', 'पराजयरहितं', 'सः' तादृश इन्द्रः, 'नः' अस्माकं, 'द्विषः' शत्रून्, 'अतिवर्षत्' अतिशयेन विनाशयतु। योयं 'क्रतुः', अस्माभिरनुष्ठीयमानः यदपि 'छन्दः' गायत्र्यादिकं, अस्माभिः प्रयुज्यमानं यदपि 'ऋतं' कर्म्मफलं, तत्सर्वं 'बृहत्' समृद्धं, इतिशेषः॥

सप्तमीमृचमाह। (७)"इन्द्रं धनस्य सातये हवामहे जेतारमपराजितं। स नः पर्षदति द्विषः स नः पर्षदति स्रिधः"(७) इति। 'धनस्य', 'सातये' लाभाय, जयोपेतं पराजयरहितं 'इन्द्रं', आह्वयामः। 'स' च इन्द्रः, 'नः' अस्माकं शत्रून् अतिशयेन विनाशयतु। ये त्वन्ये स्वयं द्वेषं न कुर्वन्ति तथापि 'स्रिधः' अस्माभिर्द्वेष्याः, तानपि 'अतिशयेन विनाशयतु। सर्वत्र हि वेदेषु योस्मान् द्वेष्टि यञ्च वयं द्विष्म इत्यादौ द्वेष्याणां द्वेष्टृणाञ्च विनाशः प्रार्थ्यते॥

अष्टमीमृचमाह। (८)"पूर्वस्य यत्ते अद्रिवः सुम्न आधेहि नो वसो। पूर्त्तिः शविष्ठ शस्यत ईशे हि शक्रः"(८) इति। हे 'अद्रिवः', अद्रयः पर्वताः अस्य सन्तीत्यद्रिवान् इन्द्रो हि पर्वतान् भिनत्ति अतः पर्व्वतेन्द्रयोः भेद्यभेदकलक्षणः सम्बन्धः। यद्वा 'अद्रिरादरणं तद्युक्त हे इन्द्र, 'पूर्वस्य' अस्मदुत्पत्तेः पूर्वसिद्धस्य, 'ते' तव, 'यत्' धनं, अस्ति। हे 'वसो' निवासहेतो इन्द्र, तस्मिन् 'सुम्ने' धने, 'नः' अस्मान्, 'आधेहि' स्थापय। हे 'शविष्ठ' अतिशयेन बलयुक्त, 'पूर्त्तिः' त्वदीयधनपूरणं, 'शस्यते' सर्वैः

यजमानैः प्रशस्यते। प्रशंसाप्रकार एव प्रदर्श्यते। 'शक्रः' शक्तिमानिन्द्रः, 'ईशे हि' सर्वस्यास्मद्रक्षणस्येष्टे खलु, सेयं प्रशंसा॥

नवमीमृचमाह। (९)"नूनन्तं नव्यं सन्यसे प्रभो जनस्य वृत्रहन्। समन्येषु ब्रवावहै शूरो यो गोषु गच्छति सखा सुशेवो अद्वयाः(९)" इति। हे 'वृत्रहन्' शत्रुघातिन्, 'जनस्य प्रभो' सर्वजन्तोः स्वामिन्, 'नव्यं' नूतनं बलितपलितादिलक्षणेन पुराणत्वेन वर्जितं इन्द्रं, 'तं' त्वां, 'नूनं' अवश्यं,'सन्यसे' सम्यङ्नितरां प्रक्षिपामि, अस्मिन् कर्म्मणि हविषो भोक्तृत्वेन स्थापयामि, त्वञ्चाहञ्चेत्यावां उभौ 'अन्येषु', परस्परं 'सम्यक् ब्रवावहै' इतरेषु यजमानेषु अहं गत्वा प्रभूतफलप्रदोयमिन्द्र इत्येवं ब्रवीमि। इतरेषु देवेषु त्वं गत्वा सम्यगनुष्ठातायं यजमान इति प्रब्रूहि। 'यः' यजमानः, अस्ति, सोयं, दक्षिणारूपेण दातव्यासु 'गोषु', 'शूरो गच्छति' उदारः सन् प्रवर्त्तते। इत्येवं मदीयं गुणन्त्वं प्रब्रूहि। इन्द्रोयं 'सखा' सखिवदत्यन्तं स्निग्धः, 'सुशेवः' सष्ठु सेवितुं शक्यः, 'अद्वयाः', एतत्सदृशो द्वितीयो देवो नास्तीत्येवमहं प्रब्रवीमि॥

तदेवमृचो नव व्याख्याताः॥

अथ नव पुरीषपदानि व्याख्यातव्यानि तत्र प्रथमं पदमाह। (१०)"एवा ह्येवैवा ह्यग्नाश्इ"(१०)इति। इणगतावित्यस्माद्धातोराङ्पूर्वान्निष्पन्न एव शब्द आगमनवाची। हे 'अग्ने' 'एवा ह्येव हि' सर्वथा समागच्छ। द्विरुक्तिः स्तुतिश्चादरार्थां। एकारस्य स्थाने प्लुतिरिकारोत्तरा व्याकरणे विहिता॥

अनन्तराणि चत्वारि पदान्याह। (११)"एवा ह्येवैवा हीन्द्र३। एवा ह्येवैवा हि विष्णा३ उ। एवा ह्येवैवा हि पूषा३न्। एवा ह्येवैवा हि देवाः३इ(११) इति। प्रथमपदवद्व्याख्येयं॥

षष्ठं पदमाह। (१२)"एवा हि शक्रो वशी हि शक्रो वशाँ अनु(१२) इति। 'शक्रः' शक्तिमानिन्द्रः, 'एवा हि' आगतः खलु सः च 'शक्रः', 'वशी हि' सर्ववस्तुवशीकारवान् खलु। तादृशो देवः 'वशाँ' अनु' स्वस्य वश्यान् यजमानाननुगृह्णातु॥

सप्तमं पदमाह। (१३)"आयो मन्याय मन्यव उपो मन्याय मन्यवे(१३) इति। य इन्द्रः 'मन्याय, मन्यवे' मन्तव्यमस्मद्धितं मन्तुं, 'आयन्ने समागच्छति। स इन्द्रः 'मन्याय' मन्तव्यमस्मद्धितं 'मन्यवे' मन्तुं, 'उपो' अस्मत्समीप एव तिष्ठतु॥

अष्टमं पदमाह। (१४)"उपेहि विश्वध"(१४) इति। हे 'विश्वध' विश्वस्य धारकेन्द्र, 'उपेहि' अस्मत्समीपे प्राप्नु हि॥

नवमं पदमाह। (१५)"विदा मघवन्विदो३म्(१५) इति। हे 'मघवन्' इन्द्र, 'विदा' वेत्सि सर्वं जानासि। अतोऽस्मद्धितं 'विदा' विद्धि जानीहि चित्तेवधारय। 'ओम्' अस्तु श्रेयः, अस्माकमितिशेषः। तदिदं नवसङ्ख्याकानामृचां पुरीषपदानाञ्च प्रतिपादकं ग्रन्थजातं यद्यपि कर्मकाण्डे पठितुं युक्तं तथाप्यारण्य एवाध्येतव्यमित्यभिप्रेत्य चतुर्थारण्यकत्वेनात्र पठितं॥ १॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीविद्यातीर्थमहेश्वरापरावतारस्य वैदिकमार्गप्रवर्त्तकस्य श्रीवीरबुक्कमहाराजस्याज्ञापालकेन सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऐतरेयारण्यके चतुर्थारण्यके प्रथमोऽध्यायः।

समाप्तञ्च चतुर्थारण्यकम्।

---

# ऐतरेयारण्यकम् ।

पञ्चमम् ।

हरिः ओम् ।

(१)महाव्रतस्य पञ्चविंशतिं सामिधेन्यः(१)(२)एकविंशतौ प्रागुपोत्तमायाः समिधाग्निमिति चतस्रः(२) (३)वैश्वकर्मण ऋषभ उपालम्भनीय उपांशु(३) (४)आज्यप्रउगे विश्वजितः(४) (५)होत्राश्चतुर्विंशात्(५)(६)इंङ्खयन्तीरपस्युव इति च ब्राह्मणाच्छंस्यावपेत प्रातःसवने तीव्रस्याभिवयसो अस्य पाहीति माध्यन्दिने(६) (७)त्रिकद्रुकेषु महिषो यवाशिरमिति स्तोत्रिय एन्द्र याह्युप नः परावत इन्द्राय हि द्यौरसुरो अनम्नत ॥ प्रोष्वस्मै पुरो रथमित्यतोऽनुरूपः(७)(८)चतुर्विंशान्मरुत्वतीयस्याताऽनोऽसत्सु मे जरितः साभिवेगः पिबा सोममभियमुग्रतर्दः कया शुभा सवयसः सनीड़ा मरुत्वां इन्द्र वृषभो रणाय(८) (९)जनिष्ठा उग्रः सहसे तुरायेति मरुत्वतीयं(९) (१०)संस्थिते मरुत्वतीये होता विसंस्थितसञ्चरेण निष्क्रम्याग्नीध्रीये तिस्र आज्याहुतीर्जुहोत्यौदुम्बरेण स्रुवेण(१०) (११)अनु मामिन्द्रो अनु मां

बृहस्पतिरनु सोमो अनु वागद्र्यावीत् अनु मां मित्रा-
वरुणाविहावतामनु द्यावापृथिवी पूर्वहूतौ(११)(१२)आ-
दित्या मा विश्वे अवन्तु देवाः सप्त राजानो य उदा-
भिषिक्ताः॥ वायुः पूषा वरुणः सोमो अग्निः सूर्यो नक्ष-
त्रैरवत्विह मा नु(१२)॥ (१३)पितरो मा विश्वमिदञ्च
भूतं पृश्निमातरो मरुतः स्वर्काः। ये अग्निजिह्वा उत वा
यजत्रास्ते नो देवाः सुहवाः शर्म यच्छन्तेति(१३) (१४)द-
क्षिणे मार्जालीये दशन्नुच्युत्तमां चतुर्गृहीतं पूर्वमवदा-
योत्तरतोऽग्नेरुपनिधाय विहरणप्रभृति मध्यन्दिने मार्जा-
लीये जागरितो भवति तस्मिन् परिवृते जुहोति प्राग्-
द्वारे वोदग्द्वारे वा(१४) (१५)अग्निरिवानाधृष्यः पृथिवीव
सुषदाभूयासं(१५) (१६)अन्तरिक्षमिवानाप्यं द्यौरिवाना-
धृष्यो भूयासं(१६) (१७)सूर्य इवाप्रतिधृष्यश्चन्द्रमा इव
पुनर्भूर्भूयासं(१७) (१८)मन इवापूर्वं वायुरिव श्लोकभू-
र्भूयासं(१८) (१९)अहरिव स्वं रात्रिरिव प्रियो भूयासं(१९)
(२०)गाव इव पुनर्भुवो मिथुनमिव मरीचयो भूयासं(२०)
(२१)आप इव रस ओषधय इव रूपं भूयासं(२१)(२२)अन्न-
मिव विभु यज्ञ इव प्रभुर्भूयासं(२२) (२३)ब्रह्मेव लोके
क्षत्रमिव श्रियां भूयासं(२३) (२४)यदग्र एषा समितिर्भवा-
तीति(२४) (२५)अन्न विभजाथ वीथेति त्रीण्यनन्वूचं(२५)

(२६)अत्र तिष्ठन्नादित्यमुपतिष्ठन्ते पर्यावृत्ते प्रदक्षिणमावृत्त्यै तैस्तैवास्वाहाकारैरेत्त्वेवा३ इदं मधू३ इदं मधु इमन्तोत्र-सुतं पिबा३ इदं मधू३ इदं मध्विति च(२६) (२७)प्रेष्याः संप्रास्ति पूर्णकुम्भास्तिस्रोऽवमाः षडुत्तमाः(२७) (२८)इमं धिष्ण्यमुदकुम्भञ्च त्रिः प्रदक्षिणं परिव्रजाथ दक्षिणैः पाणि-भिर्दक्षिणानूरूनाघ्नाना एत्येवा३ इदं मधू इदं मध्विति वदत्यः(२८) ॥ १ ॥

ऐतरेयारण्यकभाष्यम् ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
ऐतरेयब्राह्मणेऽस्ति काण्डमारण्यकाभिधम् ।
महाव्रतप्रयोगोऽस्मिन् पञ्चमारण्यकोदितः ॥

त्रिविधं महाव्रताख्यं कर्म, एकाहरूपं, अहीनावयवरूपं, सत्रावयवरूपञ्चेति । तस्य त्रिविधस्यापि हौत्रप्रयोगं वक्तुमुप-क्रमते । (१)"महाव्रतस्य पञ्चविंशतिं सामिधेन्यः"(१)इति । ननु प्रथमारण्यकेऽपि अथ महाव्रतमिन्द्रो वै वृत्रं हत्वेत्यादिना महाव्रतप्रयोगोऽभिहितः । पञ्चमेऽपि तस्यैवाभिधाने पुनरुक्तिः स्यात् । नायं दोषः । सूत्रब्राह्मणरूपेण तयोर्विभेदात् । पञ्चमारण्यकमृषिप्रोक्तं सूत्रं । प्रथमारण्यकन्त्वपौरुषेयं ब्राह्मणं । अतएव तत्रार्थवादप्रपञ्चेन सहिता विधयः श्रूयन्ते । पञ्चमे तु न

कोऽप्यर्थवादोऽस्ति। शाखान्तरगताश्च मन्त्रा बहव उपलभ्यन्ते। तस्मादथैतस्य समाम्नायस्येत्यादिद्वादशाध्यायवत् 'महाव्रतस्य पञ्चविंशतिं' इत्यादि पञ्चमारण्यकं सूत्रमेव। अरण्य एवैतदध्येयमित्यभिप्रेत्याध्येतार आरण्यकाण्डेऽन्तर्भाव्याधीयते। एतस्मिन् पञ्चमारण्यके सूत्रकारेणाभिधीयमानं महाव्रताख्यं कर्म गवामयने सत्रे समुत्पन्नं। अत एवाध्वर्युशाखायां गावो वा एतत् सत्रमासतेत्यादिके गवामयनप्रकरणे देवानां वा सन्तं जग्मुरित्यादिकेनानुवाकत्रयेण महाव्रतमाम्नातं, न तु तस्यामेव शाखायां। अन्यान्तरे प्रजापतिः प्रजाः सृष्ट्वा वृत्तोऽशयदित्यनुवाकेन तदाम्नातमितिचेत्। आम्नायतां नाम तस्याप्यनुवाकस्य गवामयनप्रकरणगतत्वं। न चैतान्यहानि भवन्तीत्यादिके गवामयनप्रतिपादकेऽनुवाकपञ्चके प्रजापतिः प्रजाः सृष्ट्वेत्याद्यनुवाकः पञ्चमत्वेनाम्नातः। उद्गातृवेदेऽपि गावो वा इत्याद्यारभ्य समाम्नायते। गवामयनप्रकरणे प्रजापतिः प्रजा असृजतेत्यादिना महाव्रताख्यमेकमहराम्नातं। तच्च सत्रस्योपान्त्यमहः। उदयनीयाख्यादन्तिमादह्नः समनन्तरपूर्वभावित्वात्। तथा चापस्तम्बः। सन्तिष्ठते महाव्रतमित्येतदहः समाप्यानन्तरं व्याख्याय उदयनीय इत्युदयनीयाख्यं चरममहः प्रोवाच। तस्मात् सत्रे समुत्पन्नस्य महाव्रतस्य वचनबलात्सत्राद्बहिरप्येकाहरूपेणाहीनगतत्वेन च पृथक् प्रयोगो भवति। यथा राजसूयोत्पन्नाया अवेष्टेर्वचनात् पृथक् प्रयोगः। यथा वा राजसूयोत्पन्नानां चातुर्मास्यानां अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीति वचनेन पृथक् स्वतन्त्रप्रयोगः। तद्वदेकाहपक्षे

स्वातन्त्र्यं। अहीनत्वपक्षे तु पौण्डरीकनाम्न एकादशरात्रस्य इदं दशममहर्भवति। तथा चापस्तम्बोऽथैकेषामत्यायन् गाः पञ्चाहस्त्वारम्भश्छन्दोगा महाव्रतं विश्वजित्सर्वपृष्ठोऽतिरात्र इति पौण्डरीकाहःकॢप्तिमुक्तवान्। अथ सत्रे समुत्पन्नं महाव्रतं प्रकृतिः। एकाहरूपमहीनरूपञ्च विकृतिः। अतः सत्रगतस्य महाव्रतस्य प्राधान्येन प्रयोग इहोपदिश्यते। ननु तस्यापि महाव्रतस्य परम्परयाग्निष्टोमविकृतित्वेन सोमयागरूपत्वात् सोमयागे च स्तोत्रशस्त्रादिवत्सामिधेनीनामङ्गत्वाभावात् पञ्चविंशतिं सामिधेनीविधानमयुक्तमितिचेत्। नायं दोषः। सोमयागस्य सामिधेन्यपेक्षाराहित्येऽपि तदङ्गभूतस्य सवनीयस्य पशोस्तदपेक्षत्वात्। आनर्थक्यात्तदङ्गेष्विति न्यायेन प्रधानेनान्वय-रहितस्य तदङ्गान्वयोपपत्तेः। अतोऽङ्गद्वारा सामिधेनीनां महाव्रतस्येति सम्बन्धवाचिनी षष्ठी युज्यते। 'पञ्चविंशतिं', इति द्वितीया प्रथमान्तत्वेन परिणेतव्या। 'सामिधेन्यभिधा ऋचः, पञ्चविंशतिसङ्ख्याका इत्यर्थः। सम्यगिध्यते ज्वाल्यतेऽग्नि-र्याभिर्ऋग्भिस्ताः 'सामिधेन्यः'। तथा चोक्तं। ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धने इति। सवनीयस्य पशोः प्रोक्षणादूर्ध्वमध्वर्युणा प्रेषितो होता सामिधेनीरनुब्रूयात्। तथा चापस्तम्ब आह। उपरिष्टादधस्तात्सर्वतश्च प्रोक्ष्य वेदं निधाय सामिधेनीभ्यः प्रतिपद्यत इति॥

तासु सामिधेनीषु पञ्चविंशतिसङ्ख्यापूरणप्रकारं दर्श-यति। (२)"एकविंशतौ प्रागुपोत्तमायाः समिधाग्निमिति चत-स्रः"(२) इति। मूलप्रकृतौ दर्शपूर्णमासेष्टौ प्र वो वाजा इत्याद्या

ऋचः* एकादशसङ्ख्याकाः सामिधेनीरूपाः शाखान्तरे कस्मिं-श्चिदनुवाके समाम्नाताः। बह्वृचानान्तु तत्र तत्राम्नाताः। तासामेकादशानां मध्ये त्रिः प्रथमामन्वाह त्रिरुत्तमामिति वचनानुसारेणावृत्तौ सत्यां पञ्चदश सम्पद्यन्ते। ताश्चातिदेशपरम्परया गवामयनगते विषुवन्नामके मध्यमेऽह्नि सवनीये पशौ प्राप्ताः। तासां पञ्चदशानां मध्ये समिध्यमानो अध्वरे समिद्धो अग्न आहुतेत्यनयोर्ऋचोरन्तराले पृथु पाजा इत्यादिकाः षडृचः प्रक्षेपणीयाः। तथा चाश्वलायन आह। पृथु पाजा अमर्त्य इति षट् धाय्याः सामिधेनीनामिति। सेयमेकविंशतिर्विषुवाहर्गता महाव्रते चोदकेन प्राप्ताः। तस्यां 'एकविंशतौ', येयं 'उपोत्तमा समिद्धो अग्न आहुतेत्येवंरूपा, तस्याः पूर्वं 'समिधाग्निन्दुवस्यतेत्याद्याः 'चतस्रः', ऋचः, प्रक्षेपणीयाः। तथा च सति पञ्चविंशतिसङ्ख्या पूर्य्यते॥

ता एताः सामिधेन्यो यस्य पशोरङ्गन्तमिमं पशुं दर्शयति। (२)"वैश्वकर्मण ऋषभ उपालम्भनीय उपांशु"(२) इति। विश्वकर्मा देवता यस्यासौ 'वैश्वकर्मणः', 'ऋषभः' समर्थः, 'उप' समीपे, 'आलम्भनीयः'। ऐतरेयिणामयं पशुः समुच्चीयते। इतरशाखिनान्तु विकल्पः। तदा एताः सामिधेन्यो न भवन्ति। सप्तदशेष्टिपशुसमन्वानामिति सप्तदशैव सामिधेन्यो भवन्ति। तस्मिन् पशौ याज्यादिमन्त्राः 'उपांशु', यथा भवन्ति तथा प्रयोक्तव्याः। उपांशुरूपस्योच्चारणस्य लक्षणं प्रातिशाख्ये अभिहितं।

---

* ऋग्वेदे म०३, सू०२७, ऋ०१।

करणवदशब्दममनःप्रयोगमुपांश्विति। करणवदोष्ठव्यापारयुक्तन्तु मनःप्रयोगमात्रं। तच्च परैरश्रवणादशब्दं॥

अथ प्रातःसवने होतुः शस्त्रद्वयं दर्शयति। (४)“आज्यप्रउगे विश्वजितः”(४) इति। यदेतत् ‘आज्यनामकं प्रातःसवने होतुः शस्त्रं यच्च ‘प्रउगनामकं तदुभयं विश्वजिन्नाम्न एकाहादस्मिन् महाव्रतेऽतिदिशेत्। स च विश्वजिदाख्य एकाहोऽग्निष्टोमस्य विकृतिः। अग्निष्टोमो ह्यृतुग्रहभक्षणादूर्ध्वं होता निविल्पदान्युच्चार्य प्र वो देवायेत्यादिकमाज्यनामकं शस्त्रं शंसेत्। तथा चाश्वलायन आह। उत्तमेन पदेन प्र वो देवायेत्याज्यमुपसन्तनुयादिति*। वैश्वदेवग्रहभक्षणादूर्ध्वं होता वायुरग्रेगा इत्यादिकं प्रउगनामकं शस्त्रं शंसेत्। तदप्याश्वलायनेनोक्तं वायुरग्रेगा यज्ञप्रीरिति समानां पुरोरुचां तस्यास्तस्या उपरिष्टात्तृचं तृचं शंसेत्। वायवायाहि दर्शतेति सप्त तृचा द्वितीयां प्रउगे निरिति। तदिदं शस्त्रद्वयं विश्वजिति चोदकेन प्राप्तं। तत्र तदाज्यमपोह्यान्यदाज्यं सूत्रेण विहितं, विश्वजितो अग्निं नर इत्याज्यमिति। प्रउगन्तु प्राकृतमेव। तदिदं विश्वजिद्गतमुभयं महाव्रते शंसनीयं॥

मैत्रावरुणादीनां शस्त्रविशेषान् दर्शयति। (५)“होत्राश्चतुर्विंशात्(५)” इति। मैत्रावरुणो ब्राह्मणाच्छंस्यच्छावाकश्चेति त्रयो होत्रकाः, तैः शंसनीयाः शस्त्रविशेषाः ‘होत्राः’, ते ‘चतुर्विंशनामकादेकाहादतिदेष्टव्याः। मूलप्रकृतौ त्वग्निष्टोमे मैत्रावरुणस्थानो मित्रावरुणेत्यादिकं शस्त्रं। ब्राह्मणाच्छंसिनस्त्वायाहि

* ऋग्वेदे म०२, सू०१२, ऋ०१।

सुषु माहितमित्यादिकं* शस्त्रं। अच्छावाकस्येन्द्राग्नी आगतमित्यादिकं शस्त्रं†। चतुर्विंशे तु तानि नैष्पपोत्यान्यानि विहितानि। ता नः शक्तं पार्थिवस्येत्यादि‡ मैत्रावरुणस्य। सुरूपकृत्नुमित्यादिकं§ ब्राह्मणाच्छंसिनः। आ सुते सिञ्चत श्रियमित्यच्छावाकस्य¶। त एते शस्त्रविशेषा होत्रशब्दाभिधेया महाव्रते पठनीयाः॥

अथ चतुर्विंशादेकाहादभ्यधिकं विशेषं महाव्रते दर्शयति। (६)"ईङ्खयन्तीरपस्युव इति च ब्राह्मणाच्छंस्यावपेत प्रातःसवने तीव्रस्याभिवयसो अस्य पाहीति माध्यन्दिने"(६)इति। स चतुर्विंशातिदेशेन 'ब्राह्मणाच्छंसी', पूर्वोक्तं सुरूपकृत्नुमूतय इत्यादिकं पठित्वा पश्चात् 'ईङ्खयन्तीरपस्युवः', इत्यादिकमपि पञ्चर्चं 'आवपेत'। तथा 'माध्यन्दिने सवने', स एव 'ब्राह्मणाच्छंसी', चतुर्विंशातिदेशेन प्राप्तं, आ नो विश्वासु हव्य इत्यादिकं‖ पठित्वा पश्चात् 'तीव्रस्याभिवयसो अस्य', इत्यादिकं** पञ्चर्चं पठेत्। अत्रोभयत्र सूक्तप्रतीकाभिप्रायेण पञ्चर्चमिति केश्चिद्व्याख्यातं। अन्ये तृचं पादग्रहण इति परिभाषानुसारेण एकैकामृचं पठेदिति व्याचक्षते॥

अस्मिन्नेव शस्त्रे ब्राह्मणान्तरानुसारेण कञ्चिद्विशेषं दर्शयति। (७)"त्रिकद्रुकेषु महिषो यवाशिरमिति स्तोत्रिय एन्द्र याह्युप नः परावत इन्द्राय हि द्यौरसुरो अनम्नत प्रोष्वस्मै पुरो रथमित्य-

---

* ऋग्वेदे म०८ सू०१७, ऋ०१।
† ऋग्वेदे म०३, सू०१२, ऋ०१।
‡ ऋग्वेदे म०५, सू०६८, ऋ०३।
§ ऋग्वेदे म०१, सू०४, ऋ०१।
¶ ऋग्वेदे म०८, सू०७१, ऋ०१३।
‖ ऋग्वेदे म०८, सू०२२, ऋ०१७।
** ऋग्वेदे म०१०, सू०१६०, ऋ०१।

तोऽनुरूपः''(७) इति। स्तोत्रस्य सम्बन्धी 'स्तोत्रियः' तृचः, एकं साम तृचे क्रियते। स्तोत्रियमिति सामगैराम्नानात्तृचस्य स्तोत्रियत्वं। 'त्रिकद्रुकेषु' इत्यादिकस्तृचः *शस्त्रस्यादौ प्रयोक्तव्यः। 'अनु'पश्चात्, रूप्यते पठ्यते इति 'अनुरूपः', द्वितीयस्तृचः। तस्मिन् 'एन्द्र याहि' इत्यृक् प्रथमा †। 'इन्द्राय हि' इति द्वितीया‡। 'प्रोष्वस्मै' इति तृतीया§। तावेतौ द्वौ तृचौ शस्त्रस्यादौ पठेदित्यर्थः॥

अथ माध्यन्दिने सवने होतुः शस्त्रे मरुत्वतीये विशेषं दर्शयति। (८)''चतुर्विंशान् मरुत्वतीयस्याताननोऽसत्सु मे जरितः साभिवेगः पिबा सोममभियमुग्रतर्दः कया शुभा सवयसः सनीडा मरुत्वां इन्द्र वृषभो रणाय''(८) इति। त्रिषु मरुत्वतीयग्रहेषु मध्ये तृतीयस्य 'मरुत्वतीयस्य', होमात् पूर्वं पठनीयं मरुत्वतीयाख्यं शस्त्रं। तच्च मूलप्रकृतौ आ त्वा रथमित्यादिकं¶। तस्य विश्वजित्यतिदिष्टस्य सन्त्यन्ये विशेषाः, तैर्विशेषैः सह तन्मरुत्वतीयं महाव्रतेऽतिदेष्टव्यं। तस्य चातिदिष्टस्य 'मरुत्वतीयस्य', चतुर्विंशस्थितान्मरुत्वतीयात् 'आतानः' पुनरपि विस्तारः, भवति। तस्मिन् नूतने विस्तारे प्रथमं 'असत्सु मे जरितः' इत्येकं सूक्तं। ततः‖ 'पिबा सोममभियं' इति द्वितीयं। 'कया शुभा' इति तृतीयं। 'मरुत्वां इन्द्र' इति चतुर्थं। सोऽयमधिको विस्तारः॥

---

* ऋग्वेदे म०१, सू०२२, ऋ०१।
† ऋग्वेदे म०१, सू०१३०, ऋ०१।
‡ ऋग्वेदे म०१, सू०१३१, ऋ०१।
§ ऋग्वेदे म०१०, सू०१३३, ऋ०१।
¶ ऋग्वेदे म०८, सू०९८, ऋ०१।
‖ ततेति क०, ग० च।

तत ऊर्ध्वं प्राकृतेनैव सूक्तेन शस्त्रस्य समाप्तिं दर्शयति। (९)"जनिष्ठा उग्रः सहसे तुरायेति मरुत्वतीयं"(९) इति। यथा प्रकृतौ 'जनिष्ठा उग्रः', इत्यनेन सूक्तेन शस्त्रं समापितं, तथात्रापि तेनैव 'मरुत्वतीयं', शस्त्रं, समापनीयं॥

तत्समाप्तेरूर्ध्वं होतृकर्तृकं होमं विधत्ते। (१०)"संस्थिते मरुत्वतीये होता विसंस्थितसञ्चरेण निष्क्रम्याग्नीध्रीये तिस्र आज्याहुतीर्जुहोत्यौदुम्बरेण स्रुवेण"(१०) इति। 'संस्थिते' समाप्ते, सम्यक् चरत्यनेनेति 'सञ्चरो मार्गः, स च द्विविधः, संस्थितसञ्चरो 'विसंस्थितसञ्चरश्चेति। सवने समाप्ते सदसः पश्चिमद्वारेण निर्गच्छति सोऽयं संस्थितसञ्चरः। असमाप्ते तु प्राग्द्वारेण,सोऽयं 'विसंस्थितसञ्चरः। तेन 'निष्क्रम्य' उदङ्मुखो गत्वा, 'अग्नीध्रीये', धिष्ण्ये, 'तिस्र आज्याहुतीः', जुहुयात्॥

तत्र प्रथमाहुतेर्मन्त्रमाह। (११)"अनु मामिन्द्रो अनु मां बृहस्पतिरनु सोमो अनु वाग्देव्यावीत्। अनु मां मित्रावरुणाविहावतामनु द्यावापृथिवी पूर्वहूतौ"(११) इति। 'इन्द्रः' देवः, 'इह' कर्मणि, 'मां', 'अनुगम्य 'आवीत्' अवतु। एवं 'बृहस्पतिसोमसरस्वतीमित्रावरुणद्यावापृथिव्यः 'मां', अवन्तु। 'पूर्वहूतौ' पूर्वमाहूतौ, तदेतन्मित्रावरुणयोर्विशेषणं। यद्वा लिङ्गव्यत्ययेन द्यावापृथिव्योर्विशेषणं॥

द्वितीयाहुतेर्मन्त्रमाह। (१२)"आदित्या मा विश्वे अवन्तु देवाः सप्त राजानो य उदाभिषिक्ताः। वायुः पूषा वरुणः सोमो अग्निः सूर्यो नक्षत्रैरवत्विह मान्"(१२) इति। अदितेः पुत्राः 'आदित्याः', ते चाष्टसङ्ख्याकाः। अष्टौ पुत्रासो अदितेरिति

श्रुत्यन्तरात्। तदनुक्रमणञ्च तत्रैवाम्नायते।ताननुक्रमिष्यामः, मित्रश्च वरुणश्च धाता चार्यमा च अंशश्च भगश्च इन्द्रश्च विवस्वांश्चेत्येत इति। ते एते 'विश्वे' सर्वेऽपि, 'देवाः', मां 'अवन्तु'। 'य उद्रा' य एवान्ये, द्युलोकप्रकाशनार्थं 'अभिषित्ताः', 'सप्तसङ्ख्याका आरोगादिनामकाः 'राजानः', सन्ति, तेऽपि मां 'अवन्तु'। आरोगादयोऽपि श्रुत्यन्तरे समाम्नाताः। आरोगो भ्राजः पटरः पतङ्गः स्वर्णरो ज्योतिषोमान्विभासः। ते अस्मै सर्वे दिवमातपन्तीति। तथा 'वायुः', 'इह' कर्मणि, मां 'अनु'गम्यावतु। पूषादिष्वपि तथा योजनीयं॥

तृतीयाहुतिर्मन्त्रमाह। (१३)"पितरो मा विश्वमिदञ्च भूतं पृश्निमातरो मरुतः स्वर्काः। ये अग्निजिह्वा उत वा यजत्रास्ते नो देवाः सुहवाः शर्म यच्छन्तेति"(१३) इति। ये 'पितरः' अग्निष्वात्तादयः, ते मामवन्त्विति शेषः। न केवलं मामेव किन्तु 'इदं', 'विश्व" सर्वं, 'भूतं' प्राणिजातं, 'च', अवन्तु। पृश्निर्माता येषां मरुतां ते 'पृश्निमातरः', तथा च मारुतसूक्ते समाम्नातं। पृश्नेः पुत्रा उपमासोरभिष्ठा इति। तथा ब्राह्मणान्तरं। पृश्नियै* वै पयसो मरुतो जाता इति। पृश्निर्गोमूर्तिर्देवता। तदप्यन्यत्राम्नातं। अङ्गिरसो वै सत्रमासत तेषां पृश्निर्घर्मदुघासीदिति। ते च 'मरुतः', 'स्वर्काः' सुष्ठु अर्चनीयाः, तेऽपि प्रियङ्गुचर्वादिभिरर्च्यन्ते। पृश्नियै* दुग्धे प्रैयङ्गवञ्चरुन्निर्वपेन् मरुद्भ्य इति श्रुतेः। तादृशाः 'मरुतः', मामवन्तु। अग्निरेव जिह्वा येषान्ते 'अग्निजिह्वाः', अग्नौ हुतं हविर्भक्ष-

---

* पश्नये इति क०, ग० च।

यन्तीत्यर्थः। तादृशाः देवाः 'ये', सन्ति। 'उ तवा' अपिचेत्यर्थः, 'यजत्राः' यजनीयाः, पीठादौ गन्धपुष्पादिभिरर्चनीयाः, समर्पितं नैवेद्यं भक्षयन्ति, तादृशाश्च 'ये', सन्ति, उभयविधा अपि देवाः। अन्यत्र स्पष्टमाम्नायन्ते। हुतादो वा अन्ये देवा अहुतादो अन्ये इति। 'ते' तादृशाः, 'देवाः', यूयं, 'सुहवाः' सुखेनाह्वातुं शक्याः सन्तः, 'नः' अस्मभ्यं, 'शर्म' सुखं, 'यच्छत', 'इति'-शब्दो मन्त्रत्रयसमाप्त्यर्थः॥

होमान्तरं विधत्ते। (१४)"दक्षिणे मार्जालीये दश स्रुचुत्तमां चतुर्गृहीतं पूर्वमवदायोत्तरतोऽग्नेरुपनिधाय विहरणप्रभृति माध्यन्दिने मार्जालीयो जागरितो भवति तस्मिन् परिवृते जुहोति प्राग्द्वारे वोदग्द्वारे वा प्रागुदग्द्वारे वा"(१४) इति। सदोहविर्धानयोर्मध्ये योऽयं दक्षिणोत्तरायतः सञ्चरः तस्योत्तरभागे यथा आग्नीध्रीयो धिष्ण्यः, तथा दक्षिणभागे मार्जालीयनामको धिष्ण्यः, तस्मिन् 'दशसङ्ख्याका आहुतीः 'जुहोति', इत्यनुवर्तते। तत्रायं प्रयोगप्रकारः। 'उत्तमां', दशमीमाहुतिमुद्दिश्य 'स्रुचि' जुह्वां, 'चतुर्गृहीतं', आज्यं प्रथमं 'अवदाय', तदाज्यविशिष्टान्तां स्रुचं मार्जालीयस्य 'अग्नेः', 'उत्तरभागे स्थापयित्वा, दशमाहुतेः पूर्वभाविनीर्नवाहुतीः स्रुवेण 'तस्मिन् मार्जालीये', जुहुयात्। स च मार्जालीयः 'परिवृतः परितः कटादिभिराच्छादितो भवति। तत्र होमार्थं प्रवेशद्वारं प्राच्यामुदीच्यामैशान्यां 'वा', इति त्रिधा विकल्पितं। यद्यप्येतद्धोमकालात् पूर्वं मार्जालीये विहृतस्याग्नेश्चिरकालव्यवधानमस्ति, तथापि माध्यन्दिने सवने विहरणकालमारभ्य 'मार्जालीयधिष्ण्यगतोऽग्नि-

यथा न शाम्यति, तथा 'जागरितः' काष्ठप्रक्षेपेण पुनः पुनः प्रज्वलितः, 'भवति' ॥

तस्मिन् होमे प्रथमं मन्त्रमाह। (१५)"अग्निरिवानाधृष्यः पृथिवीव सुषदा भूयासम्"(१५) इति। यथा 'अग्निः', तीव्रत्वान्न केनापि तिरस्कर्त्तुं शक्यः, एवमहमप्यतिरस्कार्य्यः 'भूयासं'। यथा च 'पृथिवी', सुष्ठु स्थैर्य्येणावतिष्ठते, एवमहमपि 'भूयासं'। शोभनं सदोऽवस्थानं यस्य मम सोऽहं 'सुषदाः' ॥

द्वितीयं मन्त्रमाह। (१६)"अन्तरिक्षमिवानाप्यं द्यौरिवानाधृष्यो भूयासम्"(१६) इति। यथा 'अन्तरिक्षं', पादचारिणा विरोधिना शत्रुणा प्राप्तुं न शक्यं, यथा च द्युलोको मानुषेण शत्रुणा तिरस्कर्त्तुमशक्यः, एवमहमपि शत्रुभिरप्राप्तः 'अनाधृष्यः', च 'भूयासम्' ॥

तृतीयं मन्त्रमाह। (१७)"सूर्य्य इवाप्रतिष्ठ्यश्चन्द्रमा इव पुनर्भूर्भूयासम्"(१७) इति। यथा 'सूर्य्यः', स्वस्मादप्यधिकस्य तेजस्विनः प्रतिकूलस्याभावादतिरस्कार्य्यः। यथा वा 'चन्द्रमाः' कृष्णपक्षे क्षीणोऽपि शुक्लपक्षे पुनः प्रादुर्भवति। एवमहमपि परैरतिरस्कार्य्य एव 'भूयासं'। एकेनापि* निमित्तेन कदाचित्सत्यपि तिरस्कारे तत्परिहारेण पुनरप्यूर्जितः 'भूयासम्' ॥

चतुर्थं मन्त्रमाह। (१८)"मन इवापूर्व्वं वायुरिव श्लोकभूर्भूयासम्"(१८)। यथा 'मनः', उत्तरोत्तराभिवृद्धिकाङ्क्षया प्रयतमानं सत् तत्फलप्राप्त्या नूतनं रूपं प्रतिपद्यते। एवमहम-

---

* केनापीति क०, ग० च।

त्युत्तरोत्तराभिवृद्ध्या नूतनः 'भूयासं'। 'श्लोकः' सङ्घः। यथा 'वायुः', आषाढादिमासे समुद्रतीरादिदेशे वा स्वयमुत्पद्य उत्तरोत्तराभिवृद्ध्या सङ्घरूपो भवति। एवमहमपि पुत्रपौत्रादिसङ्घरूपेणोत्पन्नः 'भूयासं'॥

पञ्चमं मन्त्रमाह। (१९)"अहरिव स्वं रात्रिरिव प्रियो भूयासम्"(१९) इति। 'अहः', यथा प्रकाशेनान्धकारन्निवर्त्य वाणिज्यसेवादिना 'स्वं' धनं, सम्पादयति। एवमहमपि धनसम्पादकः 'भूयासं'। यथा च 'रात्रिः', विश्रामादिसुखहेतुतया प्रिया। एवमहमपि सर्वेषां प्रियः 'भूयासम्'॥

षष्ठं मन्त्रमाह। (२०)"गाव इव पुनर्भुवो मिथुनमिव मरीचयो भूयासम्"(२०) इति। यथा 'गावः', संवत्सरे संवत्सरे वत्सरूपेण पुनरुत्पत्तिमत्यः। एवमहमपि च पुत्रादिरूपेण पुनः पुनः 'भूयासम्'। यथा चोमामहेश्वरलक्ष्मीनारायणादि-'मिथुनं', तेजस्वित्वेन प्रसिद्धं। एवमहमपि 'मरीचयः' मरीचिमांस्तेजस्वी, 'भूयासम्'॥

सप्तमं मन्त्रमाह। (२१)"आप इव रस ओषधय इव रूपं भूयासम्"(२१) इति। 'आपः', यथा रसवत्यः, एवमहं 'रसः' मधुराम्लादिरससम्पन्नः, 'भूयासं'। 'ओषधयः', यथा पक्वाः सत्यो रमणीयरूपयुक्ता दृश्यन्ते। एवमहमपि 'रूपं' पुष्टिकान्त्यादिना रमणीयरूपयुक्तः, 'भूयासम्'॥

अष्टमं मन्त्रमाह। (२२)"अन्नमिव विभु यज्ञ इव प्रभूर्भूयासम्"(२२) इति। 'अन्नं', यथा भक्ष्यभोज्यलेह्यचोष्यरूपेण विविधं भवति। एवमहमपि 'विभुः' धनविद्यासम्पत्त्या विविधः,

'भूयासं'। यथा 'यज्ञः' ज्योतिष्टोमादिः, स्वर्गादिफलप्रदाने समर्थः, एवमहमपि 'प्रभुः' पुत्रभृत्यादिपोषणे समर्थः 'भूयासं'॥

नवमं मन्त्रमाह। (२३)"ब्रह्मेव लोके क्षत्रमिव श्रियां भूयासं"(२३) इति। यथा 'ब्रह्म' ब्राह्मणः, 'लोके', श्रेष्ठः, एवमहमपि श्रेष्ठः 'भूयासं'। यथा च 'क्षत्र', राज्यगजाश्वादि'श्रियां',* अधिपतिः, एवमहमपि सर्वसम्पदामधिपतिः, 'भूयासं'॥

अथ स्रुचि चतुर्गृहीतेनाज्येन होतुं मन्त्रस्य प्रतीकं दर्शयति। (२४)"यदग्न एषा समितिर्भवातीति†"(२४)इति। सोऽयं मन्त्रः संहिताग्रन्थे द्रष्टव्यः। 'इति'शब्दो दशाहुतिमन्त्रसमाप्त्यर्थः॥

अस्मिन् दशमे मन्त्रे शाखान्तरगतस्य पाठस्यानुपादेयतां दर्शयति। (२५)"अत्र विभजाथ वीथेति त्रीण्यनन्वृचम्"(२५) इति। यदग्न एषेत्येतस्यामृचि 'त्रीणि', पदानि, शाखान्तरेऽन्यथा पठितानि, तानि 'अनन्वृचं' ऋगनुसारीणि न भवन्ति। कानि तानि पदानीत्याशङ्क्य प्रदर्श्यन्ते। 'अत्र', इत्येकं पदं। 'विभजाथ', इति द्वितीयं। 'वीथ', इति तृतीयं। तस्यामृचि रत्ना च यद्विभजासि स्वधाव इति तृतीयः पादः। तस्य चायमर्थः हे स्वधावः, अन्नवन् अग्ने, रत्ना च यत् रत्नान्यपि यानि विभजासि पृथक्करोषीति। तस्मिन् पादे रत्नानामनुवादद्योतनाय यच्छब्दोऽपेक्षितः। अग्नेरेकस्य सम्बोध्यमानत्वाद् विभजासीत्येकवचनमपेक्षितं। अतस्तदुभयमृगनुसारि। शाखान्तरे तु तदुभयं परित्यज्य अत्र विभजाथेति पदद्वयं

---

* राज्यगवाश्वादिश्रियामिति क०, ग० च।

† ऋग्वेदे म०१०, सू०११, ऋ०८।

पठितं। तद्वयमनुसारि न भवति। यथोक्तानुवादाभावात्। बहुवचनस्यानन्वितत्वाच्च। तथा चतुर्थपाद एवमाम्नायते। भागं नो अत्र वसुमन्तं वीतादिति। तस्यायमर्थः। हे अग्ने अत्रास्मिन् कर्म्मणि नोऽस्माकं वसुमन्तं भागं बहुधनोपेतं भाग्यं वीतात् विशेषेण प्राप्नुहि सम्पादयेति। तस्मिन्नपि पादे शाखान्तरीया वीथेति पठन्ति। तदपि पूर्ववदयुक्तं। सन्ति हि वेदे तत्र तत्र शाखान्तरे पाठदूषणानि बहूनि। तथा हि बृहस्पतिर्नो हविषा वृधात्वित्यस्मिन् मन्त्रे हविषा विधेरिति शाखान्तरपाठः। स च यज्ञे नैष्फल्येन दुष्टः। इत्यभिप्रेत्य ब्राह्मणे समाम्नायते। यद् ब्रूयाद्विधेरिति यज्ञः स्थाणुमृच्छेत्। वृधात्वित्याह यज्ञः स्थाणुमेव परिवृणक्तीति एवं यद् ब्रूयात् सुखावसामायेत्यादिकमुदाहार्यं॥

मार्जालीयहोमादूर्ध्वमुपस्थानं विधत्ते। (२६)"अत्र तिष्ठन्नादित्यमुपतिष्ठते पर्यावृत्त प्रदक्षिणमावृत्यैतैश्चैवास्वाहाकारैरेह्येवा३ इदं मधु३ इदं मधु इमन्तीव्रसुतं पिवा३ इदं मधू३ इदं मध्विति च"(२६) इति। 'अत्र' मार्जालीयसमीपे, 'तिष्ठन्', प्राङ्मुखः 'आदित्यं', उपतिष्ठेत। यदा त्वादित्यः पश्चिमायान्दिशि 'पर्यावृत्तः, तदा स्वयमपि 'प्रदक्षिणं', यथा भवति तथा 'पर्यावृत्य', पश्चिमाभिमुखः 'एतैः' पूर्वोक्तैः, अग्निरिवानाधृष्य इत्यादिभिर्द्वाभिर्मन्त्रैः, होमार्थापादितस्वाहाकाररहितैरुपतिष्ठेत। प्राङ्मुखोपस्थानेऽप्येत एव मन्त्राः। वक्ष्यमाणमन्त्रान्तरेण सह समुच्चयार्थः 'च'कारः। तच्च मन्त्रान्तरं 'एह्येव' इत्यादिकं। हे आदित्य 'एह्येव' अस्मान् प्रति सर्वथैवा-

गच्छ। दूरादाह्वानार्थां प्लुतिः। आगमनप्रयोजनमुच्यते। 'इदं' अस्माभिर्दीयमानं हविः, 'मधु' मधुरं। प्लुतिर्द्विरुक्तिश्चैत-दुभयमत्यन्तमादरार्थं। तदेव हविः पुनर्विशेषाकारेण निर्दि-श्यते। 'इमं' पुरतो वर्त्तमानं, 'तीव्रसुतं' तीव्रेण बहुमन्त्रसूक्त-प्रयोगेणाभिषुतं सोमरसं, 'पिव'। प्लुतिः पूर्व्ववाक्याहृत्तिश्चेत्ये-तदत्यन्तमादरार्थं। 'इति'शब्दो मन्त्रसमाप्त्यर्थः। 'च'शब्दः पूर्व्वमन्त्रैः सह समुच्चयार्थः॥

आदित्योपस्थानादूर्ध्वन्दासीविषयं प्रैषं विधत्ते। (२७)"प्रेष्याः संशास्ति पूर्णकुम्भास्तिस्रोऽवमाः षडुत्तमाः"(२७) इति। वक्ष्य-माणकर्मार्थं या दास्यः प्रेषणीयास्ता दासीः प्रेषयेत्। ताश्च दास्य उदकपूर्णकुम्भयुक्ता भवन्ति। तासान्दासीनान्त्रित्वमधमः पक्षः, 'षट्सङ्ख्या 'उत्तमः पक्षः॥

तासां प्रेषणे मन्त्रमाह। (२८)"इमं धिष्ण्यमुदकुम्भास्त्रिः प्रदक्षिणं परिव्रजाथ दक्षिणैः पाणिभिर्दक्षिणानूरूनाघ्नाना एह्येवा३ इदं मधू३ इदं मध्विति वदत्यः"(२८)॥१॥

(१)उपाकृते स्तोत्रे नैधन्निनयाथान्तोत्तरे च मार्जालीये प्रैषमन्त्रवदीति(१) (२)प्रदक्षिणमग्निं निष्क्रम्याग्रेण यूपं पुरस्तात् प्रत्यङ्मुखस्तिष्ठन्नग्नेः शिर उपतिष्ठते नमस्ते गायत्राय यत्ते शिर इति(२) (३)तेनैव यथेतं प्रत्येत्य दक्षिणमुदङ्मुखः पक्षन्नमस्ते राथन्तराय यस्ते दक्षिणः पक्ष इति(३) (४)अपरेणाग्निं पुच्छमतिक्रम्य प्राङ्मुख उत्तरं नमस्ते बृहते यस्त उत्तरः पक्ष इति(४)(५)पश्चात्प्राङ्पुच्छं

नमस्ते भद्राय यस्ते पुच्छं या ते प्रतिष्ठेति(५) (६)दक्षिणतः पुच्छस्यात्मानं नमस्ते राजनाय यस्त आत्मेति(६) ॥ २ ॥

## ऐतरेयारण्यकभाष्यम् ।

(१)"उपाकृते स्तोत्रे वैषर्जिनयाग्नीत्तरे च मार्जालीये शेषमन्त्रवैद्रीति"(१) * इति । हे दास्यः 'इमं' मार्जालीयाख्यं, 'धिष्ण्यं,' तत्र स्थापितं 'उदकुम्भञ्च', 'त्रिवारं, 'प्रदक्षिणीकुरुत । किं कुर्वत्यः, प्रदक्षिणीकरणकाले स्वस्व शिरस्यवस्थितानुदकुम्भान् वामहस्तैरवष्टभ्य 'दक्षिणैः पाणिभिः', स्वकीयान् 'दक्षिणानूरून्', ताडयन्त्यः । पुनरपि किं कुर्वत्यः, तस्मिन् काले 'एष्टेवा', इत्यादिकं मन्त्रभागं पठन्त्यः । अयञ्च भागो होतुरादित्यौपस्थाने व्याख्यातः । अयञ्चोक्तो मन्त्रार्थरूपः प्रयोगस्तैत्तिरीये विस्पष्टमाम्नातः । उदकुम्भानधि निधाय दास्यो मार्जालीयं परिनृत्यन्ति पदो निघ्नन्तीरिदं मधु गायन्त्य इति । हे दास्यः यूयमेतावत् कृत्वा तत ऊर्ध्वं अध्वर्युणा सामगान् प्रति 'स्तोत्रे', अनुज्ञापिते सति, स्वस्वकुम्भस्थितमुदकं त्रेधा विभज्य प्रदेशत्रये सिञ्चत । अयं दक्षिणो मार्जालीय एकः प्रदेशः । 'उत्तरो 'मार्जालीयो द्वितीयः प्रदेशः । उत्तरमार्जालीयो नामाग्नीध्रीयो धिष्ण्यः । तत्रोभयत्र सिक्तस्योदकस्यावशिष्टं भागं 'वेदिमध्ये सिञ्चत । 'इति'शब्द इमं धिष्ण्यमित्यादिमन्त्र-

---

* एष मन्त्रः प्रथमखण्डशेषमन्त्रस्य शेषभागः ।

समाप्त्यर्थः। अनेनमन्त्रेण दासीः प्रेषितवतो होतुरुत्तरवेदिस्था-नीयस्य चित्याग्नेरवयवोपस्थानं विधातव्यं ॥

तत्र शिरआद्युपस्थानं विधत्ते। (२)"प्रदक्षिणमग्निं निष्क्र-म्याग्रेण यूपं पुरस्तात् प्रत्यङ्मुखस्तिष्ठन्नग्नेः शिर उपतिष्ठते नमस्ते गायत्राय यत्ते शिर इति"(२) इति। मार्जालीयं 'अग्निं', 'प्रदक्षिणं', कुर्वन् 'निष्क्रम्य', अग्निचित्यं दक्षिणेन गत्वा, यूपस्य पूर्वभागे चित्याग्नेः 'पुरस्तात्', स्वयं 'प्रत्यङ्मुख-स्तिष्ठन्', 'नमस्ते', इत्यादिमन्त्रेण तस्य 'अग्नेः', 'शिरोभाग-मुपतिष्ठेत। हे अग्ने 'ते' तव, 'यत्' गायत्रं साम, 'शिरोरूपेण वर्त्तते, तस्मै 'गायत्ररूपाय शिरसे त्वदीयाय 'नमः', अस्तु। गायत्र-साम्नः शिरोरूपत्वमध्वर्युणा तदुपस्थानादवगन्तव्यं। तथा चान्य-त्राम्नायते। गायत्रेण पुरस्तादुपतिष्ठत इति। नमस्त इत्या-दिमन्त्रसमाप्त्यर्थः 'इति' शब्दः॥

दक्षिणपक्षस्योपस्थानं विधत्ते। (३)"तेनैव यथेतं प्रत्येत्य दक्षिणमुदङ्मुखः पक्षं नमस्ते राथन्तराय यत्ते दक्षिणः पक्ष इति"(३) इति। येन मार्गेण पूर्वस्यान्दिशि गतः, 'तेनैव', मार्गेण, प्रतिनिवृत्य, दक्षिणस्यान्दिशि स्वयं 'उदङ्मुखः', तिष्ठन् चित्याग्नेः 'दक्षिणं पक्षं', मन्त्रेणोपतिष्ठेत। 'तेनैव' इत्यस्य व्याख्यानं 'यथेतं' इति, यथागतं तथैवेत्यर्थः। दक्षि-णपक्षस्य रथन्तरसामसम्बन्धोऽध्वर्यूपस्थानादवगन्तव्यः। तथा च तदुपस्थानमाम्नातं। बृहद्रथन्तराभ्यां पक्षाविति॥

उत्तरपक्षस्योपस्थानं विधत्ते। (४)"अपरेणाग्निं पुच्छ-मतिक्रम्य प्राङ्मुख उत्तरं नमस्ते बृहते यस्त उत्तरः पक्ष

इति''(४) इति । पश्चिमदिगवस्थितं यदग्निपुच्छन्तस्य पश्चिमभागेन तत् 'पुच्छं', 'अतिक्रम्य', उत्तरपक्षस्य पश्चिमायान्दिशि 'प्राङ्मुखः', अवस्थाय 'उत्तरं', पक्षं, मन्त्रेणोपतिष्ठेत। तस्य पक्षस्य वृहत्सामरूपत्वं पूर्ववद्द्रष्टव्यं॥

पुच्छस्योपस्थानं विधत्ते। (५)''पश्चात् प्राङ् पुच्छं नमस्ते भद्राय यत्ते पुच्छं या ते प्रतिष्ठेति''(५) इति। चित्याग्नेः पश्चिमदिशि प्राङ्मुखोऽवस्थाय मन्त्रेण 'पुच्छं', उपतिष्ठेत। भद्रसाम्नः पुच्छरूपत्वमुपनिषदि पक्षविधोपासनायामनुक्रमणादवगम्यते। तत्र पञ्चावयवा एवमनुक्रम्यन्ते। गायत्रं रथन्तरं बृहद्भद्रं राजनमिति। सामत इति शिरो दक्षिणः* पक्ष उत्तरः पक्षः पुच्छमात्मेत्याख्यानमिति च। 'यत्ते पुच्छं या ते प्रतिष्ठा', इति पुच्छस्यैव प्रतिष्ठात्वमुक्तं। प्रतितिष्ठत्यवयवसम्मूर्त्तिर्भवत्यनयेति 'प्रतिष्ठा'॥

चित्याग्नेर्मध्यशरीरस्योपस्थानं विधत्ते। (६)''दक्षिणतः पुच्छस्यात्मानं नमस्ते राजनाय यस्त आत्मेति''(६) इति। 'पुच्छस्य', 'दक्षिणभागे प्राङ्मुखः स्थित्वा मध्यदेहमुपतिष्ठेत। 'आत्म'शब्दो मध्यदेहभागं ब्रूते। मध्यं ह्येषामङ्गानामात्मेति श्रुतेः। राजनसाम्नो मध्यदेहरूपत्वं पूर्ववद्द्रष्टव्यम्॥ २॥

(१)यथेतं सदः प्रसर्पति(१) (२)पुरस्तात् पेङ्ख उपक्लृप्तो भवति(२) (३)स्थूणे रज्जू वीवध इत्येतत् प्रज्ञान्य तीर्थेन

* इति दक्षिण इति च्यादर्शधृतपाठान्तरं।

प्रपाद्योत्तरेणाग्नीध्रीय परिव्रज्य पूर्वया द्वारा सदः सर्वान्धिष्ण्यानुत्तरेण(३) (४)औदुम्बराणि काष्ठानि प्रेङ्खस्य भवन्ति पालाशानि मिश्राणि वा(४) (५)त्रीणि फलकान्युभयतस्तष्टानि द्वे वा रज्ज्वश्च तावत्य(५) (६)इषुमात्रः प्राङ् प्रेङ्खो निमुष्टिकस्तिर्यङ्ङुदगग्रः प्रागग्राभ्यां सूचीभ्यां समुतः(६) (७)दक्षिणोत्तरे स्थूणे निखायाभितो वोटपदन्वीवधमत्यादधात्यास्यसम्मितं कर्तुः(७) (८)कुष्ठासु छिद्राणि प्रेङ्खस्य भवन्ति रज्जुभ्यामूर्ध्वमुद्वयति दक्षिणयोत्तरतः सव्यया दार्भ्यौ त्रिगुणे स्यातां सव्यदक्षिणे पञ्चव्यायामे द्विगुणे वीवधे त्रिः प्रदक्षिणं पर्यस्योर्ध्वं ग्रन्थिं निष्टर्क्यं बध्नाति(८) (९)शाखाभिर्वृसीभिर्वा पर्युषन्त्यप्रकम्पि(९) (१०)चतुरङ्गुलेनैष विभूमः प्रेङ्खः स्यान्मुष्टिमात्रेण वा(१०) (११)दक्षिणत उदाहिततरः समो वा(११) (१२)पदमात्रे धिष्ण्यात्(१२) ॥ ३ ॥

ऐतरेयारण्यकभाष्यम् ।

चित्याग्न्युपस्थानादूर्ध्वं* होतुः सदःप्रवेशं विधत्ते । (१)"यथेतं सदः प्रसर्पति"(१) इति । पूर्वं चित्याग्निसमीपे मार्जालीयाद्येन प्रकारेणागतं तस्मिन्नेव मार्गे प्रत्यावृत्य मार्जालीयं वामभागेन स्थाप्य 'सदः', प्रविशेत् ॥

दोलाकल्पनं विधत्ते । (२)"पुरस्तात् प्रेङ्ख उपक्लृप्तो

* चित्याग्न्युपस्थानानन्तरमिति ग० ।

भवति"(२) इति। होतुः सदःप्रवेशात् पूर्वस्मिन्नेव काले 'प्रेङ्खः' दोला, अध्वर्युभिः सम्पादनीया भवति।

दोलासाधमानां स्थूणादीनां सदस्यानयनं विधत्ते। (३)"स्थूणे रज्जू वीवध इत्येतत् प्रक्षाल्य तीर्थेन प्रपाद्योत्तरेणाग्नीध्रीयं परिव्रज्य पूर्वया द्वारा सदः सर्वान्धिष्ण्यानुत्तरेण"(३) इति। 'स्थूणे' द्वौ स्तम्भौ, 'रज्जुद्वयं फलके बन्धनक्षमं। 'वीवधः' स्तम्भयोरुपरि तिर्यगवस्थापनीयः काष्ठविशेषः। एतत्त्रितयं मलापनयनाय 'प्रक्षाल्य', 'तीर्थशब्दवाच्येन मार्गेणानयेत्। उत्करचात्वालयोर्मध्यदेशस्तीर्थः। एतत्तीर्थमित्याचक्षत इति परिभाषितत्वात्। ततः 'आग्नीध्रीयधिष्ण्यं, वामभागेऽवस्थाप्य उत्तरभागे तत् सर्वमानीय 'पूर्वद्वारेण, 'सदः', प्रविश्य सदसो मध्ये 'सर्वान्धिष्ण्यान्', वामभागे कृत्वा तेषां 'उत्तरदेशेनानीय होत्रीयधिष्ण्यस्य पश्चाद्भागेऽवस्थापयेत्॥

तत्र काष्ठानां वृक्षविशेषं विधत्ते। (४)"औदुम्बराणि काष्ठानि प्रेङ्खस्य भवन्ति पालाशानि मिश्राणि वा"(४) इति। स्पष्टोऽर्थः॥

दोलायां होतुरारोहणाय फलकानि विधत्ते। (५)"त्रीणि फलकान्युभयतस्तष्टानि द्वे वा सूच्यश्च तावत्यः"(५) इति। अधस्तादुपरिष्टाच्च फलकानां सम्यक् तक्षणं कर्त्तव्यन्तानि 'फलकानि त्रीणि', इत्येकः पक्षः। 'द्वे', इति पक्षान्तरम्। 'सूच्यः' फलकसन्धानहेतवः सूक्ष्माग्राः काष्ठविशेषाः, 'च', फलकवत्तिस्रो द्वे वा॥

फलकसन्धानेन निष्पन्नस्य प्रेङ्खस्य स्वरूपं विशदयति।

(६)"इषुमात्रः प्राङ् प्रेङ्खो निर्मुष्टिकस्तिर्यङ्ङुदगग्रः प्रागग्राभ्यां सूचीभ्यां समुतः"(६) इति। प्रेङ्खस्य 'प्राक्पश्चिमविस्तारः', बाणमात्रः, 'तिर्यङ्' दक्षिणोत्तरविस्तारः, 'निर्मुष्टिकः' मुष्टिन्यूनबाणमात्रः', स च 'प्रेङ्खः', 'उदगग्रः', दक्षिणमूलः, स्थापनीयः। स च 'प्रागग्राभ्यां', 'सूचीशब्दाभिधेयाभ्यां फलकसन्धानहेतुभ्यां', 'समुतः' संयुक्तः, कार्य्यः॥

दोलायाः स्थापनप्रकार विधत्ते। (७)"दक्षिणोत्तरे स्थूणे निखायाभितो होतृषदनं वीवधमत्यादधात्यास्यसम्मितं कर्त्तुः"(७) इति। होता सीदति यस्मिन् धिष्ण्ये स्थाने तत् 'होतृषदनं', तस्य 'दक्षिणोत्तरयोः पार्श्वयोः स्तम्भद्वयं 'निखनेत्। तयोः स्तम्भयोरुपरि चतुररत्निमात्रं 'वीवधनामकं तिर्य्यक्काष्ठं, स्थापयेत्। तच्च काष्ठं 'कर्त्तुः' यजमानस्य, उत्थितस्य, मुखसम्मितं' यथा भवति तथा स्तम्भस्य निखातभागादूर्ध्वं यजमानमुखपरिमिते स्तम्भाग्रे स्थापयेत्।

तत्र फलकबन्धनप्रकारं दर्शयति। (८)"कुष्ठासु छिद्राणि प्रेङ्खस्य भवन्ति रज्जुभ्यामूर्ध्वमुद्वयति दक्षिणतो दक्षिणयोत्तरतः सव्यया दार्भ्यौ त्रिगुणे स्यातां सव्यदक्षिणे पञ्चव्यायामे द्विगुणे वीवधे त्रिः प्रदक्षिणं पर्य्यस्योर्ध्वग्रन्थिन्निष्टक्यं बध्नाति"(८) इति। 'कुष्ठाः प्रेङ्खस्य चत्वारः कोणविशेषाः। 'प्रेङ्खस्य' फलकस्य, तेषु चतुर्षु कोणेषु 'छिद्राणि', कुर्य्यात्। दक्षिणच्छिद्रद्वये रज्ज्वा द्विगुणीकृताया एकस्या अग्रद्वयं स्यूत्वा तां रज्जुं 'ऊर्ध्वं', उन्नमयेत्। एवमुत्तरच्छिद्रद्वये रज्ज्वन्तरं द्रष्टव्यं। तत्र दक्षिणरज्जुः प्रदक्षिणावृत् कार्य्या। उत्तररज्जुः सव्यावृत् कार्य्या। ते च

रज्जू दर्भमय्यौ त्रैगुण्ययुक्ते 'सव्यदक्षिणावर्तौ' 'पञ्चव्यायामे', दीर्घे, कृत्वा, 'द्विगुणे', यथा भवति तथा 'बध्नीयात्'। पञ्चव्यायामा रज्जुर्द्विगुणीकृता सार्द्धद्वियामा भवति। तस्याश्च मध्यभागे वारणमात्रं फलकस्याधस्तादुपक्षेप्यम्। अवशिष्टौऽग्रच्छिद्रद्वयादूर्ध्वमुन्नीत उपरितने 'वीवधे', तदग्रमेकैकं 'त्रिः', 'प्रदक्षिणीकृत्याग्रद्वयेन संयुतेन 'ऊर्ध्वग्रन्थिः कर्त्तव्यः। स च 'निष्टर्क्यः', शिखावन्धनवत् सहसा मोचयितुं शक्यत्वं निष्टर्क्यत्वं॥

निखातयोः स्तम्भयोर्दृढीकरणं विधत्ते। (९)"शाखाभिर्वृसीभिर्वा पर्यृषन्त्यप्रकम्पि"(९) इति। यथा स्तम्भस्य कम्पो न भवति तथा 'पर्यूषन्ति' स्तम्भमूलस्य परितस्तस्मिन्नवटे पांशुं प्रक्षिपन्ति। हस्तेन प्रक्षेपणं न कर्त्तव्यं किन्तु वृक्षशाखाभिः', 'वृसीभिर्वा', पांशून् पर्यूहेत। तपस्विनामासनार्थं तृणवल्लीतालपत्रवेणुदलादिनिर्मिता अल्पकटविशेषा वृस्यः॥

फलकभूम्योर्मध्ये व्यवधाने प्रमाणं दर्शयति। (१०)"चतुरङ्गुलेनैष विभूमः प्रेङ्खः स्यान्मुष्टिमात्रेण वा"(१०) इति। भूमिविश्लिष्टः 'विभूमः', अङ्गुलचतुष्टयमित्येकः पक्षः। तस्योपरि ऊर्ध्वाङ्गुष्ठयुक्ता मुष्टिर्भवति तावद्व्यवधानमित्यपरः पक्षः॥

दक्षिणभागे फलकस्यौन्नत्यं विकल्पेन विधत्ते। (११)"दक्षिणत उदाक्षिततरः समो वा"(११) इति॥

होतृधिष्ण्यस्य पश्चाद्भागे लम्बमानस्य फलकस्य धिष्ण्यस्य च व्यवधाने प्रमाणं दर्शयति। (१२)"पदमात्रे धिष्ण्यात्"(१२) इति। 'धिष्ण्यात्', पश्चिमभागे 'पदमात्रे', फलकमवतिष्ठत इति शेषः॥ ३॥

(१)निष्ठिते प्रेङ्खे होता वाणमौदुम्बरं प्रततन्तुमुभाभ्यां परिगृह्योत्तरत उपोहते यथा वीणां(१)(२)सप्तभिश्छन्दोभिश्चतुरुत्तरैः स्थानान्यस्योर्ध्वमुद्गृह्णीयादप्यभिवीं(२) (३)गायत्रेण त्वा छन्दसोद्गृह्णाम्यौष्णिहेन त्वानुष्टुभेन त्वा बार्हतेन त्वा पाङ्क्तेन त्वा त्रैष्टुभेन त्वा जागतेन त्वा वैराजेन त्वा द्वैपदेन त्वातिच्छन्दसा त्वेति(३) (४)छन्दांस्यनुक्रम्य स्थानानामनुपरिक्रमणमौदुम्बर्यार्द्रया प्राञ्चया सपलाशया मूलदेशेन वाणं त्रिरूर्ध्वमुल्लिखति(४) (५)प्राणाय त्वापानाय त्वा व्यानाय त्वोल्लिखामीति(५) (६)अन्येभ्योऽपि कामेभ्यः पुनरपि न तूल्लिखामीति ब्रूयात्(६) (७)अथैनं सप्राखं छन्दोगेभ्यः प्रयच्छति(७) (८)भूतेभ्यस्त्वेति पश्चार्द्धं फलके पाणी प्रतिष्ठापयति प्राणमनु प्रेङ्खस्वेति प्राञ्चं प्रेङ्खं प्रणयति व्यानमनु वीङ्खस्वेति तिर्यञ्चमपानमन्वीङ्खस्वेत्यभ्यात्मं(८) (९)भूर्भुवः स्वरिति जपति(९) (१०)प्राणाय त्वेति प्राञ्चमेव व्यानाय त्वेति तिर्यञ्चमपानाय त्वेत्यभ्यात्मं(१०)(११)वसवस्त्वा गायत्रेण छन्दसारोहन्तु तानन्वारोहामीति पश्चार्द्धं फलकेऽरत्नी प्रतिष्ठापयति(११) (१२)अथ पूर्वं फलकं नानापाणिभ्यामभिपद्येत यथाद्भिः स्पृश्यन्(१२) (१३)मध्यमं छुबुकेनोपस्पृशेद् द्वयोर्वा सन्धिं (१३)(१४)रुद्रास्त्वा त्रैष्टुभेन छन्दसारोहन्तु तानन्वारोहा-

मीति दक्षिणं सक्थ्यभिहरत्यादित्यास्त्वा जागतेन छन्दसारोहन्तु तानन्वारोहामीति सव्यं विश्वे त्वा देवा आनुष्टुभेन छन्दसारोहन्तु तानन्वारोहामीति समारोहति(१४) (१५)पश्चात् स्वस्य धिष्ण्यस्य दक्षिणं पादं प्राञ्चं प्रतिष्ठापयत्यथ सव्यं यद्येतरं आस्येदथेतरं यद्येतरोऽथेतरन्नोभौ विभूसौ कुर्यात्(१५) (१६)कूर्चान् होत्रकाः समारोहन्ति ब्रह्मा चौदुम्बरीमासन्दीमुद्गाता(१६)(१७)यदि कस्मैचिदवश्यकर्मणे जिगमिषेदादिश्य पात्रं प्राङ्वरूह्य चरित्वा तमर्थमेवमेवाजपथा वृतारोहेत्(१७) ॥ ४ ॥

ऐतरेयारण्यकभाष्यम् ।

अथ होतुर्वाणधारणं विधत्ते । (१)"निष्ठिते प्रेङ्खे होता वाणमौदुम्बरं शततन्तुमुभाभ्यां परिगृह्योत्तरत उपोहते यथा वीणाम्"(१) इति । 'यथा' उक्तप्रकारेण, अध्वर्युभिरुपकल्पिते कृते 'प्रेङ्खे', समाप्ते सति ततः 'होता', चित्याग्निप्रदेशादागत्य सदः प्रविश्य प्रेङ्खस्य पश्चादासीनः 'औदुम्बरं शततन्तुं वाणं', 'उभाभ्यां', हस्ताभ्यां, आदाय, 'उत्तरपार्श्वे 'वीणावद्धारयेत् । यथा लोके काण्डवीणा छिद्रादितन्तुयुक्ता तथा विस्तृतफलके सम्पादिता शततन्तुबन्धनपर्य्याप्ता महती वीणा वाणशब्देनोच्यते ॥

वामभागे धारितस्य वाणस्य मन्त्रैः स्वरस्थानकल्पनं विधत्ते । (२) "सप्तभिश्छन्दोभिश्चतुरुत्तरैः स्थानान्यस्योर्ध्वमुदृग्गृह्णीया-

दशभिर्वा"(२) इति। गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्ज-गत्यः 'सप्तच्छन्दांसि। विराट्, द्विपदा, अतिच्छन्दः, किञ्चिद-न्यच्छन्दोऽन्तरमित्येतानि चत्वार्युत्तराणि छन्दांसि। तथाविध-च्छन्दःप्रतिपादकैर्मन्त्रैर्वाणस्याधोभागमारभ्योत्तरोत्तरं 'ऊर्ध्वं', स्वरस्थानानि' केनचिच्चिह्नेनोपकल्पयेत्। अन्तिमच्छन्दोऽन्त-रपरित्यागेन 'दशभिर्वा', इति पक्षान्तरं॥

इदानीं क्रमेण छन्दोमन्त्रानाह। (३)"गायत्रेण त्वा छन्दसो-द्‌दूहाम्यौष्णिहेन त्वानुष्टुभेन त्वा बार्हतेन त्वा पाङ्क्तेन त्वा त्रैष्टु-भेन त्वा जागतेन त्वा वैराजेन त्वा द्वैपदेन त्वातिच्छन्दसा त्वेति"(३) इति। हे वाण 'त्वां 'गायत्राख्येन 'छन्दसा,' 'उद्‌दूहामि' परिज्ञातस्वरस्थानविशेषयुक्तं करोमि। एवमुत्तरेष्वपि मन्त्रेषु 'छन्दसोद्‌दूहामि', इत्येतं भागमनुषज्य योजनीयं। 'इति'शब्दो मन्त्रसमाप्त्यर्थः॥

ध्वन्युत्पादनाय तन्तूनामुन्मार्जनं विधत्ते। (४)"छन्दांस्यनु-क्रम्य स्थानानामनुपरिक्रमणमौदुम्बर्याद्रया शाखया सपलाशया मूलदेशेन वाणं त्रिरूर्ध्वमुल्लिखति"(४) इति। यथोक्तच्छन्दोवा-चकमन्त्राननुक्रमेण पठित्वा तैर्मन्त्रैः स्वरस्थानविशेषाणां अनु-क्रमेणोपकल्पनं सम्पाद्य ततः पर्णयुक्तया कयाचित् 'आर्द्रया', उदुम्बरशाखया' तं 'वाणं', 'त्रिवारं 'ऊर्ध्वं', उन्मृज्यात्। येयमौदुम्बरशाखा तस्या अग्रेणोन्मार्जनं न कुर्यात्, किन्तु 'मूलदेशेन', कुर्यात्॥

उन्मार्जनत्रयार्थं मन्त्रत्रयं दर्शयति। (५)"प्राणाय त्वापा-नाय त्वा व्यानाय त्वोल्लिखामीति"(५) इति। हे वाण 'त्वाम-

स्तत्प्राणवृत्तिरक्षार्थमुन्मृजामि। एवमुत्तरत्रापि पूर्वयोर्मन्त्रयोः 'उल्लिखामि', इत्यनुषज्यते। 'इति'शब्द ईदृशस्थाने सर्वत्र मन्त्रसमाप्त्यर्थः॥

शाखान्तराभिहितं* मन्त्रप्रयोगं निषेधति। (६)"अन्येभ्योऽपि कामेभ्यः पुनरपि न तूल्लिखामीति ब्रूयात्"(६) इति। शाखान्तरे हि प्राणादिरक्षार्थोल्लेखनादूर्ध्वं कामान्तरसिध्यर्थं 'पुनरप्युल्लिखामि', 'इति' मन्त्रप्रयोगः, अभ्युपगतः तं 'तु', 'न', कुर्यात्, प्राणादिमन्त्रत्रयेणैवाशेषकामसिद्धेः॥

बाणस्य दानं विधत्ते। (७)"अथैनं सशाखं छन्दोगेभ्यः प्रयच्छति"(७) इति॥

बाणदानादूर्ध्वं प्रेङ्खमारुरुक्षोर्होतुः प्रथमं मन्त्रैः प्रेङ्खस्य चालनं विधत्ते। (८)"भूतेभ्यस्त्वेति पश्चार्द्धे फलके पाणी प्रतिष्ठापयति प्राणमनु प्रेङ्खस्वेति प्राञ्चं प्रेङ्खं प्रणयति व्यानमनु वीङ्खस्वेति तिर्यञ्चमपानमन्वीङ्खस्वेत्यश्चात्म"(८) इति। असौ होता प्रेङ्खस्यापरफलके, 'भूतेभ्यस्त्वा', 'इति' मन्त्रेण, 'पाणिद्वयं 'प्रतिष्ठापयेत्। हे प्रेङ्ख सर्वभूतोपकारार्थं त्वां पाणिभ्यां स्पृशामीति शेषः। ततः 'प्राणमनु प्रेङ्खस्व', 'इति' मन्त्रेण, तं 'प्रेङ्ख", पूर्वदिग्गामित्वेन चालयेत्। हे प्रेङ्ख त्वमस्मदीयं 'प्राणं', 'अनुसृत्य प्रकर्षेण चलितो भव। यथा प्राणः पुरस्ताद्गच्छति तथा त्वमपि पूर्वस्यान्दिशि गच्छेत्यर्थः। ततः 'व्यानमनु वीङ्खस्व', 'इति' मन्त्रेण, तं 'प्रेङ्खन्तिर्यञ्चं", दक्षिणोत्तरदिगनुसारेण चालयेत्। हे प्रेङ्ख त्वमस्मदीयं 'व्यानं', 'अनुसृत्य दक्षिणोत्-

* शाखान्तराभिमतमिति क०।

रदिशोविशेषेण चलितो भव। ततः 'अपानमन्वीङ्क्स्व', 'इति' मन्त्रेण, स्वात्माभिमुख्येन चालयेत्। हे प्रेङ्ख त्वमस्मदीयं 'अपानवायुमन्तःसञ्चारिणं 'अनुसृत्यास्मदाभिमुख्येन चलितो भव॥

त्रिविधचालनादूर्ध्वं व्याहृतिजपं विधत्ते। (९)"भूर्भुवः स्वरिति जपति"(९) इति। प्रेङ्खस्य दार्ढ्यपरीक्षार्थं यदेतच्चालनत्रयं कृतं तेन पृथिव्यादिलोकत्रयं दृढं भवत्वित्यर्थः।

जपादूर्ध्वं पुनरपि पूर्ववत्त्रेधा चालनं विधत्ते। (१०)"प्राणाय त्वेति प्राञ्चमेव व्यानाय त्वेति तिर्यञ्चमपानाय त्वेत्यभ्यात्मं"(१०) इति। हे प्रेङ्ख त्वामस्मदीयप्राणादित्रयरक्षार्थं चालयित्वा दार्ढ्यं पश्यामीतिशेषः। अत्र मन्त्रविशेष एव न तु क्रियाविशेष इतिद्योतनार्थं 'एव'कारः॥

प्रेङ्खस्य दार्ढ्यपरीक्षणादूर्ध्वं समारोहणप्रकारं विवक्षुरादौ कूर्पराद्यरत्निस्थापनं विधत्ते। (११)"वसवस्त्वा गायत्रेण च्छन्दसारोहन्तु तानन्वारोहामीति पश्चार्द्धे फलकेऽरत्नी प्रतिष्ठापयति"(११) इति। 'वसवस्त्वा', इत्यादिः स्थापनमन्त्रः। हे प्रेङ्ख त्वामष्टसङ्ख्याकाः 'वसवः' देवाः, 'गायत्रच्छन्दोरूपेण साधनेन प्रथमं 'आरोहन्तु', 'तान्' वसून्, 'अनुसृत्य, पश्चादहं 'आरोहामि'॥

अरत्निस्थापनानन्तरमूर्ध्वाङ्गुलिभ्यां पाणिभ्यां पूर्वफलकस्पर्शनं विधत्ते। (१२)"अथ पूर्वं फलकं नानापाणिभ्यामभिपद्येत यथाहिः सृप्स्यन्"(१२)इति। लोके सर्पणं करिष्यन् पन्नगः शिर उन्नयति। तथायं पाणी उन्नतौ कृत्वा ताभ्यां 'अभिमृशेदित्यर्थः* ॥

* अभिस्पृशेदित्यर्थ इति क॰, ग॰ च।

कूर्पराभ्यां पश्चिमफलकमग्राभ्यां पूर्वफलकञ्च स्पृष्टवतः मुखस्याऽधोभागे छुबुकनाम्ना मध्यमफलकस्पर्शनं विधत्ते। (१३)"मध्यमं छुबुकेनोपस्पृशेद्द्वयोर्वा सन्धि"(१३) इति। फलकत्रयपक्षे 'मध्यमस्पर्शः'। द्वयपक्षे 'सन्धिस्पर्शः'॥

अत्र मन्त्रत्रयेण क्रमाद्दक्षिणवामसक्थिभ्यां कृत्स्नशरीरेण च प्रेङ्खारोहणं विधत्ते। (१४)"रुद्रास्त्वा त्रैष्टुभेन च्छन्दसारोहन्तु तानन्वारोहामीति दक्षिणं सक्थ्यतिहरत्यादित्यास्त्वा जागतेन च्छन्दसारोहन्तु तानन्वारोहामीति सव्यं विश्वे त्वा देवा आनुष्टुभेन छन्दसारोहन्तु तानन्वारोहामीति समारोहति"(१४) इति॥

उक्तप्रकारेण प्रेङ्खं समारूढस्य* भूमौ पादस्थापनप्रकारं विधत्ते। (१५)"पश्चात् स्वस्य धिष्ण्यस्य दक्षिणं पादं प्राञ्चं प्रतिष्ठापयत्यथ सव्यं यदेतरः आस्येदथेतरं यदेतरोऽथेतरन्नोभौ विभूमौ कुर्यात्"(१५) इति। 'स्वकीयस्य 'धिष्ण्यस्य', पश्चाद्भागे प्रथमं 'दक्षिणः 'पादः प्रागग्रः स्थापनीयः। ततः पश्चिमपादः स्थापनीयः। 'यदा', दक्षिणस्य पादस्य श्रमः तदानीं 'सव्यं', स्थापयेत्। 'यदा', तु सव्यस्य श्रमः तदा दक्षिणं, इत्येवं पर्यायेण तयोः स्थापनं। न त्वेकदा द्वौ पादौ भूमिस्पर्शरहितौ 'कुर्यात्'॥

इतरेषामृत्विजान्तत्तदारोहणं विधत्ते। (१६)"कूर्चान् होत्रकाः समारोहन्ति ब्रह्मा चौदुम्बरीमासन्दीमुद्गाता"(१६) इति। प्रशास्ता, ब्राह्मणाच्छंसी, पोता, नेष्टा, अग्नीध्रः, अच्छा-

* प्रेङ्खमभ्यारूढस्येति क०, ग० च।

वाकश्चेति एते 'होत्रकाः', दर्भमयान् 'कूर्चान्', आरोहेयुः। तथा 'ब्रह्मा', अपि कूर्चमारोहेत्। 'उद्गाता', उदुम्बरनिर्मितां 'आसन्दीं', आरोहेत्॥

प्रेङ्खादिष्वारूढानां होतृहोत्रकब्रह्मोद्गातॄणां* शौचाचमनाद्यर्थं गमने कश्चिद्विशेषं विधत्ते। (१७)"यदि कस्मैचिदवश्यकर्मणे जिगमिषेदादिश्य पालं प्राङवरुह्य चरित्वा तमर्थमेवमेवाजपया वृतारोहेत्"(१७) इति। 'कर्म'शब्द आचमनादिक्रियामाचष्टे। तदर्थं यो जिगमिषुः सोऽयं 'पालमादिश्य' पालकं यजमानमादिश्य, अनुज्ञाप्य, स्वासनात् प्रेङ्खादेः 'प्राङ्मुखः 'अवरुह्य', यदर्थं निर्गच्छति 'तमर्थं', 'चरित्वा', समागत्य पूर्वोक्तेन 'एव', प्रकारेण, स्वं स्वमासनं 'आरोहेत्'। तत्र होतुरेतावान्विशेषः। 'अजपया वृता' भूर्भुवः स्वरित्येतज्जपशून्येन इतरेण सर्वप्रकारेण, इति॥४॥

(१)प्रस्तोतारं संशास्ति पञ्चविंशस्य स्तोमस्य त्रिष्वर्धतृतीयास्वर्धत्रयोदशासु वा परिशिष्टासु प्रथमं प्रतिहारं प्रब्रूतादिति(१) (२)अर्द्धत्रयोदशासु प्रवाचयतेति जातूकर्ण्यः(२) (३)प्रोक्ते जपति(३) (४)सुपर्णोऽसि गरुत्मान् प्रेमां वाचं वदिष्यामि बह्व वदिष्यन्तीं बह्व पतिष्यन्तीं बह्व करिष्यन्तीं बह्व सनिष्यन्तीं बहोर्भूयः करिष्यन्तीं स्वर्गच्छन्तीं स्वर्वदिष्यन्तीं स्वः पतिष्यन्तीं स्वः करिष्यन्तीं स्वः

---

* होतृहोत्रकब्रह्मोद्गातॄणामित्यादर्शपुस्तकपाठान्तरं।

सनिष्यन्तीं स्वरिमं यज्ञं वक्ष्यन्तीं स्वमां यजमानं वक्ष्यन्तीमिति(४) (५)दीक्षिते यजमानशब्दो नादीक्षिते(५) (६)स्वरमुमिति योऽस्य प्रियः स्यान्न तु वक्ष्यन्तीमिति ब्रूयात् (६) (७)उक्थवीर्याणि च(७)(८)सम्प्राणो वाचा समहं वाचा सञ्चक्षुर्मनसा समहं मनसा संश्रोत्रमात्मना समहमात्मना मयि महान् मयि भर्गो मयि भगो मयि भुजो मयि स्तोभो मयि स्तोमो मयि श्लोको मयि घोषो मयि यशो मयि श्रीर्मयि कीर्तिर्मयि भुक्तिरिति(८) (९)आहय वागिति जपति(९)(१०)त्रय आहावाः शस्त्रादेर्निविदः परिधानीयाया इति(१०) (११)शब्दानध्वर्यवः कारयन्ति(११) (१२)एतस्मिन्नहनि प्रभूतमन्नं दद्यात्(१२) (१३)राजपुत्रेण चर्म व्याधयन्त्याघ्नन्ति भूमिदुन्दुभिम्पत्न्यश्च काण्डवीणा भूतानां च मैथुनं ब्रह्मचारिपुंश्चल्योः सम्प्रवादोऽनेकेन साम्ना निष्केवल्याय स्तुवते राजनस्तोत्रियेण प्रतिपद्यते(१३) ॥ ५ ॥

ऐतरेयारण्यकभाष्यम् ।

प्रेङ्खमारूढस्य होतुः कर्त्तव्यान्तरं विधत्ते । (१)"प्रस्तोतारं संशास्ति पञ्चविंशस्य स्तोमस्य तिसृष्वर्द्धतृतीयास्वर्द्धत्रयोदशासु वा परिशिष्टासु प्रथमं प्रतिहारम्प्रब्रूतादिति"(१) इति । यः प्रस्तोता साम्नः प्रस्तावभागं गायति तं 'प्रस्तोतारं', प्रति

असौ होता 'पञ्चविंशस्य', इत्यादिवाक्यं ब्रूयात्। राजनाख्यस्य साम्न आधारभूततृचावृत्त्या यः पञ्चविंशः स्तोमः सम्पद्यते, तस्मिन् स्तोमे प्रथमां स्तोत्रियामारभ्य एकविंशतिस्तोत्रीयासु गतासूपरिष्टात्त्रयोविंशस्तोत्रीयामारभ्य 'तिसृषु परिशिष्टासु', सतीषु, मध्यवर्त्तिनी येयं द्वाविंशतिस्तोत्रीया तस्यां 'प्रतिहारभागः पञ्चवारमावर्त्तनीयः। पञ्चकृत्वः प्रतिहरतीति श्रुतेः। तत्र यः 'प्रथमः प्रतिहारः तं 'प्रतिहारं', हे प्रस्तोतर्मह्यं कथय। अयं प्रथमः प्रतिहारो वर्त्तत इति प्रतिहर्त्रनुष्ठीयमानं 'प्रथमं प्रतिहारं', प्रति, मां स्मारयेदित्यर्थः। 'तिसृष्ववशिष्टास्वित्येकः पक्षः। 'अर्द्धतृतीयास्ववशिष्टास्विति द्वितीयः पक्षः। 'अर्द्धत्रयोदशास्ववशिष्टास्विति तृतीयः पक्षः। अन्तिमां स्तोत्रीयामारभ्यावरोहक्रमेण या तृतीया तस्या उत्तरार्द्धं यासु 'तिसृषु', अस्ति, तास्तिस्रः 'अर्द्धतृतीयाः। अनेनैव न्यायेन त्रयोदश्या उत्तरार्द्धं यासु 'त्रयोदशासु', वर्त्तते ता अर्द्धत्रयोदश्यः। 'इति'शब्दः प्रस्तोतारं प्रति होत्रा प्रयुक्तस्य प्रैषवाक्यस्य समाप्त्यर्थः॥

प्रैषवाक्ये शाखान्तरपाठमाश्रित्य मतान्तरं दर्शयति। (२)"अर्द्धत्रयोदशासु प्रवाचयतेति जातूकर्ण्यः"(२) इति। 'अर्द्धत्रयोदशासु', इत्येष तृतीयः पक्ष एव 'जातूकर्ण्याख्यस्य मुनेरभिप्रेतः। तथा प्रब्रूतादित्येतस्मिन्नेवार्थे 'प्रवाचयत', इति पाठोऽभिप्रेतः॥

प्रैषवाक्यादूर्ध्वं होतुर्जपं विधत्ते। (३)"प्रोक्ते जपति"(३) इति। प्रस्तोत्रा प्रथमप्रतिहारकाले 'प्रोक्ते', सति, होता वक्ष्यमाणमन्त्रं जपेत्॥

तं मन्त्रं दर्शयति। (४)"सुपर्णोऽसि गरुत्मान् प्रेमां वाचं वदिष्यामि बहु वदिष्यन्तीं बहु पतिष्यन्तीं बहु करिष्यन्तीं बहु सनिष्यन्तीं बहोर्भूयः करिष्यन्तीं स्वर्गच्छन्तीं स्वर्वदिष्यन्तीं स्वः पतिष्यन्तीं स्वः करिष्यन्तीं स्वः सनिष्यन्तीं स्वरिमं यज्ञं वक्ष्यन्तीं स्वर्मां यजमानं वक्ष्यन्तीमिति"(४) इति। यागनिर्वाहक हे चैत्याग्ने पक्ष्याकारस्त्वं 'गरुत्मान्' पक्षयुक्तः, 'असि', तत्रापि 'सुपर्णः' शोभनपत्रयुक्तः, 'असि'। त्वदनुग्रहादहं 'इमां' प्रशंसनादिरूपां, 'वाचं', 'प्रकर्षेण कथयिष्यामि। सैषा वागेव अनेकैर्विशेषणैर्विशेष्यते। 'बहु' अर्थजातमपेक्षितं, 'वदिष्यन्तीं', तथा 'बहुधा पारलौकिकफलं प्रापयिष्यन्तीं, तत्साधनभूतमिदं कर्म 'बहु' प्रभूतं, यथा भवति तथा 'करिष्यन्तीं', ऐहिकमपि 'बहुधनादिकं यथा भवति तथा 'सनिष्यन्तीं' दास्यन्तीं, पुनरप्येतत् कर्म प्रभूतादप्यत्यन्तं प्रभूतं 'करिष्यन्तीं', तथा देवानामग्रे यथोक्तं कर्म वक्तुं 'स्वर्गलोकं 'गच्छन्तीं', तस्मिंश्च स्वर्गलोके यजमानं प्रापयिष्यन्तीं, प्रापय्य च तस्मिन् स्वर्गे निवासस्थानं 'करिष्यन्तीं', कृत्वा च तत्र स्वर्गे भोगं दास्यन्तीं, तस्मिन् स्वर्गे देवानां पुरतः प्रभूतं 'इमं यज्ञं', 'वक्ष्यन्तीं', तत्र स्वर्गे 'मां' होतारं, 'यजमानत्वेन 'वक्ष्यन्तीं'। अस्ति हि सत्रे होतुर्यजमानत्वं। ये यजमानास्त ऋत्विज इति श्रुतेः॥

तस्मिन् मन्त्रे यजमानशब्दस्य सत्र एव प्रयोगो न त्वहीनैकाहयोरित्यमुमर्थं दर्शयति। (५)"दीक्षिते यजमानशब्दो नादीक्षिते(५) इति। अस्ति हि सत्रे होतुर्दीक्षितत्वं। अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारन्ततो होता-

रमिति श्रुतेः। अहीनैकाहयोस्तु तादृशश्रुत्यभावाद् अदीक्षित एव होता॥

पुनरप्यन्यं विशेषं मन्त्रे दर्शयति। (६)"स्वरमुमिति योऽस्य प्रियः स्यान्न तु वक्ष्यन्तीमिति ब्रूयात्"(६) इति। अदीक्षितस्य होतुर्यजमानः 'प्रियः स्यात्', तं यजमानमुद्दिश्य 'स्वरमु', इति 'ब्रूयात्'। अदस्शब्दो नामनिर्देशार्थः। 'असु', देवदत्तनामकं यजमानं, 'स्वः' स्वर्गं, इत्येतावदभिधाय ततो भविष्यद्वाचकं 'वक्ष्यन्तीं', 'इति' शब्दं, 'न ब्रूयात्'। किन्तु वर्त्तमानवाचकं शब्दं ब्रूयादित्यर्थादवगम्यते। तेन स्वर्गप्राप्तेरविलम्बः सूचितो भवति॥

उक्तमन्त्रजपादूर्ध्वं मन्त्रान्तरजपं विधत्ते। (७)"उक्थवीर्याणि च"(७) इति। घोषाय त्वा, श्लोकाय त्वा, शृण्वते त्वा, उपशृण्वते त्वा, आश्रुत्यै त्वा, आश्रुताय त्वा इत्येते षण्मन्त्राः 'उक्थवीर्याणि'। षण्णां शस्त्राणामन्ते क्रमेण होत्रा पठनीयत्वात्। 'चकारः पूर्वस्य * जपतीति पदस्यानुवृत्त्यर्थः॥

पुनरपि जप्यं मन्त्रान्तरं दर्शयति। (८)"सं प्राणो वाचा समहं वाचा सं चक्षुर्मनसा समहं मनसा सं श्रोत्रमात्मना समहमात्मना मयि महान्मयि भर्गो मयि भगो मयि भुजो मयि स्तोभो मयि स्तोमो मयि श्लोको मयि घोषो मयि यशो मयि श्रीर्मयि कीर्त्तिर्मयि भुक्तिरिति"(८) इति। योऽयं 'प्राणवायुः सोऽयं 'वाचा', 'सङ्गच्छतान्तथा सति 'अहं', अपि 'वाचा', 'सङ्गच्छतां सङ्गतो भूयासं। तथा 'चक्षुरिन्द्रियं, 'मनसा',

---

* पूर्वोक्तस्येति क०, ग० च।

'संयुज्यतां'। 'अहं', अपि 'मनसा', संयुक्तो भूयासं। तथा 'श्रोत्रेन्द्रियं, प्रेरकेण परमात्मना', 'संयुज्यतां'। 'अहं', अपि तेन 'आत्मना', संयुक्तो भूयासं। तादृशे 'मयि' होतरि, 'महान्' प्रौढो विद्यादिगुणः, सम्पद्यतां। 'भर्गः' गोभिर्भञ्जनसमर्थस्तेजः*। 'भगः' दृष्टव्यसम्पत्तिलक्षणं भाग्यं। 'भुजः' तद्भोगः। 'स्तोभस्तोमौ' सामगतौ तदुभयजन्यं फलमप्यस्तु। 'यशः' विद्याजन्या प्रसिद्धिः। 'श्रीः' गवाश्वादिसम्पत्तिः। 'कीर्त्तिः' धनदानजन्या प्रसिद्धिः। 'भुक्तिः' भोगः। भुजभुक्त्योर्भेदो भोग्यभेदेन द्रष्टव्यः॥

जपान्तरं विधत्ते। (९)"आहूय वागिति जपति"(९) इति। शस्त्रानुज्ञापनार्थं अध्वर्यो शोंसावोमिति मन्त्रेण तस्याह्वानं कृत्वा ततः 'वाक्', 'इति' शब्दं, 'जपेत्'॥

प्रकृतौ होतुर्बहव आहावा विद्यन्ते चोदकप्राप्तानां तेषामपवादाय विशेषं विधत्ते। (१०)"त्रय आहावाः शस्त्रादेर्निविदः परिधानीयाया इति"(१०) इति। तद्दिदासेत्यादिकं वक्ष्यमाणं 'शस्त्रं' तस्य 'आदेः' उपक्रमस्य, सम्बन्धी कश्चिदाहावः अध्वर्यो शोंसावोमित्याहावमुक्त्वा पश्चाच्छस्त्रोपक्रमं कुर्यात्। इन्द्रो देव इत्यादिपदसमूहः 'निवित्। समाप्त्यर्थमृक् 'परिधानीया। तदुभयोपक्रमे शोंसावोमित्येवं रूपौ द्वावाहावौ त एते 'त्रय आहावाः', अत्र कर्त्तव्याः। न तु प्रकृतिवत् अनुरूपधाय्यादिष्वाहावः पठनीयः॥

अत्र शस्त्रोपक्रमात्पूर्वं अध्वर्युकृत्यं दर्शयति। (११)"शब्दानध्वर्यवः कारयन्ति"(११) इति। ते च शब्दा आपस्तम्बेन

* वैरिभञ्जनसमर्थस्तेज इति क०, ग० च।

दर्शिताः। उपाकृते माहेन्द्रस्य स्तोत्रे सर्वा वाचो वदन्त्युक्तेदं यजमानाः कुर्वते अपाघाटलिकाभिस्तम्बलवीणाभिः पिच्छोलाभिरिति। पत्न्यो वादयन्ति सम्प्रवदन्ति वीणागङ्गाननलीतूणवा इति॥

यजमानकृत्यं विधत्ते। (१२)"एतस्मिन्नहनि प्रभूतमन्नं दद्यात्"(१२) इति॥

पुरुषान्तरकृत्यं दर्शयति। (१३)"राजपुत्रेण चर्म व्याधयन्त्याघ्नन्ति भूमिदुन्दुभिं पत्न्यश्च काण्डवीणा भूतानाञ्च मैथुनं ब्रह्मचारिपुंश्चल्योः सम्प्रवादोऽनेकेन साम्ना निष्केवल्याय स्तुवते राजनस्तोत्रियेण प्रतिपद्यते"(१३) इति। चर्मवेधनप्रकार आपस्तम्बेन दर्शितः। उत्तरेणाग्नीध्रीयं कटसङ्घाते तेजनसङ्घाते* वार्द्रं चर्म व्यधनार्थं विलम्बयन्ति विपरियान्त्येतच्चर्मकवचिनस्तेषामेकैकं सम्प्रास्ति। मा पराक्षीर्मातिव्याक्षीरिति तन्त्रे विधानानि पादयन्तीति। भूमिदुन्दुभ्याघातोऽपि तेनैव दर्शितः। अपरेणाग्नीध्रमण्डपं भूमिदुन्दुभिमवटङ्खनन्त्यर्धमन्तर्वेद्यर्धं बहिर्वेदि तमार्द्रेण चर्मणोत्तरलोम्नाऽभिवितत्य शङ्कुभिः परिनिहत्यानैतत्पुच्छकाण्डमाहननार्थं निदधाति दुन्दुभीन् समाघ्नन्ति पुच्छकाण्डेन भूमिदुन्दुभिमिति। 'काण्डवीणाः', प्रसिद्धाः। ताश्च यजमानानां पत्नीभिर्वाद्यन्ते। भूतमैथुनदेशोऽपि तेनैव दर्शितः। उत्तरस्यां वेदिश्रोण्यां पुंश्चल्यो मागधाय च परिसर्पन्तीति†। 'ब्रह्मचारिपुंश्चल्योः', 'सम्प्रवादः', सामब्राह्मणे दर्शितः। एतस्मिन् काले उद्गातारः 'अनेकविधेन, 'साम्ना',

* तेजनसङ्घाते इति क०, ग० घ। † परिश्रयन्तीति क०, ग० घ।

'निष्केवल्याख्यशस्त्रसिद्ध्यर्थं स्तोत्रं कुर्वन्ति, तत्रान्तिमं 'राजनाख्यं' साम तेन साम्ना क्रियमाणस्य स्तोत्रस्याधारभूतो यस्तृचः तेन तृचेन होता निष्केवल्याख्यं शस्त्रं प्रारभते ॥ ५ ॥

(१)तदिदास भुवनेषु ज्येष्ठं तां स्तुते कीर्त्तिं मघवन्महित्वा भूय इद्वावृधे वीर्याय। नृणामु त्वा नृतमङ्गीर्भिरुक्थैरिति तिस्रः(१)(२)अत्र हैके स्वादोः स्वादीयः स्वादुना सृजासमदः सुमधु मधुनाभियोधीरित्यात्मन एते पदे उद्धृत्य पच्छपदे प्रत्यवदधात्यऽस्त्रायन्तो मघवन्निन्द्रवाजिनो गामश्वं रथ्यमिन्द्रसङ्किरेत्येतयोश्च स्थान इतरे(२)(३)श्रियमह गोरश्वमात्मन्यत्ते सम्पश्यतोः पत्नाय(३)(४)नदं व ओदतीनामित्येतयैतानि व्यतिषजन्ति पादैः पादान् बृहतीकारं नदवन्त्युत्तराणि प्रथमायां च पुरुषान्तराण्युपदधाति पादेष्वेकैकमवसाने तृतीयवर्जं स खलु विहरति(४) (५)अपि निदर्शनायोदाहरिष्यामः तदिदास भुवनेषु ज्येष्ठं पु नदं व ओदतीनां यतो जज्ञ उग्रस्त्वेष नृम्णो रु नदं यो युवतीनो ३ सद्यो जज्ञानो निरिणाति शत्रून् पतिं वो अघ्न्यानां। अनु यं विश्वे मदन्त्यूमाः पो धेनूनामिषुध्यसो३मिति(५)(६)एवमेतान्त्रिः(६) (७)अन्यास्तु चेत् समाम्नातास्तु राजनेन साम्ना स्तुवीरन् यथास्थानन्ता इहैवेमा असमाम्नातास्तु चेत् स्तुवीरन्समाम्नातास्य

तावतीरुद्धृत्य तत्र ताः शंसेदिहो एवेमाः(७) (८)अन्यासु चेत् प्राक् ख्रुददोहसस्ताः(८) (९)तदिदासेत्येतदादि शस्त्रं(९) (१०)अविहृतस्यात्र प्रतिगरः(१०)(११)ता अस्य सूद-दोहस इत्येतदादिः सूददोहाः सूददोहाः(११) ॥ ६ ॥

## इत्यैतरेयपञ्चमारण्यके प्रथमोऽध्यायः ॥

### ऐतरेयारण्यकभाष्यम्।

अत्र चोदकप्राप्तं निष्केवल्याख्यं शस्त्रं विहृत्य प्रदर्शयति। (१)"तदिदास भुवनेषु ज्येष्ठं तां सुते कीर्त्तिं मघवन्महित्वा भूय इद्वावृधे वीर्याय नृणामु त्वा नृतमङ्गीर्भिरुक्थैरिति तिस्रः"(१) इति। 'तदिदास' इत्यादिकं नवर्चं सूक्तं। 'तां सुते कीर्त्तिं मघवन्महित्वा' इति षडृचं सूक्तं। 'भूयः' इत्यादिकं पञ्चर्चं सूक्तं। 'नृणामु त्वा' इत्यादिकाः 'तिस्रः', ऋचः, इत्यनेन क्रमेण विहरेत् ॥

मतान्तरानुसारेण कञ्चिद्विशेषं विधत्ते। (२)"अत्र हैके स्वादोः स्वादीयः स्वादुना सृजासमदः सुमधु मधुनाभियोधीरि-त्यात्मन एते पदे उद्धृत्य पक्षपदे प्रत्यवदधात्यश्वायन्तो मघवन्निन्द्र वाजिनो गामश्वं रथ्यमिन्द्रसङ्किरेत्येतयोश्च स्थान इतरे"(२) इति। 'अत्र' अस्मिन्निष्केवल्यशस्त्रे, केचित् खल्वेवं वदन्ति। एतच्छस्त्रगतयोरात्मभागस्थपादयोः पक्षभागस्थपादयोश्च परस्परं व्यत्ययः कर्त्तव्य इति। यथा चित्यस्याग्नेः पञ्चावयवा आम्नाताः, शिरो दक्षिणः पक्षः पुच्छमात्मेति। तथा शस्त्रस्यापि

पञ्चावयवा द्रष्टव्याः। चित्याग्नेर्मध्यशरीरमात्मा। शस्त्रेऽपि पूर्वं विहृतो भागः तदिदास इत्यारभ्य गीर्भिरुक्थैरिति तिस्रः, इत्यन्तेन ग्रन्थेन। सोऽयं भाग आत्मस्थानीयः। तदिदास इत्यस्मिन् सूक्ते तृतीयस्यामृच्युत्तरार्द्धे 'स्वादोः स्वादीयः' इत्यादिको यौ द्वौ पादौ तावुभावात्मभागस्य सम्बन्धिनौ तदुभयं तत उद्धर्त्तव्यं। तथा वक्ष्यमाणे शस्त्रस्य दक्षिणपक्षभागे अभि त्वा शूरेत्यस्मिन् प्रगाथे 'अश्वायन्तः' इति योऽयं पादः, यश्चोत्तरपक्षभागे त्वामिद्धीति प्रगाथे 'गामश्व' इति योऽयं पादः, तदुभयं तत उद्धर्त्तव्यं। उद्धृत्य च 'स्वादोः स्वादुना सृजा' इत्यस्य 'स्थाने', 'अश्वायन्तः' इतिपादः पठनीयः। तस्य च पादस्य 'स्थाने', स्वादोरिति पादः पठनीयः। तथैव 'अदः सुमधु' इत्यस्य 'स्थाने', 'गामश्व' इतिपादः पठनीयः। तस्य च पादस्य 'स्थाने', 'अदः सुमधु मधुना' इत्यादिपादः पठनीयः॥

अस्य व्यत्ययेन प्रयोगस्य फलं दर्शयति। (३)"श्रियमह गौरश्वमात्मन्यस्ते सम्पक्षयोः पतनाय"(३) इति। 'अह' शब्द एवकारार्थः। 'आत्मन्' आत्मस्थानीये शस्त्रभागे, अश्वायन्तो गामश्वमिति पादयोः पाठेन 'गोः', सम्बन्धिनीं 'श्रियं', 'अश्वं', च सम्पादयत्येव। तथा दक्षिणोत्तरपक्षभागयोः स्वादोरदः सुमध्विति पादद्वयपठनं 'पक्षयोः', सम्यक् 'पतनाय', उपयुज्यते॥

पूर्वोक्तेषु तदिदासेत्यादिषु कञ्चिद्विशेषं विधत्ते। (४)"नदं व ओदतीनामित्येतयैतानि व्यतिषजति पादैः पादान् बृहतीकारं नदवन्त्युत्तराणि प्रथमायाञ्च पुरुषाक्षराण्युपदधाति

पादेष्वेकैकमवसाने तृतीयवर्जं स खलु विहरति"(४) इति। 'नदं वः' इत्यादिका येयमृगस्ति, तया सह 'एतानि' तदिदा-सेत्यादिसूक्तानि, मिश्रयेत्। कथं मिश्रणमिति तदुच्यते। तस्या ऋचः सम्बन्धिभिः 'पादैः', सह सूक्तगतान् 'पादान्', मेलयेत्। 'बृहतीकारं', इति णमुल्प्रत्ययान्तः। एकैकामृचं बृहतीं कृत्वेत्यर्थः। सूक्तस्य पदानि प्रथममुच्चार्य 'नदशब्द-युक्तानि ऋचः पदानि 'उत्तराणि', यथा भवन्ति तथोच्चारयेत्। किञ्च तदिदासेत्यस्यां 'प्रथमायां', ऋचि 'पुरुषेत्येतानि चीण्यक्ष-राणि प्रक्षिपेत्। प्रथमपादस्य 'अवसाने', 'पु', इत्येकमक्षरं। द्वितीयपादस्य 'अवसाने', 'रु', इत्येकमक्षरं। चतुर्थपादस्य 'अवसाने', 'ष', इत्येकमक्षरं। तृतीयपादे तु नास्त्यक्षरप्रक्षेपः। अतः 'तृतीयवर्जं", इत्युच्यते। एवं सति षट्त्रिंशदक्षरा बृहती सम्पद्यते। तदिदासेतिपादे दशाक्षराणि, पु इत्येकमक्षरं। नदं व इति पादे सप्ताक्षराणि। यतो जज्ञ इति पादे दशा-क्षराणि रु इत्येकमक्षरं। नदं यो युवतीनामिति पादे सप्ता-क्षराणि। तदेवं मिलित्वा षट्त्रिंशदक्षराणि सम्पद्यन्ते। एवमुत्तरत्रापि योजनीयं। यः पुमानेतत्सर्वं जानाति, 'सः', एतन्निष्केवल्यमस्त्रं 'विहरति' विशेषेणेतस्तत आनीय सम्पादयति॥

यथोक्तं विहरणं प्रतिज्ञापूर्वकमुदाहरति। (५)"अपि निदर्शनायोदाहरिष्यामस्तदिदास भुवनेषु ज्येष्ठं पु नदं व ओ-दतीनां। यतो जज्ञ उग्रस्त्वेष नृम्णो रु नदं यो युवतीनां२ सद्यो जज्ञानो निरिणाति शत्रून् पतिं वो अघ्न्यानां अनु यं विश्वे

मदन्त्यूमाः षो धेनूनामिषुध्यसोमिति''(५) इति। न केवलं विहरणस्य लक्षणकथनमात्रं। 'अपि', चोदाहृत्य प्रदर्शयिष्यामि* इति प्रतिज्ञा। 'तदिदासेत्यारभ्य इषुध्यसोम्' इत्यन्तं द्वयोर्विहृत्योरुदाहरणम्॥

सम्पादितबृहतीद्वयगर्भितायास्तदिदासेत्यस्या ऋच आवृत्तिं विधत्ते। (६)''एवमेतान्त्रिः''(६) इति। 'एवं' उक्तेन प्रकारेण, नदं व इत्यादिपादयोजनेन, पुरुषाक्षरत्रययोजनेन च, सम्पन्नां 'एतां' तदिदासेत्यादिकामृचं, 'त्रिवारं पठेत्॥

यदुक्तं पूर्वत्र राजनस्तोत्रियेण प्रतिपद्यत इति तत्र कञ्चिद्विशेषं दर्शयति। (७)''अन्यासु चेत्समाम्नातासु राजनेन साम्ना स्तुवीरन्यथाख्यानन्ता इहैवेमा असमाम्नातासु चेत् स्तुवीरन्त् समाम्नातस्य तावतीरुद्धृत्य तत्र ताः शंसेदिहो एवेमाः''(७) इति। 'राजनेन साम्ना', आधारभूतास्वृक्षु त्रयः पक्षाः सम्भवन्ति। तदिदासेत्यादिका ऋच इत्येकः पक्षः। ताभ्योऽन्या ऋच इत्यपरः पक्षः। ताश्चान्या द्विधा भिद्यन्ते। उदाहृतेषु सूक्तेषु समाम्नाता असमाम्नाताश्चेति। तत्र तदिदासेत्यादिकासु राजनसामगानपक्षे पूर्वोक्त एव शस्त्रोपक्रमः। यदा तु तदिदासेत्यादिभ्यः 'अन्यासु', यथोक्तसूक्तगतासु, 'समाम्नातासु', ऋक्षु उद्गातारो 'राजनेन स्तुवीरन्', तदानीं पूर्वोक्तन्यायेन राजनसामाधारभूताभिरन्याभिर्ऋग्भिः शस्त्रोपक्रमः प्रसज्येत। तथा उपक्रमो न कर्त्तव्यः। किन्तु 'ताः' अन्याः सामाधारभूता ऋचः, स्वस्थाने एव पठनीयाः। 'इमाः' तदिदासेत्यादिकाः,

* अपि चोदाहरिष्याम इति क०, ग० च।

'इहैव' शस्त्रोपक्रम एव, पठनीयाः। यदा पुनरुद्गातारो यथोक्त-सूक्तेषु 'असमाम्नातासु', कासुचिन्नवीनास्वृक्षु 'राजनेन स्तुवीरन्', तदानीं समाम्नातस्य सूक्तस्य मध्ये 'तावतीः' नूतनानामृचां सङ्ख्यया सङ्ख्याताः काश्चिदृचः, 'उद्धृत्य', 'तत्र' तासामृचां स्थाने, 'ताः' नवीना ऋचः, शंसेत्। 'इमाः' तु तदिदासेत्यादिकाः, 'इहो एव' पूर्ववत् शस्त्रोपक्रम एव, पठनीयाः॥

उद्धारपक्षे तु तदुद्धारनूतनप्रक्षेपयोः स्थानं दर्शयति। (८)"अन्यासु चेत् प्राक्सूददोहसस्ताः"(८) इति। उदाहृतेषु सूक्तेषु या असमाम्नाता ऋचः* तासु यद्युद्गातारो राजनसाम गायेयुः, तदानीं 'सूददोहानामिकायाः ता अस्य सूददोहस इत्येतस्याः पूर्वङ्काश्चिदृच आम्नाता अपनीय 'ताः' नवीना राजनसामाधारभूता ऋचः, तत्र प्रक्षिपेत्॥

पक्षत्रयेऽपि शस्त्रोपक्रमस्य नास्त्यन्यथात्वमित्येतद्दर्शयति। (९)"तदिदासेत्येतदादि शस्त्र"(९) इति। यदि 'तदिदासेत्यादिषु राजनसामगानं, यदि वा ततोऽन्यासु समाम्नातासु, यदि वा नवीनासु, सर्वथाप्युपक्रम एकविध एव॥

होत्रा शस्त्रे शस्यमाने अध्वर्योर्यः प्रतिगरो विहितः स द्विविधः, प्राकृतो वैकृतश्चेति। तत्र सर्वत्र शस्त्रेषु सामान्येन प्राकृतप्राप्तौ सत्यान्तदपवादेन विहृते षोडशिशस्त्रे विहृतः प्रतिगरः प्रयुक्तो दृष्टान्तेन अत्रापि विहृतः प्रतिगर इत्याशङ्क्य तद्वारयति। (१०)("अविहृतश्चात्र प्रतिगरः"(१०) इति। प्रकृतावाम्नातप्रतिगरविषयं मन्त्रस्य कस्यचित् हरणसम्पादनं

* अन्या ऋच इति क०।

यस्मिन् प्रतिगरे सोऽयं 'विह्वतः प्रतिगरः'। सोऽत्र न कर्त्तव्यः। किन्तु प्राकृत एव कर्त्तव्यः॥

तदिदासेत्यारभ्य गोभिर्वक्थैरिति तिस्र इत्यन्तेन ग्रन्थेन निष्केवल्यशस्त्रस्य योऽयमात्मभाग उक्तस्तस्यावसाने काञ्चिदृचं विधत्ते। (११)"ता अस्य सूददोहस इत्येतदादिः सूददोहाः सूददोहाः"(११) इति। ता अस्येत्युक्त एष पाद आदिर्यस्या ऋचः 'सेयमृक् 'एतदादिः', सा च 'सूददोहानामिका, सात्र पठनीया। अभ्यासोऽध्यायसमाप्त्यर्थः॥ ६॥

इति सायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयारण्यके पञ्चमारण्यके प्रथमोऽध्यायः।

## अथ द्वितीयोऽध्यायः ।



(१)ग्रीवाः२(१)। (२)यस्ये॒दमा॒रजॊ॒स्तुजो॒ यु॒जो॒ वन॒ सह॑ः। इन्द्र॑स्य र॒न्त्यं॑ बृ॒हत्(२)। (३)नाधृ॑ष॒ आद॑धर्ष॑ दाधृ॒षाणं॑ धृ॑षि॒तं शवः॑ पु॒रा यदी॑मति॒व्यथि॒रिन्द्र॑स्य धर्षि॒त सहः॑(३)। (४)स नो॑ ददातु॒ तं र॒यिं र॒यिं पि॒शङ्ग॑सन्दृशं। इन्द्रः पतिस्तुवस्तमो जनेष्वा(४) (५)सूददोहाः(५) (६)शिरो गायत्रमिन्द्रमिड्डाथिनो बृहदिति(६) (७)अन्यासु चेत् समाम्नातासु स्तुवीरन्नुभया संस्थानविपर्ययोऽसमाम्नातासु चेत् स्तवीरन् मिश्रासु च(७) (८)वक्त्रश्रोत्तमां सूददोहाः(८) (९)विजवः(९) (१०)सुतस्ते॑ सोम॒ उप॑याहि य॒ज्ञं मत्स्वा॒ मदं॑ पु॒रु॒वार॑ म॒घायं। मं॒हिष्ठ इन्द्र वि॒जरे॑। गृ॒णद्ध्यै॑(१०) (११)स स॒ाव्हतर्व्यं॑ वृ॒त्रहत्वे॒ष श॒त्रू॑नभु॒र्विगा॒ह्व ए॒षः॑। स नो॑ ने॒तारं॑ म॒हयाम॒ इन्द्र॑। इनो॒ वसु॒ सम॑जः पर्वत॒ष्ठाः प्र॒तिवाम्हजीषी॑। इन्द्रः शम्बस्झिर्जोङ्हन एवैः (११)। (१२)सूददोहाः(१२) (१३)इत्येतत्त्रयं ग्रीवाः शिरो विजवः सर्वमहर्च्यं॑(१३) ॥ १ ॥

ऐतरेयारण्यकभाष्यम्।

पच्याकारेण निरूपितस्य निष्केवल्यशस्त्रस्य योऽयं मध्य-शरीरभागः सोऽयं तदिदासेत्यादिना पूर्वं निरूपितः। अथ भागान्तरं प्रतिजानीते। (१)"ग्रीवाः"३(१) इति। वच्यमाणास्तिस्र ऋचः शस्त्रस्य 'ग्रोवा'स्थानीयाः। अंशाभिप्रायेण 'ग्रीवाः', इति बहुवचनं। ग्रीवांशरूपा ऋच उच्यन्त इति शेषः॥

तत्र प्रथमामृचमाह। (२)"यस्येदमारजस्तुजो युजो वनं सहः। इन्द्रस्य रन्त्यं बृहत्"(२) इति। 'यस्य' इन्द्रस्य, 'इदं' शस्यमानं निष्केवल्यं, 'आरजः', सर्वतो रञ्जकं। यद्वा 'यस्य' इन्द्रस्य, 'इदं' जगत्पालनं, सर्वतो रञ्जकं। 'यस्य' इन्द्रस्य, 'युजः' योगः, 'तुजः' वैरिणां हिंसकः। तथा 'यस्य', इन्द्रस्य, 'सहः' बलं, 'वनं' भक्तैः प्रापणीयं। तस्य 'इन्द्रस्य', 'रन्त्य' रमणं, 'बृहत्' प्रौढं, क्रीडा महतीत्यर्थः॥

द्वितीयामृचमाह। (३)"नाधृष आदधर्षं दाधृषाणं धृषितं शवः। पुरा यदीमतिव्यथिरिन्द्रस्य धृषितं सहः"(३) इति। 'शवः' वैरिणां बलं, 'धृषितं' येन इन्द्रेण तिरस्कृतं। 'दाधृषाणं' अतिशयेन तिरस्कर्तारं, इन्द्रं 'अधृषः' अन्येन केनापि तिरस्कर्तुमशक्यो वैरी, 'नादधर्ष' नैव तिरस्कृतवान्। 'यत्' यस्मात् कारणात्, 'पुरा' पूर्वस्मिन् काले, 'ईमतिव्यथिः' ईं एनं शत्रुमतिशयेन इन्द्रश्चालितवान्, तस्मात् 'इन्द्रस्य', 'सहः' बलं, 'धृषितं' वैरिधर्षणक्षमम्॥

तृतीयामृचमाह। (४)"स नो ददातु तं रयिं रयिं पिश-

ङ्गसन्दृशं। इन्द्रः पतिस्तवस्तमो जनेष्वा"(४) इति। 'जनेषु' सर्वप्राणिषु मध्ये, 'आ' समन्तात्, 'तवस्तमः' अतिशयेन बलवान्, 'पतिः' पालकः, 'इन्द्रः', 'पिशङ्गसन्दृशं' पिङ्गलवर्णत्वेन सम्यग् दृष्टिप्रियं, 'रयिं' हैमरूपं, स्वयं लब्धवान्। 'तं रयिं,' स्वेन लब्धं धनं, 'सः', इन्द्रः, 'नः' अस्माकं, 'ददातु'॥

ग्रीवास्थानीयाः शाखान्तरगतास्तिस्र ऋचो दर्शयित्वा स्वशाखागतामेकामृचं दर्शयति। (५)"सुददोहाः(५)' इति। ता अस्य सूददोहस इत्यादिकेत्यर्थः॥

शस्त्रस्य मध्यशरीरभागं ग्रीवाभागञ्चोक्त्वा भागान्तरं दर्शयति। (६)"शिरो गायत्रमिन्द्रमिद्गाथिनो बृहत्"(६) इति। गायत्रीच्छन्दस्कं 'इन्द्रमित्' इत्यादि सूक्तं शस्त्रस्य 'शिरोभागः, तं भागं शंसेत्॥

तत्र कञ्चिद्विशेषं दर्शयति। (७)"अन्यासु चेत्समाम्नातासु स्तुवीरन्नुभया संस्थानविपर्ययोऽसमाम्नातासु चेत्स्तुवीरन्मिश्रासु च(७)" इति। इन्द्रमिद्गाथिन इत्येतस्मात्तृचादन्यासूत्तरासु तिसृषु ऋक्षु आम्नातासु यद्युद्गातारः स्तुवीरन्, तदानीं तास्तिस्र ऋच इन्द्रमिद्गाथिन इत्येतस्य तृचस्य स्थाने पठनीयाः। तासां स्थाने त्विन्द्रमिदित्यादयस्तिस्र इति विपर्ययः। तस्मिन् सूक्ते या असमाम्नाता अन्यत्र समाम्नातास्तिस्र ऋचः, तासु यद्युद्गातारस्तुवीरन्, तदानीं तासामर्थे* सूक्तगतास्तिस्र ऋच उद्धृत्य तस्मिन् स्थाने गानाधारभूतास्तिस्र ऋचः पठेत्। मिश्रासु गानेऽप्ययमेव न्यायः। गानाधारस्य तृचस्य कियानपि भागो-

* तासां मध्ये इति क०, ग० च।

ऽत्र समाम्नातः। अवशिष्टस्तु प्रदेशान्तरस्तु यदा भवति तदा-नीमेवैतास्तिस्र ऋचो मिश्रा भवन्ति॥

उद्वारस्थाने वाञ्छिहिशेषं दर्शयति। (८)"सूक्तस्योत्तमां सूददोहाः"(८) इति। पूर्वं सूददोहसः प्रागुद्वार उक्तः। अत्र तु सूददोहसः प्राचीना 'सूक्तस्योत्तमा', 'येयमिन्द्रं वो विश्वतस्परी' इति ऋगस्ति, तस्याः प्रागेवोद्वारस्तां तु पठेत्। ततः 'सूददोहाः', पठनीयाः॥

पुनरपि शस्त्रस्यापरं भागं दर्शयति। (९)"विजवः"(९) इति। विशेषेण जवो वेगो यस्मिन् पक्षिशरीरभागे समुत्पद्यते सोऽयं भागः 'विजवः'। तत्स्थानीयः शस्त्रभाग उच्यत इति शेषः॥

तस्मिन् भागे प्रथमामृचमाह। (१०)"सुतस्ते सोम उपयाहि यज्ञं मत्स्वा मदं पुरुवारं मघाय। मंहिष्ठ इन्द्र विजुरो गृणध्यै"(१०)इति। हे 'इन्द्र', 'ते' त्वदर्थं, 'सोमवल्ल्याख्यः 'सुतः' अभिषुतः। अतः 'यज्ञं', एतं 'उपयाहि' त्वं प्राप्नुहि। 'मघाय' अस्माकं धनाय, 'पुरुवारं' पुरुभिर्बहुभिर्वरणीयं, 'मदं' 'हर्षं' यथाहं प्राप्नोमि तथा त्वं 'मत्स्व' अनुगृह्णन् हृष्टो भव। यथा-स्मद्धनाय त्वं हृष्यसि तथा त्वं 'मंहिष्ठः' अतिशयेन पूज्यः सन्, 'विजुरः' विशिष्टलोकद्वाराणि 'गृणध्यै' अस्मदग्रे कथयितुं, 'मत्स्व' हृष्टो भव॥

द्वितीयामृचमाह। (११)"स साहतुर्वृत्रहत्येषु शत्रूनृभुर्वि-गाह एषः। स नो नेतारं मह्याम इन्द्रम्"(११) इति। 'सः' इन्द्रः, 'वृत्रहत्येषु' वृत्रनामकस्यासुरस्य वधार्थेषु युद्धेषु, 'शत्रून्'

स्ववैरिणो वृत्रसम्बन्धिनः सर्वानसुरान्, 'साहतुः' अभिभूतवान्। 'स एषः' इन्द्रः, 'ऋभुः' देवतात्मासन्, 'विगाह्यः' विशेषेणा-स्माभिरवगाढुं सेवितुं शक्यः। 'नः' अस्माकं, 'नेतारं' स्वर्गं गमयितारं, 'इन्द्रं,' 'मंहयामः' वयं पूजयामः॥

तृतीयामृचमाह। (१२)"इनो वसु समजः पर्वतेष्ठाः प्रति-वामृजीषी। इन्द्रः शश्वद्भिर्जोहुत्र एवैः"(१२) इति। 'इन्द्रः' देवः, 'शश्वद्भिः' निरन्तरवर्त्तिभिः, 'एवैः' अस्मद्यज्ञं प्रत्यागमनैः, 'जोहुत्रः' अतिशयेन होमनिष्पादकः। कीदृश इन्द्रः, 'इनः' सर्वेषामीश्वरः, 'वसु' धनवान्, 'समजः' समीचीनमतियुक्तः,* 'पर्वतेष्ठाः' पर्व्वतसमाने ऐरावते मेघे वा अवस्थितः। 'वां प्रत्यृजीषी' यज्ञकर्त्तारौ हे दम्पती युवामुद्दिश्य ऋजीषोपलक्षि-तसोमरसवान्, भवदीयं सोमं स्वीकरोतीत्यर्थः॥

एतास्तिस्र ऋचः पठित्वा अन्ते पठनीयामृचं दर्शयति। (१३)"स्वदद्दोहाः"(१३) इति॥

शंसनप्रकारविशेषं दर्शयति। (१४)"इत्येतत्त्रयं ग्रीवाः शिरो विजवः सर्वमर्द्धर्चं"(१४) इति। यस्येदमित्यादिकः शस्त्रस्य यः 'ग्रीवाभागः, इन्द्रमिद्गाथिन इत्यादिको यः 'शिरोभागः, सुतस्ते सोम इत्यादिको यो 'विजवभागः, इत्येतद्भागत्रयं सर्वम-र्द्धर्चशंसनार्हं। त्रिविधं हि शंसनं। पादेऽवसायार्द्धर्चे प्रणव इत्येकं। अर्द्धर्चे अवसाय कृत्स्नायामृचि प्रणव इति द्वितीयं। विनैवावसानमृगन्ते प्रणव इति तृतीयं। एवं सत्युक्तेषु शस्त्र-भागेषु अर्द्धर्चेऽवसानमित्ययमेव पक्षो नुष्ठेयः॥ १॥

---

* समीचीनगतियुक्त इति क०, ग० च।

(१)राथन्तरो दक्षिणः पक्षः(१) (२)अभि त्वा शूर नोनुमोऽभित्वा पूर्वपीतय इति रथन्तरस्य स्तोत्रियानुरूपौ प्रगाथौ चतस्रः सतीः षड् बृहतीः करोति(२) (३)इन्द्रस्य नु वीर्याणि प्रवोचन्त्वेह यत्पितरश्चिन्न इन्द्रेति पञ्चदश यस्तिग्मशृङ्गो वृषभो न भीम उग्रो जज्ञे वीर्याय स्वधावानुद् ब्रह्माण्यैरत श्रवस्यात मह इन्द्रोऽत्युग्रेति पञ्च सूक्तान्यान इन्द्रो दूरादान आसादिति सम्पात इत्याहि सोम इन्मद इति पङ्क्तिः सूददोहा.(३) (४)बार्हत उत्तरः(४) (५)त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति बृहतः स्तोत्रियानुरूपौ प्रगाथौ चतस्रः सतीः षड् बृहतीः करोति(५) (६)तमु ष्टुहि यो अभिभूत्योजाः सुत इत्त्वं निमिश्ल इन्द्र सोम इति नौध्यभूरेको रयिपते रयीणामित्यष्टौ सूक्तानि कथामहामवृधत्कस्य होतुरिति सम्पात इन्द्रो मदाय वावृध इति पङ्क्तिः सूददोहाः(६) (७)राथन्तरो दक्षिणः पक्षः पञ्चदशस्तोम एकशतं वसिष्ठप्रासाद्वो बार्हत उत्तरः सप्तदशस्तोमो द्विशतं भरद्वाजप्रासाद्वः(७) (८)भद्रं पुच्छन्द्विपदासु(८) (९)इमा नु कं भुवनासीषधामायाहि वनसा सहेति नव समाम्नाता अथासमाम्नाताः(९) (१०)प्र व इन्द्राय वृत्रहन्तमाय विप्रा गाथं गायत यज्जुजोषत(१०)। (११)अर्चन्त्यर्कं देव-

तास्त्वको आस्तो भति श्रुतो युवास इन्द्रः (११)। (१२)उप-प्रक्षे मधुमति क्षियन्तः पुष्यन्तो रयिन्धीमहे तमिन्द्र (१२)। (१३)विश्वतो दावन्विश्वतो न आभर यन्त्वा शविष्ठमीमहे(१३)। (१४)स सुप्रणीते नृतमः स्वराडसि मंहिष्ठो वाजसातये (१४)। (१५)त्वं ह्येक ईशिषे सनादमृक्त ओजसा(१५)। (१६)विश्वस्य प्रस्तोभ विद्वान् पुरा वा यदि वेहास नूनं(१६)। (१७)दूषन्तो मित्रावरुणा कर्त्तनेडां पीवरीमिषंकृणुहीन इन्द्र(१७)। (१८)अस्मद मघं रयिषणि न सोमो अवृत हिनोति न स्पृशद्रयिः(१८)। (१९)एष ब्रह्मेति तिस्रः(१९) (२०)आधूर्ष्वस्मा इत्येका बृहद्दोहा यद्वा वानेति धाय्या बृहद्दोहाः(२०)॥ २॥

ऐतरेयारण्यकभाष्यम्।

भागान्तरं दर्शयति। (१)"राथन्तरो दक्षिणः पक्षः"(१) इति। योऽयं शस्त्रस्य 'दक्षिणपक्षभागः सोऽयं 'रथन्तरसामसम्बन्धी॥

तमेव रथन्तरसम्बन्धं विस्पष्टयति। (२)"अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति रथन्तरस्य स्तोत्रियानुरूपौ प्रगाथौ चतस्रः सतीः षड्बृहतीः करोति"(२) इति। ऋग्द्वयात्मकः 'प्रगाथः। द्यृचाः प्रगाथा इत्याश्वलायनेनोक्तत्वात्। 'अभि

त्वा शूर:' इत्ययं प्रगाथः 'रथन्तरसाम्नः 'स्तोत्रियः' स्तोत्रसम्बन्धी, स्तोत्रादौ ह्येष गीयते। 'अभि त्वा पूर्वेत्ययं प्रगाथस्तस्य साम्नः 'अनुरूपः', स्तोत्रियस्यानुतरमेव* गीयमानत्वात्। तावुभौ 'प्रगाथौ', मिलित्वा यद्यप्यध्ययनकाले 'चतस्रः', एव ऋचः तथापि प्रयोगकाले 'षड् बृहती:', कुर्यात्। कथन्तत्करणमिति तदुच्यते। 'अभि त्वा शूरेत्यसावृक् स्वत एव 'बृहती', वेदे समाम्नाता। ततो द्वितीयबृहत्यर्थं तस्या ऋचश्चतुर्थपादं ईशानमिन्द्रेत्यादिकं पुनर्द्विः पठित्वा, नत्वा वामित्यस्यां द्वितीयस्यामृचि† पूर्वार्द्धं पठेत्। सेयं द्वितीया 'बृहती'। ततस्तृतीयबृहत्यर्थं न जात इत्येतद् द्वितीयबृहतीगतं चतुर्थपादं पुनर्द्विरभ्यस्य ततः समाम्नातायां द्वितीयस्यामृच्युत्तरार्द्धम् अश्वायन्त इत्यादिकं पठेत्। सेयं तृतीया 'बृहती'। अनेनैव न्यायेन द्वितीयेऽपि प्रगाथे चतुर्थषष्ठौ पादौ पुनरपि द्विरावर्त्य बृहतीत्रयं सम्पादयेत्। अत्राश्वायन्त इति पादमुद्धृत्य तस्य स्थाने स्वादोः स्वादीय इति पादं प्रक्षिपेत्। एतच्च पूर्वाध्यायेऽभिहितं॥

उक्तक्रमेण बृहतीं पठित्वा पश्चात्पठनीयानि सूक्तानि दर्शयति। (३)"इन्द्रस्य नु वीर्याणि प्र वोचं त्वेह यत्पितरश्चिन इन्द्रेति पञ्चदश यस्तिग्मशृङ्गो वृषभो न भीम उग्रो जज्ञे वीर्याय स्वधावानुदु ब्रह्माण्यैरत श्रवस्याते मह इन्द्रोऽत्यग्रेति पञ्च सूक्तान्यान इन्द्रो दूरादान आसादिति सम्पात इत्याह्वि सोम इन्मद इति पङ्क्तिः सूददोहाः"(३) इति। 'इन्द्रस्य नु वीर्याणि', इति सूक्तं पञ्चदशर्चं। 'त्वेह यत्पितरः', इत्यस्मिन् पञ्चविंश-

---

* स्तोत्रियस्यानन्तरमेवेति क०, ग० च। † ऋग्वेदे म०७, सू०३२, ऋ०२२।

त्वृगात्मकस्य सूक्तस्यादौ 'पञ्चदशर्चः पठनीयाः। 'यस्तिग्मशृङ्गः', इति सूक्तमेकादशर्चं। 'उग्रो जज्ञे', इति सूक्तं दशर्चं। 'उदु ब्रह्माण्यैरत', इति सूक्तं षडृचं। 'आ ते महः' इत्यादीनि 'पञ्च सूक्तानि', तेषु प्रथमं 'आ ते महः', इति सूक्तं षडृचं। न सोम इति द्वितीयं पञ्चर्चं। इन्द्रं नर इत्येतत् तृतीयमपि पञ्चर्चं। ब्रह्माण इन्द्रेत्येतच्चतुर्थमपि पञ्चर्चं। अयं सोम इत्येतत् पञ्चममपि पञ्चर्चं। 'आ न इन्द्रः', इत्येतत् सूक्तमेकादशर्चं। तदेतत् 'सम्पातसूक्तमिति नाम्ना व्यवह्रियते। 'इत्थाहि सोमः', 'इति' एषा, 'पङ्क्तिच्छन्दस्का ऋगेका। एतावत्पठित्वा 'सूददोहाः', पठनीयाः॥

भागान्तरं दर्शयति। (४)बार्हत उत्तरः"(४) इति। योऽयं शस्त्रस्य 'उत्तरः', पक्षः, सोऽयं बृहत्सामसम्बन्धी॥

तमेव सम्बन्धं विस्पष्टयति। (५)"त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति बृहतः स्तोत्रियानुरूपौ प्रगाथौ चतस्रः सतीः षड् बृहतीः करोति"(५) इति। पूर्ववद्व्याख्येयम्॥

बृहतीपाठादूर्ध्वं पठनीयं मन्त्रजातं दर्शयति। (६)"तमु ष्टुहि यो अभिभूत्योजाः सुत इत्त्वं निमिश्ल इन्द्र सोम इति नौस्य- भूरेको रयिपते रयीणामित्यष्टौ सूक्तानि कयामहामवृधत्कस्य होतुरिति सम्पात इन्द्रो मदाय वावृध इति पङ्क्तिः सूददो- हाः"(६) इति। 'तमु ष्टुहि' इत्येतत् सूक्तं पञ्चदशर्चं*। सुत इत्त्वं', इत्यादीनि 'त्रीणि', सूक्तानि, तेषु 'सुत इत्' इत्येतत् प्रथमं दशर्चं। वृषामद इत्येतत् द्वितीयमपि सूक्तं दशर्चं। या त

* ऋग्वेदे म० ६, सू० १८, ऋ०१।

जातिरित्येतत् तृतीयं सूक्तं नवर्चं*। 'अभूरेकः', इत्यादीनि 'अष्टौ', सूक्तानि तेषु 'अभूरेकः', इति प्रथमं सूक्तं। अपूर्व्या पुरुतमानीति द्वितीयं†। य ओजिष्ठ इति तृतीयं‡। सद्य त्वे जम्नुरिति चतुर्थं। कदा भुवन्निति पञ्चमं§। सचा मदास इति षष्ठं¶। अर्वाग्रथमिति सप्तमं‖। अपादित इत्यष्टमं**। तान्येतान्यष्टावपि प्रत्येकं पञ्चर्चानि। 'कथा महां', इत्येतत् सूक्तमेकादशर्चं। तच्च 'सम्पात'शब्देन व्यवह्रियते 'इन्द्रो मदाय',†† इत्यृगेका 'पङ्क्तिच्छन्दस्का' एतत्सर्वं पठित्वान्ते 'सूददोहसं पठेत्॥

उक्तयोर्दक्षिणोत्तरपक्षयोरनुसन्धेयं कञ्चिद्विशेषं दर्शयति। (७)"राथन्तरो दक्षिणः पक्षः पञ्चदशस्तोम एकशतं वसिष्ठप्रासाहो बार्हत उत्तरः सप्तदशस्तोमो द्विशतं भरद्वाजप्रासाहः"(७) इति। योऽयमत्र 'दक्षिणः पक्षः', सोऽयं 'राथन्तरः' रथन्तरसामसम्बन्धी, तेन साम्ना स्तुतिकाले 'पञ्चदशस्तोमः', सम्पाद्यते। ऋक्त्रयस्य विष्टुतिर्ब्राह्मणोक्तप्रकारेणावृत्त्या पञ्चदशसङ्ख्या ऋचो यस्मिन् स्तोमे सम्पाद्यन्ते, सोऽयं 'पञ्चदशस्तोमः', तदात्मकोऽयं 'दक्षिणः पक्षः'। अभि त्वा शूरेत्यारभ्य इत्थाहि सोम इन्मद इत्यन्तमृग्जातं एकाधिकं शतं', सम्पद्यते, तदात्मकोऽयं 'दक्षिणः पक्षः', तमिमं पक्षं 'वसिष्ठनामको मुनिः स्वसामर्थ्येन सम्पादितवान्, अतो वशिष्ठोक्तप्रासाहः'। एवमुत्तरपक्षेऽपि

---

* ऋग्वेदे म०६, सू०२५, ऋ०१। † ऋग्वेदे म०६, सू०३२, ऋ०१।
‡ ऋग्वेदे म०९, सू०१०१, ऋ०६। § ऋग्वेदे म०६, सू०३५, ऋ०१।
¶ ऋग्वेदे म०६, सू०३६, ऋ०१। ‖ ऋग्वेदे म०८, सू०३५, ऋ०२२।
** ऋग्वेदे म०६, सू०३८, ऋ०१। †† ऋग्वेदे म०१, सू०८१, ऋ०१।

योजनीयं। पञ्चयोरुक्तस्तोमात्मकत्वन्तैत्तिरीया आमनन्ति। पञ्चदशस्तोमोऽन्यः पक्षो भवति सप्तदशोऽन्य इति॥

भागान्तरं दर्शयति। (८)"भद्रं पुच्छं द्विपदासु"(८)इति। पादद्वयोपेतास्वृक्षु 'भद्रनामकं' यत्साम तत्सम्बन्धी शस्तस्य 'पुच्छभागः॥

द्विपदा ऋचो दर्शयति। (९)"इमा नु कं भुवनासीषधामा-याहि वनसा सहेति नव समाम्नाता असमाम्नाताः"(९) इति। 'इमा नु कं', इत्यादिकं सूक्तं पञ्चर्चं *। 'आयाहि', † इत्या-दिकमृक्चतुष्टयोपेतम्। तदुभयमेलनादृचः 'नव', सम्पद्यन्ते। ताश्च 'नव', संहितायन्ये 'समाम्नाताः। 'अथ', अन्याः काश्चित् 'असमाम्नाताः', शाखान्तरगता विद्यन्ते॥

तासु प्रथमामृचमाह। (१०)"प्र व इन्द्राय वृत्रहन्तमाय विप्रा गाथं गायत यज्जुजोषत्"(१०) इति। हे 'विप्राः', ऋत्विजः, 'वः' युष्माकं, 'वृत्रहन्तमाय' अतिशयेन शत्रुघातिने इन्द्राय, इन्द्रप्रीत्यर्थं 'गाथं', 'प्रगायत' गातव्यं यत् स्तोमजातमस्ति तत्सर्वं प्रकर्षेण गायत। 'यत्' साम, स इन्द्रः 'जुजोषत्' प्रीत्या सेवते, तद्गायत॥

द्वितीयामृचमाह। (११)"अर्चन्त्यर्कं देवताम्रर्का आस्तोभति श्रुतो युवा स इन्द्रः"(११) इति। 'अर्काः' अर्चयितारो विप्राः, 'देवतासु', मध्ये 'अर्कं' अर्चनीयमिन्द्रं, 'अर्चयन्ति' पूजयन्ति।

---

* ऋग्वेदे म०१०, सू०१५७, ऋ०१।

† ऋग्वेदे म०१०, सू०१७२, ऋ०१।

'श्रुतः' वेदेषु प्रख्यातः, 'युवा' यौवनसम्पन्नः, 'सः इन्द्रः', 'आस्तोभति' सर्वत उत्साहं करोति ॥

तृतीयामृचमाह । (१२)"उपप्रक्षे मधुमति क्षियन्तः पुष्यन्तो रयिं धीमहे तमिन्द्र"(१२) इति । हे 'इन्द्र', त्वां 'धीमहि' वयन्ध्यायामः, कीदृशा वयं 'मधुमति उपप्रक्षे क्षियन्तः' प्लक्षवृक्षेण सम्पादितानि पात्राणि अत्र प्लक्षशब्देन विवक्षितानि, तेषां समीपवर्त्ती यागप्रदेशः 'उपप्रक्षः' । स च सोमाज्यादिमाधुर्य्यरसोपेतत्वात् मधुमान्, तादृशे प्रदेशे 'क्षियन्तः' निवसन्तः । तथा 'रयिं पुष्यन्तः' धनं वर्द्धयन्तः ॥

चतुर्थीमृचमाह । (१३)"विश्वतो दावन्विश्वतो न आभर यन्त्वा शविष्ठमीमहे"(१३) इति । हे इन्द्र 'शविष्ठ' अतिशयेन बलयुक्त, 'यं', 'त्वां,' 'ईमहे' प्राप्नुयाम, याचामहे वा, 'विश्वतो दावन्' सर्वेषां प्राणिनां धनादि ददन्, तादृशस्त्वं 'नः' अस्माकं, 'विश्वतः' सर्वस्मात् देशात्, 'आभर' धनादिकमानय ॥

पञ्चमीमृचमाह । (१४)"स सुप्रणीते नृतमः स्वराड़सि मंहिष्ठो वाजसातये"(१४) इति । हे इन्द्र 'सुप्रणीते' सुष्ठु सम्पादितेऽस्मिन् कर्म्मणि, 'वाजसातये' अस्मभ्यमन्नदानाय, 'मंहिष्ठः' अतिशयेन पूजितः सन्, त्वं 'नृतमः' उत्तमपुरुषः, 'स्वराट्' स्वयमेव विराट्, 'असि', न त्वन्यपरतन्त्र इत्यर्थः ॥

षष्ठीमृचमाह । (१५)"त्वं ह्येक ईशिषे सनादस्तृत ओजसा"(१५) इति । हे इन्द्र 'त्वं हि' त्वमेक एव, 'ओजसा' परकीयबलेन, 'अस्तृतः' अमार्जितोऽतिरस्कृतः, 'सनात्' सनितुं धनादिकं दातुं, 'ईशिषे' समर्थोऽसि ॥

सप्तमीमृचमाह। (१६)विश्वस्य प्रस्तोभ विद्वान् पुरा वा यदि वेहास नूनं"(१६) इति। 'विश्वस्य' सर्वस्य जगतः,'प्रस्तोभ' प्रकर्षेणोत्साहजनक, हे इन्द्र, 'पुरा वा' अस्मादनुष्ठानात् प्रागेव, भवान् 'विद्वान् आस' अस्मद्भक्तिज्ञानोपपन्नः, 'यदि वा' अथ वा, 'इह' अस्मिन् कर्म्मणि, 'नूनं' अवश्यं, भवान् 'विद्वानास' ॥

अष्टमीमृचमाह। (१७)"इषं नो मित्रावरुणा कर्त्तनेड़ां पीवरीमिषं कृणुहीन इन्द्र"(१७) इति। 'मित्रावरुणा' हे मित्रावरुणौ, युवां 'नः' अस्माकं, 'इषं' अन्नं, 'इड़ां' भूमिं, च 'कर्त्तन' कुरुतं, हे 'इन्द्र', 'नः' अस्माकं, 'पीवरीं' अतिप्रभूतां, 'इषं' अन्नं, 'कृणुहि' कुरु ॥

नवमीमृचमाह। (१८) "शं पदं मघं रयीषणि न सोमो अव्रतं हिनोति न स्पृशद्रयिः"(१८) इति। हे इन्द्र 'रयीषणि' धनस्य दातरि, मयि,'शं' सुखं, 'पदं' निवासस्थानं, 'मघं' धनञ्च, सम्पादयेति शेषः। योऽयं 'सोमः', सोऽयं 'अव्रतं' अनुष्ठानरहितं, 'न हिनोति' न प्रीणयति। 'रयिः' फलभूतं धनं, 'अव्रतं' अनुष्ठानरहितं पुरुषञ्च, 'न', प्राप्नोति। ता एता नवसङ्ख्याका अस्यां संहितायामसमाम्नाता ऋचः ॥

पुनरप्यसमाम्नाताः सूत्रगतषष्ठाध्याये पठिता द्विपदा ऋचो दर्शयति। (१९)"एष ब्रह्मेति तिस्रः"(१९) इति। 'एष ब्रह्मा' य ऋत्विय इत्येका, विस्तुतयो यथेति द्वितीया, त्वामिच्छवस स्पत इति तृतीया ॥

संहितायां समाम्नातान्यृगन्तराणि चत्वारि दर्शयति। (२०) "आधूर्ष्वस्मा इत्येका सूददोहा यद्वा वानेति धाय्या

सूददोहाः"(२०) इति। 'आधूर्ष्वस्मै', इति द्विपदा* तां पठित्वा 'सूददोहसं पठेत्। ततः 'यद्वावान पुरुतममित्येतां चतुष्पादामृचं† 'धाय्यासञ्ज्ञितां, पठित्वा, पुनरपि 'सूददोहसं पठेत् ॥ २ ॥

(१)गायत्री तृचाशीतिः(१) (२)महाँ इन्द्रो य ओजसेति तिस्र उत्तमा उद्धरति पुरोडाशन्नो अन्धस इति तिस्र इन्द्र इत्सोमपा एक इत्येतत्प्रभृतीनां तिस्र उत्तमा उद्धरति तासां स्वादवः सोमा आयाहीत्येतामुद्धृत्य न ह्यन्यं बलाकरमित्येतां प्रत्यवदधाति जज्ञानो नु शतक्रतुरित्येका पुरुहूतं पुरुष्टुतमिति शेष उद्घेदभिश्रुतामघमित्युत्तमामुद्धरति प्रकृतान्यृजीषिण आघाये अग्निमिन्धत आ त्वन इन्द्र क्षुमन्तमिति सूक्ते सूददोहाः(२) ॥ ३ ॥

ऐतरेयारण्यकभाष्यम्।

पूर्वोक्तपुच्छभागशंसनादूर्ध्वं शंसनीयं मध्यभागं दर्शयति। (१)"गायत्री तृचाशीतिः"(१) इति। तिसृणामृचां समाहारः‡ तृचः, तादृशानां तृचानामशीतिः 'तृचाशीतिः', चत्वारिंशदधिकशतद्वयसङ्ख्याका ऋच इत्यर्थः। सेयमशीतिः 'गायत्रीछन्दस्का पठनीया ॥

प्रतिज्ञाताः सर्वा ऋचो दर्शयति। (२)"महाँ इन्द्रो य

* ऋग्वेदे म०७, सू०३४, ऋ०४। † ऋग्वेदे म०१०, सू०७४, ऋ०६।

‡ समूह इति क०, ग० च।

ओजसेति तिस्र उत्तमा उद्धरति पुरोड़ाशन्नो अन्धस इति तिस्र इन्द्र इत्सोमपा एक इत्येतत्प्रभृतीनां तिस्र उत्तमा उद्धरति तासां स्वादवः सोमा आयाहोत्येतामुद्धृत्य न ह्यन्यं बलाकरमित्येतां प्रत्यवदधाति जज्ञानो नु शतक्रतुरित्येका पुरुहृतं पुरुष्टुतमिति शेष उदृवेदभिश्रुतामघमित्युत्तमामुद्धरति प्रक्तान्यृजीषिण आवाये अग्निमिन्धत आ तू न इन्द्र सुमन्तमिति सूक्ते सूद्दोहाः"(२) इति। 'महां इन्द्रः', इत्येतत् सूक्तमष्टाचत्वारिंशद्भिर्ऋग्भिरुपेतं, तस्मिन् सूक्ते शतमहं* इत्यादिकाः सूक्तावसानभागस्थाः 'तिस्रः', ऋचः, उद्धृत्य, सोमपेयाय वक्षत इत्यन्तमेव पञ्चचत्वारिंशद्भिर्ऋग्भिरुपेतं पठेत्। तत ऊर्ध्वं 'पुरोड़ाशन्नः',† इत्यादिकाः 'तिस्रः', ऋचः, पठेत्। इदं वसो सुतमन्ध इत्यस्मिन् द्विचत्वारिंशद्भिर्ऋग्भिरुपेते सूक्ते प्रथमतः पठितास्तिस्र ऋचः परित्यज्य 'इन्द्र इत्सोमपाः',‡ इत्यादिकं पठेत्। तत्रापि 'इत्था धीवन्तं' § इत्यादिका अवसानभागगताः 'तिस्रः', ऋचः, उद्धृत्य ये अस्मिन् काममश्रियन्नित्येतदन्तमेव षड्त्रिंशद्भिर्ऋग्भिरुपेतं पठेत्। तस्यापि मध्ये 'स्वादवः सोमाः',¶ इत्येतामृचमुद्धृत्य तस्याः स्थाने 'न ह्यन्यं', ‖ इत्येतामृचं 'प्रत्यवदध्यात्। तया प्रत्यवहितया सहितं षट्त्रिंशट्टक्समूहं पठित्वा तदूर्ध्वं 'जज्ञानो नु',** इत्येकामृचं पठेत्। पान्तमा वो†† इत्येतस्मिन् सूक्ते त्रयस्त्रिंशद्भि–

---

* ऋग्वेदे म०८, सू०६, ऋ०४६।

† ऋग्वेदे म०८, सू०७८, ऋ०१।

‡ ऋग्वेदे म०८, सू०१, ऋ०४।

§ ऋग्वेदे म०८, सू०२, ऋ०४०।

¶ ऋग्वेदे म०८, सू०२, ऋ०२८।

‖ ऋग्वेदे म०८, सू०८०, ऋ०१।

** ऋग्वेदे म०८, सू०७७, ऋ०१।

†† ऋग्वेदे म०८, सू०९२, ऋ०१।

र्ऋग्भिरुपेते प्रथमामृचं परित्यज्य 'पुरुहूतं',* इत्यारभ्य द्वात्रिंशद्भिर्ऋग्भिरुपेतः सूक्तशेषः पठनीयः। 'उद्वेत्',† इत्यस्मिन् सूक्ते चतुस्त्रिंशद्भिर्ऋग्भिरुपेते इन्द्र इषेत्येकामृचं सूक्तावसानादिभागस्थामुद्धृत्य‡ त्रयस्त्रिंशद्भिर्ऋग्भिरुपेतं सूक्तं पठेत्। 'प्रकृतानि',§ इति त्रिंशद्भिर्ऋग्भिरुपेतं सूक्तं पठेत्। 'आ घा ये',¶ इति द्विचत्वारिंशद्भिर्ऋग्भिरुपेतं सूक्तं पठेत्। 'आ तू न इन्द्र', इत्यादिकं नवभिर्ऋग्भिरुपेतं एकं सूक्तं ‖, तत उपरितनं आ प्रद्रवेत्यादिकं नवर्चं सूक्तं **, ते द्वे अपि सूक्ते पठेत्। ततः 'सूददोहाः', पठनीया। एवं सति सूददोहसः प्राचीनाश्चत्वारिंशदधिकशतद्वयसङ्ख्याका ऋचः। ततस्तृचाशीतिः सम्पद्यते ॥ २ ॥

(१)बार्हती तृचाशीतिः(१)(२)मा चिदन्यद्विशंसते इत्येकया न त्रिंशत्पिबा सुतस्य रसिन इति विंशतेः सप्तमीश्चाष्टमीश्चोद्धरति यदिन्द्र प्रागपागुदगिति चतुर्दश वयं घत्वा सुतावन्त इति पञ्चदश मो षु त्वावाघतश्च नेत्येतस्य द्विपदाश्चोद्धरति राथन्तरञ्च प्रगाथमथ हास्य न किः सुदासो रथमित्येतं प्रगाथमुद्धृत्य त्वामिदाह्यो

---

* ऋग्वेदे म०८, सू०९२, ऋ०२।

† ऋग्वेदे म०८, सू०९३, ऋ०१।

‡ इन्द्र इत्यादिकामुत्तमामृचमुद्धृत्या-वशिष्टमिति ग०।

§ ऋग्वेदे म०८, सू०३२, ऋ०१।

¶ ऋग्वेदे म०८, सू०४५, ऋ०१।

‖ ऋग्वेदे म०८, सू०८१, ऋ०१।

** ऋग्वेदे म०५, सू०३१, ऋ०२।

नर इत्येतं प्रगाथं प्रत्यवदधात्यभि प्र वः सुराधसमिति षड् बालखिल्यानां सूक्तानि यः सत्राहा विचर्षणिरिति शेषोऽयन्ते अस्तु हर्यत इति सूक्ते उभयं शृणवच्च न इति सप्तमीञ्चाष्टमीञ्चोद्धरति तरोभिर्वो विदद्वसुमित्युत्तमामुद्धरति यो राजा चर्षणीनामित्येकादश तं वो दस्ममृतीषह मा नो विश्वासु हव्यो या इन्द्र भुज आभर इति नव बृहद्दोहाः(२) ॥ ४ ॥

ऐतरेयारण्यकभाष्यम् ।

गायत्रास्तृचाशीतेरूर्ध्वं शंसनीयभागं दर्शयति । (१)"बार्हती तृचाशीतिः"(१) इति । बृहतीच्छन्दोयुक्ता काचित् 'तृचाशीतिः', पठनीया ॥

तत्रत्या ऋचो विविच्य दर्शयति । (२)"माचिदन्यद्विशंसतेत्येकया न त्रिंशत् * पिबासुतस्य रसिन इति विंशतेः सप्तमीञ्चाष्टमीं चोद्धरति यदिन्द्र प्रागपागुदगिति चतुर्दश वयङ्क्वा सुतवन्त इति पञ्चदश मो षु त्वा वाघतश्च नेत्येतस्य द्विपदाश्चोद्धरति राथन्तरञ्च प्रगाथमथ ह्यस्य न किः सुदासो रथमित्येतं प्रगाथमुद्धृत्य त्वामिदाह्यो नर इत्येतं प्रगाथं प्रत्यवदधात्यभि प्र वः सुराधसमिति षड् बालखिल्यानां सूक्तानि । यः सत्राहा विचर्षणिरिति शेषोऽयन्ते अस्तु हर्यत इति सूक्ते उभयं शृणवच्च न इति सप्तमीञ्चाष्टमीञ्चोद्धरति तरोभिर्वो विदद्वसुमित्युत्तमामुद्धरति यो राजा

* एकोनत्रिंशदिति आदर्शधृतपाठान्तरं ।

चर्षणीनामित्येकादश तं वोदस्मऋतीषह मा नो विश्वासु हव्यो या इन्द्र भुज आभर इति नव सूददोहाः"(२) इति। 'मा चिदन्यत्,' इत्यादिकं चतुस्त्रिंशद्भिर्ऋग्भिरुपेतं सूक्तं। तस्य सूक्तस्यावसानभागस्थाः स्तुहि स्तुहीत्यादिकाः* पञ्च परित्यज्य स्तोमासो अव्रत्तेत्यन्तमेकोनत्रिंशद्भिर्ऋग्भिरुपेतं सूक्तं पठेत्। 'पिबा-सुतस्य',† इत्येतस्मिंश्चतुर्विंशतिभिर्ऋग्भिरुपेते सूक्ते 'विंशति-सङ्ख्याकाया ऋचः ‡ ऊर्ध्व° यं मेदुरित्याद्यास्तिस्र ऋचः§ परित्यजेत्। अवशिष्टायां विंशतावपि अभि त्वा पूर्वपीतय इत्येतां¶ 'सप्तमी', अस्येदिन्द्रो वावृध इत्येतां‖ 'अष्टमीञ्च', परित्यज्य अवशिष्टमष्टादशभिर्ऋग्भिरुपेतं सूक्तं पठेत्। 'यदिन्द्र प्रागपागुदक्',** इत्यादिकं एकविंशत्यृग्भिरुपेतं सूक्तं, तत्रान्तिमाः प्र पूषणमित्यादिकाः सप्त परित्यज्य वहन्तु सवनेदुपेत्यन्तमेव चतुर्दशभिर्ऋग्भिरुपेतं पठेत्। 'वयं घत्वा', इति सूक्तमेकोनविंशत्यृग्भिः संयुक्तं। न हिषस्तवेत्यादिकास्तिस्रः†† परित्यज्य मदाय द्युक्ष सोमपा इत्यन्तमेव पञ्चदशभिर्ऋग्भिरुपेतं पठेत्। 'मो षु त्वा',‡‡ इत्यादिकं सप्तविंशत्यृग्भिरुपेतं सूक्तं। तस्मिन् सूक्ते रायस्काम इत्येतां 'द्विपदां', ऋचं§§ उद्धरेत्। तथा 'रथन्तरसामसम्बन्धि 'प्रगाथं', अभि त्वा शूरेत्यादिकमृग्द्वयमुद्धरेत्।

---

* ऋग्वेदे म०८, सू०१, ऋ०३०। ** ऋग्वेदे म०८, सू०६५, ऋ०१।

† ऋग्वेदे म०८, सू०३, ऋ०१। †† ऋग्वेदे म०८, सू०३३, ऋ०१६।

‡ विंशतिसङ्ख्याकाभ्यः ऋग्भ्य इत्यादर्शधृतपाठान्तरं।

§ ऋग्वेदे म०८, सू०३, ऋ०२१। ‡‡ ऋग्वेदे म०७, सू०३२, ऋ०१।

¶ ऋग्वेदे म०८, सू०३, ऋ०७। ¶¶ ऋग्वेदे म०७, सू०३२ ऋ०१।

‖ ऋग्वेदे म०८, सू०३, ऋ०८। §§ ऋग्वेदे म०८, सू०९९, ऋ०१।

ततोऽवशिष्टं चतुर्विंशत्यृग्भिरुपेतं सूक्तं पठेत्। तत्रापि 'न किः सुदासो रथमित्येतं 'प्रगाथमुद्धृत्य तस्य स्थाने 'त्वामिदाह्यो नरः', 'इत्येतं* प्रगाथं', प्रक्षिप्य पठेत्। 'अभि प्र वः', इत्यादिकानि† 'वालखिल्यानां', संहितायामाम्नातानि षट्पञ्चाशदृग्भिरुपेतानि 'षट् सूक्तानि', पठेत्। त्वामिद्धि हवामहे इत्यादिकं चतुर्दशभिर्ऋग्भिरुपेतं सूक्तं, तस्मिन्नादित आरभ्य द्वे ऋचौ परित्यज्य 'यः सत्राहाविचर्षणिः', इत्यादिकं‡ द्वादशभिर्ऋग्भिरुपेतं सूक्तशेषं पठेत्। 'अयन्ते अस्तु हर्यते', इति, पञ्चर्चमेकं सूक्तं, § आमन्द्रैरित्यपि पञ्चर्चं ¶ द्वितीयं सूक्तन्ते उभे 'सूक्ते', पठेत्। 'उभयं शृणवच्च न', इत्यादिकमष्टादशर्चं सूक्तं ‖ तस्य मध्ये त्वं ह्येहीत्येतां 'सप्तमीं', त्वं पुरु सहस्राणीत्येतां 'अष्टमीं', 'च', ** 'उद्धृत्यावशिष्टं' षोडशर्चं सूक्तं पठेत्। 'तरोभिर्वः', इत्यादिकं पञ्चदशर्चं सूक्तं †† तस्मिन् 'उत्तमां', सोम इद्धः सुतः‡‡ इत्यादिकामृचमुद्धृत्यावशिष्टं चतुर्दशर्चं सूक्तं पठेत्। 'यो राजा चर्षणीनां', इत्येतत् पञ्चदशर्चं सूक्तं, ¶¶ तत्र त्वं न इन्द्रासामित्यादिकास्तस्र ऋचः§§ परित्यज्यावशिष्टमेकादशर्चं पठेत्। 'तं वो दस्ममृतीषहं', ‖‖ इत्यादिकं षडर्चं सूक्तं पठेत्। 'आ नो विश्वासु हव्य', इत्यादिकमपि

---

* ऋग्वेदे म०८, सू०९९, ऋ०१।
† ऋग्वेदे म०८, सू०४९, ऋ०१।
‡ ऋग्वेदे म०६, सू०४६, ऋ०३।
§ ऋग्वेदे म०३ सू०४४, ऋ०१।
¶ ऋग्वेदे म०३ सू०४५, ऋ०१।
‖ ऋग्वेदे म०८, सू०६१, ऋ०१।
** ऋग्वेदे म०८, सू०६१, ऋ०८।
†† ऋग्वेदे म०८, सू०६६, ऋ०१।
‡‡ ऋग्वेदे म०८, सू०६६, ऋ०१५।
¶¶ ऋग्वेदे म०८, सू०७०, ऋ०१।
§§ ऋग्वेदे म०८, सू०७०, ऋ०१२।
‖‖ ऋग्वेदे म०८, सू०८८, ऋ०१।

षड्टचं सूक्तं पठेत्। 'या इन्द्र', इत्यादिकं पञ्चदशर्चं सूक्तं,* तस्यावसानभागे विश्वाः पृतना इत्यादिकाः षड्टचः† परित्यज्य न त्वा देवास आसतेत्यन्तं‡नवर्चं पठेत्। ततः 'सूददोहसं' पठेत्। एवं सति सूददोहसः प्राचीना बार्हती बृचाशीतिः सम्पद्यते ॥ ४ ॥

(१)औष्णिही बृचाशीतिः(१) (२)य इन्द्र सोमपातम इति सूक्तं तम्बभिप्रगायतेत्युत्तमामुद्धरतीन्द्राय साम गायत सखाय आशिषामहीति तिस्र उत्तमा उद्धरति य एक इद्विदयत आयाह्यद्रिभिः सुतं यस्य त्यच्छम्बरं मद इति त्रयस्तृचा गायत्रयः सम्पदोष्णिहः सप्त सप्त गायत्र्यः षट्षडुष्णिहो भवन्ति। यदिन्द्राहं यथा त्वं प्र सम्राजं चर्षणीनामिति सूक्ते उत्तरस्योत्तमे उद्धरति वार्त्रहत्याय शवस इत्युत्तमामुद्धरति सुरूपकृत्नुमूतय इति त्रीण्येन्द्र-सानसिं रयिमिति सूक्ते य आनयत्परावत इति तिस्र उत्तमा उद्धरति रेवतीर्नः सधमाद इति तिस्रः सूददोहा इति(२) (३)एतास्तिस्रस्तृचाशीतयः सर्वा अर्द्धर्चाः(३) (४)अन्नमशीतयः(४) (५)उदरं वशः(५) (६)त्वावतः पुरूवसविति वशः सनितः सुसनितरित्येतदन्तो ददीरेक्ण

* ऋग्वेदे म०८, सू०६, ऋ०२०। ‡ ऋग्वेदे म०८, सू०९७, ऋ०९।

† ऋग्वेदे म०८, सू०९७, ऋ०१०।

इति द्विपदा नूनमथेत्येकपदा ता अस्य सूददोहस इत्येतदन्तः सूददोहाः सूददोहाः(६) ॥ ५ ॥

इत्यैतरेयारण्यके पञ्चमारण्यके द्वितीयोऽध्यायः ॥

ऐतरेयारण्यकभाष्यम्।

बार्हत्यास्तृचाशीतेरूर्ध्वं शंसनीयभागं दर्शयति। (१)"औष्णिही तृचाशीतिः"(१) इति। उष्णिक्छन्दोयुक्ता काचित् 'तृचाशीतिः', पठनीया॥

तत्रत्या ऋचो विविच्य दर्शयति। (२)"य इन्द्र सोमपातम इति सूक्ते तम्वभि प्र गायतेत्युत्तमामुद्धरतीन्द्राय साम गायत सखाय आ निषीदतेति तिस्र उत्तमा उद्धरति य एक इद्विदयत आ याह्यद्रिभिः सुतं यस्य त्यच्छम्बरं मद इति त्रयस्तृचा गायत्राः सम्पदोष्णिहः सप्त सप्त गायत्राः षट्षडुष्णिहो भवन्ति यदिन्द्राहं यथा त्वं प्र सम्राजं चर्षणीनामिति सूक्ते उत्तरस्योत्तमे उद्धरति वार्त्रहत्याय शवस इत्युत्तमामुद्धरति सुरूप कृत्नुमूतय इति नीथ्येन्द्र सानसिं रयिमिति सूक्ते य आनयत्परावत इति तिस्र उत्तमा उद्धरति रेवतीर्नः सधमाद इति तिस्रः सूददोहाः"(२) इति। 'य इन्द्र सोमपातमः', इत्येतत् त्रयस्त्रिंशदृचमेकं सूक्तं*, इन्द्रः सुतेष्वित्येतदपि त्रयस्त्रिंशदृचं द्वितीयं सूक्तं†, ते उभे 'सूक्ते',पठेत्। 'तम्वभि प्र', इत्या-

* ऋग्वेदे म०८, सू०१२, ऋ०१। † ऋग्वेदे म०८, सू०१३, ऋ०१।

दिकं त्रयोदशर्चं सूक्तं* 'परमामरं त्वयाय' इत्यादिकामृचं† 'उद्वृत्याक्षाकेभिर्नृभिरक्तारवर्जयेत्' येतदन्तं द्वादशर्चं सूक्तं‡ पठेत्। 'इन्द्राय साम', इत्यादिकं द्वादशर्चं सूक्तं§ पठेत्। 'सखाय', इत्यादिकं त्रिंशदृचं सूक्तं, ¶ तस्मिन्नन्तिमा यथा ]वरी इत्यादिकाः 'तिस्रः', ऋचः, ‖ 'उद्वृत्य वधदीसस्य तु विन्हम्णनी मम इत्यन्तं सप्तविंशत्यृचं सूक्तं पठेत्। 'य एकः', इत्यादिक एकस्तृचः ** 'आ याहि', इत्यादिर्द्वितीयस्तृचः †† 'यस्य त्यत्', इत्यादिस्तृतीयस्तृचः ‡‡ त एते 'त्रयस्तृचाः', पठनीयाः। इत ऊर्ध्वं गायत्रीच्छन्दस्का ऋचः पठनीयाः। ताश्च 'गायत्रीः', 'उष्णिहोन सम्पादनीयाः। तत्सम्पादनं कथमिति तदुच्यते। 'सप्त गायत्रीः', त्रिलिख्या, 'षडुष्णिहः', सम्पद्यन्ते। सप्तस्वां गायत्रीत्वक्षरचतुष्काणि षड् विद्यन्ते, तेष्वेकैकं चतुष्कं एकैकस्यां गायत्र्यां योजनीयं। ततोऽष्टाविंशत्यक्षरत्वादुष्णिगेव सम्पद्यते। एवं सप्तसु गायत्रीषु 'षडुष्णिहः', सम्पन्नाः 'भवन्ति'। सर्वास्वपि गायत्रीषु एवमुष्णिक्सम्पादनाय 'सप्त सप्त गायत्र्यः षट्षडुष्णिहो भवन्ति', इति वीप्सा पठिता। 'यदिन्द्राहं', इत्यादिकं पञ्चदशर्चं सूक्तं §§ गायत्रीच्छन्दस्कं पठेत्। 'प्र

---

* ऋग्वेदे म०८, सू०१५, ऋ०१।
† ऋग्वेदे म०८, सू०१५, ऋ०१३।
‡ ऋग्वेदे म०२, सू०३०, ऋ०१०।
§ ऋग्वेदे म०८, सू०६४, ऋ०१।
¶ ऋग्वेदे म०८, सू०२४, ऋ०१।
‖ ऋग्वेदे म०८, सू०२४, ऋ०२८।
** ऋग्वेदे म०१, सू०८४, ऋ०७।
†† ऋग्वेदे म०५, सू०४०, ऋ०१।
‡‡ ऋग्वेदे म०६, सू०४३, ऋ०१।
§§ ऋग्वेदे म०८, सू०१४, ऋ०१।

सम्राजं,* इत्यादिकं द्वादशर्चं सूक्तं, आयाहि सुषुमाहित इति पञ्चदशर्चं सूक्तन्ते उभे गायत्रीछन्दस्के सूक्ते पठनीये। तत्र 'उत्तरसूक्तस्य 'उत्तमे' द्वे वास्तोष्पते ध्रुवा स्थूणेत्यादिके, † उद्धृत्यावशिष्टत्रयोदशर्चं त्र्यस्मिन् दश आ सत इत्येतदन्तमेव पठनीयं। 'वार्त्रहत्याय', इत्यादिकमेकादशर्चं गायत्रीच्छन्दस्कं सूक्तं ‡। तत्र 'उत्तमां' अबीवतो न इत्येतामृचं, § 'उद्धृत्य उक्ते युञ्जन्ति रासभीत्यन्तमेव दशर्चं पठेत्। 'सुरूप कृत्नुमूतये', ¶ इत्यादिकं गायत्रीछन्दस्कं दशर्चमेकं सूक्तं। आ त्वेता नि षीदतेत्यादिकमपि गायत्रीछन्दस्कं दशर्चं ‖ तच्च द्वितीयं सूक्तं, युञ्जन्ति ब्रध्नमित्यादिकमपि गायत्रीछन्दस्कं दशर्चं** तृतीयं सूक्तन्त्येतानि 'त्रीणि', सूक्तानि, पठेत्। 'एन्द्र सानसिं', इत्यादिकं गायत्रीछन्दस्कं दशर्चमेकं सूक्तं †† इन्द्रेहि मत्स्यन्धस इत्येतदपि गायत्रीच्छन्दस्कं दशर्चं, तच्च द्वितीयं सूक्तं,‡‡ एते उभे अपि पठेत्। 'य आनयत्', इत्यादिकं त्रयस्त्रिंशदृचं गायत्रीछन्दस्कं सूक्तं,§§ तस्मिन् 'उत्तमाः', अधि बृबुः पणीनामित्यादिकास्तिस्र ऋचः¶¶ उद्धृत्य अस्मानायेमहे हिन्वित्यन्तं त्रिंशदृचं सूक्तं पठेत्। 'रेवतीर्नः', ‖‖ इत्यादिका गायत्रीछन्दस्काः 'तिस्रः', ऋचः, पठेत्। यदिन्द्राहमित्यारभ्य

---

* ऋग्वेदे म०८, सू०१६, ऋ०१।
† ऋग्वेदे म०८, सू०१७, ऋ०१४।
‡ ऋग्वेदे म०३, सू०३७, ऋ०१।
§ ऋग्वेदे म०३, सू०४०, ऋ०८।
¶ ऋग्वेदे म०१, सू०४, ऋ०१।
‖ ऋग्वेदे म०१, सू०५, ऋ०१।
** ऋग्वेदे म०१, सू०६, ऋ०१।
†† ऋग्वेदे म०१, सू०८, ऋ०१।
‡‡ ऋग्वेदे म०१, सू०९, ऋ०१।
§§ ऋग्वेदे म०६, सू०४५, ऋ०१।
¶¶ ऋग्वेदे म०६, सू०४५, ऋ०३१।
‖‖ ऋग्वेदे म०१, सू०३०, ऋ०१३।

'रेवतीर्नः', इति तृचान्तास्त्रयस्त्रिंशदधिकाः शतसङ्ख्याका गायत्र्योऽत्र पठनीयाः। तासु पूर्वोक्तप्रकारेण 'सप्तसु 'सप्तसु गायत्रीषु 'षड़ुष्णिहः', सम्पद्यन्ते। तथा सति चतुर्दशाधिकाः शतसङ्ख्याका उष्णिहः सम्पन्नाः। 'य इन्द्र सोमपातमः', इत्याद्यास्तु स्वतः सिद्धा उष्णिहः षड्विंशत्यधिकाः शतसङ्ख्याकाः, तासां सर्वासां मेलनादौष्णिही तृचाशीतिः सम्पद्यते। इमां पठित्वाऽन्ते सूददोहसं पठेत्॥

तृचाशीतिशंसने कञ्चिद्विशेषं विधत्ते। (३)"इत्येतास्तिस्रस्तृचाशीतयः सर्वा अर्द्धर्चाः"(३) इति। 'एताः' पूर्वोक्ता गायत्रीबृहत्युष्णिक्छन्दस्काः, 'तृचाशीतयः', याः, सन्ति, ताः 'सर्वा अर्द्धर्चाः', अर्द्धमर्हन्ति। एवं सति प्रथमेऽर्द्धर्चेऽवसाय पश्चादुत्तरमर्द्धर्चं पठेदित्यर्थः॥

अशीतिष्वन्नबुद्धिमभिप्रेत्यान्नरूपेण ताः प्रशंसति। (४)"अन्नमशीतयः"(४) इति। या उक्ताः 'अशीतयः', ताः, पक्ष्याकारस्य शस्त्रस्य 'अन्नस्थानीयाः' तथात्वं मनसि धारयेदित्यर्थः॥

वक्ष्यमाणस्य वशनाम्न ऋक्समूहस्य उदरत्वानुस्मरणमभिप्रेत्य प्रशंसति। (५)"उदरं वशः"(५) इति। 'वशाख्य ऋक्सङ्घः पक्ष्याकारस्य शस्त्रस्य 'उदरं', । तथात्वेन भावयेदित्यर्थः॥

वशनामकमृक्सङ्घं विधत्ते। (६)"त्वावतः पुरूवसविति वशः सनितः सुसनितरित्येतदन्तो ददी रेक्ण इति द्विपदा नूनमथेत्येकपदा ता अस्य सूददोहस इत्येतदन्तः सूददोहाः सूददोहाः"(६) इति। 'त्वावतः', इत्यादिकं त्रयस्त्रिंशदृचं सूक्तं। तस्मिन् सूक्ते 'सनितः सुसनितः', इत्येषा ऋक् त्रिंशतितमा,

तदन्तानां विंशतिसङ्ख्याकानामृचां समूहो 'वशनामकः'। तन्मध्ये 'ददी रेक्णः', 'इति' काचिदृक् पठिता, सा 'द्विपदा', द्रष्टव्या। 'नूनमथ', 'इति' अक्षरचतुष्टयात्मिका काचिदृक्, 'एकपदा', तदुभयमत्र बुद्धिभ्रमव्यावृत्तये विशिष्यते। अध्ययनकाले वशाख्य ऋक्सङ्घः 'सनितः सुसनितरित्येतदन्तः'। प्रयोगकाले तु 'ता अस्य सूददोहसः', इत्येतामप्यृचं पठित्वा, स एवविंशत्यृगात्मकः 'वशः', प्रयोक्तव्यः। अन्ते पठितायाः 'सूददोहसः'। पुनरावृत्तिरध्यायपरिसमाप्तिद्योतनार्था ॥ ५ ॥

इति माधवीये वेदार्थ-प्रकाशे ऐतरेयारण्यके पञ्चमारण्यके
द्वितीयोऽध्यायः ॥

---

## अथ तृतीयोऽध्यायः।



(१)ऊह्व३(१) (२)इन्द्राग्नी युवं सु न इत्येतस्यार्द्धर्चान् गायत्रीकारमुत्तरमुत्तरस्यानुष्टुप्कारं प्रागुत्तमायाः प्र वो महे मन्दमानायान्धस इति निविद्धानं वने न वा यो न्यधायि चाकन्यो जात एव प्रथमो मनस्वानिति ते अन्तरेणा याह्यर्वाङुप बन्धुरेष्ठा विधुन्दद्राणं समने बहूनामित्येतदावपनं द्वयतीनामैन्द्रीणां त्रिष्टुब्जगतीनां बृहतीसम्पन्नानां३ यावतीरावपेरंस्तावन्त्यूर्ध्वमायुषो वर्षाणि जिजीविषेत् संवत्सरात् संवत्सराद्द्वयतो न वा त्वमू षु वाजिनं देवजूतमिन्द्रो विश्वं विराजतीत्येकपदेन्द्रं विश्वा अवीवृधन्नित्यानुष्टुभं तस्य प्रथमायाः पूर्वमर्द्धर्चं शस्त्वोत्तरेणार्धर्चेनोत्तरस्याः पूर्वमर्द्धर्चं व्यतिषजति पादैः पादाननुष्टुप्कारं प्रागुत्तमायाः पूर्वस्मात् पूर्वस्मादर्धर्चादुत्तरमुत्तरमर्द्धर्चं व्यतिषजति प्रकृत्या शेषः पिबा सोममिन्द्र मन्दतु त्वेति षड् योनिष्ट इन्द्र सदने अकारीत्येतस्य चतस्रः शस्त्वोत्तमामुपसन्तत्योपोत्तमया परिदधाति(२) (३)परिहित उक्थ उक्थसम्पदं जपति(३)(४)उक्थवीर्यस्य स्थान उक्थदोहः(४) ॥ १ ॥

ऐतरेयारण्यकभाष्यम्।

पङ्क्तिरूपस्य शस्त्रस्योत्तरभागं प्रतिजानीते। (१)''ऊरू''(१) इति। यौ 'ऊरू', तौ कथ्येते इति शेषः।

(२)''इन्द्राग्नी युवं सु न इत्येतस्यार्धर्चान् गायत्रीकारमुत्तरमुत्तरस्यानुष्टुप्कारं प्रागुत्तमायाः प्र वो मन्हे मन्दमानायान्धस इति निविद्धानं वने न वा यो न्यधायि चाकन् यो जात एव प्रथमो मनस्वानिति ते अन्तरेणायाह्यर्वाङ् उप बन्धुरेष्ठा विधुन्दद्राणं समने बहूनामित्येतदावपनं दशतीनामैन्द्रीणां त्रिष्टुब्जगतीनां बृहतीसम्पन्नानां यावतीरावपेरंस्तावन्त्यूर्ध्वमायुषो वर्षाणि जिजीविषेत् संवत्सरात् संवत्सरात् दशतो न वा त्यमू षु वाजिनं देवजूतमिन्द्रो विश्वं विराजतीत्येकपदेन्द्रं विश्वा अवीवृधन्नितरानुष्टुभं तस्य प्रथमायाः पूर्वमर्धर्चं शस्त्वोत्तरेणार्धर्चेनोत्तरस्याः पूर्वमर्धर्चं व्यतिषजति पादैः पादाननुष्टुप्कारं प्रागुत्तमायाः पूर्वस्मात् पूर्वस्मादर्धर्चादुत्तरमुत्तरमर्धर्चं व्यतिषजति प्रकृतया शेषः पिबा सोममिन्द्र मन्दतु त्वेति षड्योनिष्ट इन्द्रसदने अकारीत्येतस्य चतस्रः शस्त्वोत्तमामुपसन्तत्योपोत्तमया परिदधाति''(२) इति। 'इन्द्राग्नी युवं सु नः', इत्यादिकं द्वादशर्चं सूक्तं। तत्र न हि वामित्येषा द्वितीया शक्करीच्छन्दस्का। एवेन्द्राग्निभ्यामित्येषोत्तमा त्रिष्टुप्छन्दस्का। अवशिष्टा दशर्चः प्रत्येकं षट्पदा महापङ्क्तिच्छन्दस्काः, तासु दशसु पादत्रयात्मकमेकैकमर्धर्चं 'गायत्रीं कृत्वा शंसेत्। पादद्वयेऽवसाय तृतीयपादे प्रणवो गायत्रीकरणं। येयं शक्करी द्वितीया तस्या अपि पादत्रयात्मकं पूर्वार्द्धं गायत्रीसमयेनैव शंसेत्। 'उत्तरा-

ईन्तु पादचतुष्टयात्मकं 'अनुष्टुभं कृत्वा शंसेत्। द्वितीयपादेऽवसाय चतुर्थपादे प्रणवप्रयोगः 'अनुष्टुप्‌करणं। एवं 'उत्तमायाः' त्रिष्टुभः, प्राचीना एकादशसङ्ख्याका ऋचः शस्त्वा त्रिष्टुभमुत्तमां विशेषोक्त्यभावात् सामान्यतः प्राप्तिमनुसृत्य शंसेत्। प्राक् च छन्दांसि त्रैष्टुभादित्यनेन सूत्रवाक्येन त्रिष्टुभोऽर्वाचीनानां गायत्र्यादीनां अर्द्धर्चशंसनविधानात् त्रिष्टुभः पादशंसनं सामान्यतः प्राप्तम्। एकस्मिन् पादेऽवसाय उत्तरस्मिन् पादे प्रणवप्रयोगः पादशंसनम्। तेन क्रमेणोत्तमां शंसेत्। ततः 'प्र वो महे', इत्यादिकं 'निविद्धानसञ्ज्ञकं सप्तर्चं सूक्तं शंसेत्। निवित्सञ्ज्ञकानीन्द्रो देव इत्यादीनि पदानि शंसनकाले यस्मिन् सूक्ते धीयन्ते प्रक्षिप्यन्ते तत्सूक्तं 'निविद्धानम्'। 'वने न वा यो' इत्येतदष्टर्चं सूक्तं पठेत्। 'यो जात एव', इति पञ्चदशर्चं सूक्तं पठेत्। यद्यायुष्कामः स्यात् तदानीमनयोः सूक्तयोर्मध्ये 'आ याह्यर्वाङ्', इत्यष्टर्चं सूक्तं,* 'विधुन्दद्राणं समने बहूनां',† इत्येकामृचञ्च प्रक्षिपेत्। अनेन प्रक्षेपेण कियदायुरधिकं भवतीति तदुच्यते। दशसङ्ख्याकानां मण्डलानां समूहरूपत्वाच्छाकल्यसंहिता दशतयीशब्देनोच्यते, तस्यां संहितायां उत्पन्ना ऋचो दशतय्यः, तास्वपि दशतयीषु इन्द्रदेवताकास्त्रिष्टुप्‌छन्दस्का जगतीच्छन्दस्का वा स्वबुद्धिकौशलेनाक्षरसङ्ख्यया गणयित्वा बृहत्यः सम्पाद्यन्ते। तथाविधानां 'बृहतीनां, 'यावतीनामावापो भवति 'तावन्ति वर्षाणि', अयं पुमान् 'पूर्वप्रसिद्धात् 'ऊर्ध्वं', 'जीवितुमिच्छेत्। प्रक्षेपकाले यावन्तः संवत्सरा अधिकजीवनाया-

* ऋग्वेदे म०३, सू०४३, ऋ०१। † ऋग्वेदे म०१०, सू०५५, ऋ०५।

'दशतः' दशानां वृहतीनां, समूहानावपेत्, 'न वा', इति पक्षान्तरं। एकैकसंवत्सरनिमित्तमेकैका वृहतीति तस्याभिप्रायः। एवं सति प्रकृते त्रिष्टुप्छन्दस्कानां नवानां प्रक्षिप्तत्वाद्दशरगणनया ता एकादश वृहत्यः सम्पद्यन्ते। ततस्तावदायुर्वर्द्धते। 'त्यमू षु', इति तृचात्मकं सूक्तं पठेत्। तत ऊर्ध्वं 'इन्द्रो विश्व विराजति', इत्येतामेकपदामृचं शाखान्तरगतां पठेत्। 'इन्द्र विश्वाः', इत्यष्टर्चं 'अनुष्टुप्छन्दस्कं सूक्तं', तच्च 'व्यतिषङ्गेण शंसेत्। कोऽसौ व्यतिषङ्गप्रकारः सोऽयमभिधीयते। 'प्रथमायाः', ऋचः, पूर्वार्द्धं यथापाठं 'शस्त्वा', ततः 'उत्तरेणार्द्धर्चेन', सह द्वितीयस्या ऋचः 'पूर्वमर्द्धर्चं', 'व्यतिषजेत। एवं 'उत्तमायाः', प्राचीनासु सप्तस्वृत्तु परस्परं व्यतिषङ्गं कृत्वा तेन च व्यतिषङ्गेण 'अनुष्टुभं कृत्वा शंसेत्। तत्र 'पादैः', पादा अनुषञ्जनीयाः। एवं च सति प्रथमायामृच्यध्ययनक्रमेणैव पादत्रयं पठित्वा द्वितीयस्या ऋचः प्रथमपादमाकृष्य चतुर्थपादत्वेन योजयेत्। सेयमेकानुष्टुप्। ततः प्रथमायामृचि चतुर्थपादं द्वितीयस्यां द्वितीयपादञ्च संयोज्य प्रथमं 'अर्द्धर्चं', कुर्य्यात्। ततो द्वितीयस्यां तृतीयं पादं तृतीयस्यां प्रथमं पादं च संयोज्य द्वितीयं 'अर्द्धर्चं', कुर्य्यात्। सेयं द्वितीयानुष्टुप्। एवमुत्तरत्रापि एकैकपादान्तरितत्वेन द्वौ द्वौ पादौ संयोज्यार्द्धर्चान् कृत्वा ताभ्यां ताभ्यामर्द्धर्चाभ्यामेकैकानुष्टुप् सम्पादनीया। 'उत्तमायाः', 'प्राक्', एव सम्पादितात् 'पूर्वस्मात् पूर्वस्मादर्द्धर्चात्', ऊर्ध्वं सम्पादितं 'उत्तरमर्द्धर्चं', संयोजयेत्। ता एताः परस्परव्यतिषक्ताः सप्तानुष्टुभः पठित्वा तत ऊर्ध्वं 'प्रकृत्या', यथा समाम्नाता तेनैवेति शेषः।

( ५८ )

सूक्तस्यान्तिमो* भागः एकार्द्धर्चः, पठनीयः। एवं सति सूक्तस्याद्यन्तयोरर्द्धर्चयोः यथाम्नातः पाठः मध्यगतानां चतुर्दशानामर्द्धर्चानां व्यतिषङ्गपाठ इत्युक्तं भवति। 'पिबा सोममिन्द्र', इति नवर्चं सूक्तं, तत्रान्तिमास्तिस्रः परित्यज्यादौ षडृचः पठेत्। 'यो निष्ट इन्द्र', इति षडृचं सूक्तं† तत्रादौ 'चतस्रः', पठित्वा तदनन्तरं षष्ठीं पठेत्। पठित्वा च ततः पूर्वभाविन्या एष स्तोम इत्यनया पञ्चम्या 'परिदधाति' निष्केवल्यं शस्त्रं समापयेत् ॥

अथ होतुर्जपं विधत्ते। (३)"परिहित उक्थ उक्थसम्पदं जपति"(३) इति। प्रकृतिभूतेऽग्निष्टोमे होता निष्केवल्यशस्त्रादूर्ध्वं उक्थं वाचीन्द्रायोप शृणुते त्वेति मन्त्रं जपति। तत्रोक्थं वाचीन्द्रायेत्येतावानुक्थसम्पद्भागः। उप शृणुते त्वेत्येतावानुक्थवीर्यभागः। 'उक्थ' शब्दः शस्त्रवाची। तथा सति अत्र निष्केवल्याख्ये 'उक्थे', समाप्ते सति, 'उक्थसम्पद्भागं होता जपेत्। उक्थं वाचीन्द्रायेत्येतावदेव जपेदित्यर्थः ॥

वीर्य्यभागे प्रतिनिधिं विधत्ते। (४)"उक्थवीर्य्यस्य स्थान उक्थदोहः"(४) इति। योऽयमुक्थवीर्य्यभाग उप शृणुते त्वेत्येवं रूपः, तस्य 'स्थाने', 'उक्थदोहाख्यो मन्त्रसङ्घः पठनीयः। शाखान्तरगतो भूर्द्धा लोकानामित्यारभ्य यज्ञसमृद्धिं मे धुक्ष्वेत्यन्तो मन्त्रसमूहः 'उक्थदोहसञ्ज्ञकः ॥ १ ॥

* शस्त्रस्यान्तिम इति क०, ग० च। † ऋग्वेदे म०७, स०२४, ऋ०१।

(१)मूर्द्धा लोकानामसि। वाचो रसस्तेजः प्राणस्यायतनं मनसः सर्वेभ्यश्चक्षुषः सम्भवः श्रोत्रस्य प्रतिष्ठा हृदयस्य सर्वं। इन्द्रः कर्माणि तमग्मतं व्योम। ऋतं सत्यं विजिग्यानं विवाचनमन्तो वाचो विभुः सर्वस्मादुत्तरं ज्योतिरूधरप्रतिवादः पूर्वं सर्वं वाक् परागर्वाक् सप्रु सलिलं धेनु पिन्वति। चक्षुः श्रोत्रं प्राणः सत्यसम्मितं वाक्प्रभूतं मनसो विभूतं हृदयाग्रं ब्राह्मणभक्तं कमन्नप्रभुः वर्षपवित्रं गोभगं पृथिव्युपरं वरुणवायिन्तमन्तप्रस्तन्विन्द्रज्येष्ठं सहस्रधारमयुताक्षरमग्मतन्दुहान(१)। (२)एतास्तं उक्थभूतय एता वाचो विभूतयः ताभिर्म इह धुक्ष्वाग्मतस्य श्रियं मही(२) (३)प्रजापतिरिदं ब्रह्म वेदानां सहजं रसं। तेनाहं विश्वमाप्यासं सर्वान् कामान्दुहां महत(३)। (४)भूर्भुवः स्वस्त्रयो वेदोऽसि। ब्रह्म प्रजां मे धुक्ष्व(४)। (५)आयुः प्राणं मे धुक्ष्व। पशूनन्विष्णं मे धुक्ष्व। श्रियं यशो मे धुक्ष्व। लोकं ब्रह्मवर्चसमभयं यज्ञसमृद्धिं मे धुक्ष्व(५) (६)इति वाचयत्यध्वर्युमनुब्रुवन्वेदस्य भवति(६) (७)ओमुक्थशा यज सोमस्येतीज्यायै सम्प्रेषितो ये३ यजामह इत्यागूर्य नित्ययैव यजति व्यवान्येवानुवषट् करोति(७) (८)उक्तं वषट्कारानुमन्त्रणं(८) (९)आहरत्यध्वर्युरुक्थपात्रमतिग्राह्यांश्चमसांश्च(९) (१०)भक्तं प्रतिख्याय

होता प्राङ् प्रेङ्खादवरोहति(१०)(११)अथैतं प्रेङ्खं प्रत्यञ्च मवबध्नन्ति यथा शंसितारं भक्षयिष्यन्तं नोपहनिष्यसी ति(११) (१२)प्रेङ्खस्य ह्यायतन आसीनो होता भक्षयति (१२) (१३)अथैतदुक्थपात्रं होतोपहूतेन जपेन भक्षयति वाग्देवी सोमस्य तृप्यतु सोमो मे राजायुः प्राणाय वर्षतु। स मे प्राणः सर्वमायुर्दुहां मह्वदिति(१३) (१४)उत्तमादाभिप्लविकात् तृतीयसवनमन्यद्वैश्वदेवान्निवि द्धानादस्य वामस्य पलितस्य होतुरिति सलिलस्य दैर्घं तमस एकचत्वारिंशतमानो भद्रीयञ्च तस्य स्थान ऐका हिकौ वैश्वदेवस्य प्रतिपदनुचरौ(१४) (१५)च्यवेत चेद्यज्ञा यज्ञीयमग्ने तव श्रवो वय इति षट् स्तोत्रियानुरूपौ यदीडान्दभ्रूयसीषु चेत्स्तुवीरन्नाग्निं न स्वृक्तिभिरिति तावतीरनुरूपः(१५) (१६)सम्पन्नं महाव्रतं सन्तिष्ठत इद महरग्निष्टोमो यथाकालमवभृथं प्रेङ्खं हरेयुः सन्दहेय बृसीः(१६) ॥ २ ॥

ऐतरेयारण्यकभाष्यम्।

तस्मिनुक्थदोहे प्रथमं मन्त्रमाह। (१)"मूर्द्धा लोकानामसि। वाचो रसस्तेजः प्राणस्यायतनं मनसः संवेशश्चक्षुषः सम्भवः श्रोत्रस्य प्रतिष्ठा हृदयस्य सर्वं इन्द्रः कर्माच्छि तममृतं व्योम ऋतं सत्यं विजिग्यानं विवाचनमन्तो वाचो विभुः सर्व्वस्मादु त्तरं ज्योतिरूधरप्रतिवादः पूर्वं सर्वं वाक् परागर्वाक् सपु

सलिलं धेनु पिन्वति चक्षुः श्रोत्रं प्राणः सत्यसम्मितं वाक्प्रभूतं मनसो विभूतं हृदयोग्रं ब्राह्मणभर्त्कमन्नशुभे वर्षपवित्रं गोभगं पृथिव्युपरं वरुणवायुितमन्तपस्तन्विन्द्रज्येष्ठं सहस्रधारमयुताक्षरममृतं दुहानम्"(१) इति। निष्केवल्यनामक हे उक्थ त्वं पृथिव्यादिलोकानां, सर्वेषां, 'मूर्द्धा' शिरःस्थानीयः, 'असि', 'वागिन्द्रियस्य सारभूतं, 'असि', 'प्राणस्य', 'तेजः' शक्तिरूपं, 'असि', 'मनसः', 'आयतनं' आश्रयः, 'असि', 'चक्षुरिन्द्रियस्य 'संवेशः' स्वविषये प्रवेशनसामर्थ्यं, 'असि', श्रोत्रेन्द्रियस्य 'सम्भवः' शब्दश्रवणायोत्पन्नरूपं, 'असि', 'हृदयस्य', अष्टदलकमलस्य, 'प्रतिष्ठा' आधारभूतो देहः, 'असि', न केवलमेतावदेव किन्तु जगति यद्यद्विद्यते, तत् सर्व्वं त्वं 'असि'। इन्द्र इत्यारभ्यदुहानमित्यन्तेन ग्रन्थेन तदेव सर्वमुदाहृत्य प्रदर्श्यते। 'इन्द्रः' सहस्राक्षः, 'कर्म' दर्शपूर्णमासादिकं, 'अक्षरं' अकारादिकं, 'अमृतं' पीयूषं, 'व्योम' आकाशः, 'ऋतं' मनसा यथा वस्तुचिन्तनं, 'सत्य' वाचा यथा वस्त्वभिधानं, 'विजिग्यानं' विजयशीलं राजादिकं, 'विवाचनं' विशेषेण वक्तुं समर्थं, 'वाचः' शब्दजातस्य, 'अन्तः' पर्य्यवसानभूमिः, स च 'अन्तः', 'विभुः' वक्तव्यस्यार्थस्याभिवदने समर्थः, 'सर्वस्मात्' प्रकाशात्, 'उत्तरं ज्योतिः' आदित्यरूपं, 'ऊधः' गवांस्तनसमूहः, 'अप्रतिवादः' विद्वत्कथायां प्रतिवाद्युक्तिराहित्यम्। यस्य यस्य वस्तुनो यद्यत् 'पूर्वं' कारणं रूपं, तत् 'सर्वं', रूपं, 'परागर्वाक्' उत्तमाधमरूपा, या 'वाक्', अस्ति, तद्रूपं। 'सपु' नानाविधविद्युद्भिः सहितं, 'सलिलं' वृष्ट्युदकं, 'धेनु पिन्वति' यथा धेनुः क्षीरप्रदानेन प्रीणयति,

तद्वत् वृष्ट्युदकं सस्यनिष्पादनेन प्रीणयति। 'चक्षुः श्रोत्रं प्राणः' इन्द्रियवायुरूपाः। लोके यद्वाग्व्यवहारजातं 'सत्यसम्मितं' अनृतोक्तिरहितं, 'वाक्प्रभूतं' वाचकैः शब्दैः सम्पूर्णं, 'मनसो विभूतं' अर्थपर्य्यालोचकस्य मनसः सम्बन्धि भूत्वा विशेषेण व्यवस्थितं, तादृशं वाग्व्यवहारजातं सर्वं,'हृदयोग्रं' हृदये मनसि रच्यमानं युद्धादिकमुग्रं कर्म, 'ब्राह्मणभर्तृकं' ब्राह्मणा भर्त्तारः पोषकाः यस्याध्यापनादेः तत् ब्राह्मणभर्तृकं, 'अन्नशुभे' 'अन्नं' व्रीहियवादिकं, 'शुभं' विवाहादिकं, 'वर्षपवित्रं' वृष्ट्युदकेन प्रक्षालिततया शुद्धं, भूप्रदेशजातं, 'गोभगं' गवां सम्बन्धि शुद्धिहेतुत्वादिरूपं सौभाग्यजातं, 'पृथिव्युपरं' पृथिव्यां निखन्यमानं यूपस्य मूलं, 'वरुणवायुतमं' वृष्ट्यधिपतिना वरुणेन, तत्सहकारिणा वायुना अतिशयेन इतं प्राप्तं, इततममित्यस्मिन्नर्थे तकार एको लुप्तः। 'तपस्तनु' तपसा क्षामं, मुनिशरीरजातं, तदेव वृष्टिवायूपद्रवसहिष्णुत्वात् वरुणवायुभ्यामतिशयेन प्राप्तमित्युच्यते। 'इन्द्रज्येष्ठं' तदेव मुनिशरीरजातं इन्द्रादप्यधिकं, हिरण्यगर्भादिपदसाधकत्वात्। 'सहस्रधारमयुताक्षरममृतं दुहानं' यदा यज्ञेषु देवार्थं गौर्दुह्यते तदा तस्य क्षीरस्य धाराः देवानामग्रे सहस्रसङ्ख्याकाः सम्पद्यन्ते, अतएव दोहनप्रकरणे वसूनां पवित्रमसि सहस्रधारमिति मन्त्रे आम्नाताः, तत्र दोहनप्रकरणे समाम्नातेषु मन्त्रेषु यान्यक्षराणि विद्यन्ते, तान्ययुतसङ्ख्याकानि बहुलानीत्यर्थः। बहुधाराभिर्बह्वक्षरैश्चोपेतं, यत् 'अमृतं' क्षीरं, तत् 'दुहानं', गोकुलं। इत्थं सर्वमुदाहृत्य प्रदर्शितं॥

अथ द्वितीयं मन्त्रमाह। (२)''एतास्त उक्थ भूतय एता

वाचो विभूतयः। ताभिर्मे इह धुक्ष्वाऽमृतस्य श्रियं महीं"(२) इति। हे 'उक्थ' निष्केवल्यशस्त्र, मूर्द्धा लोकानामित्यादिना च याः पूर्वमभिहिताः 'एताः', सर्वाः, 'ते' तव, विभूतयः' ऐश्वर्याणि। न केवलं तैः शब्दैः प्रतिपाद्यानामर्थानामेव विभूतित्वं किन्तु 'एता वाचः' शब्दा अपि, तव 'विभूतयः', 'ताभिः' विभूतिभिः सर्वाभिः, 'मे' मदर्थं, 'इह' अस्मिन्, कर्मणि, 'अमृतस्य' विनाशरहितस्य स्वर्गफलस्य, सम्बन्धिनीं 'महीं श्रियं' प्रौढां सम्पदं, 'धुक्ष्व' सम्पादय॥

तृतीयं मन्त्रमाह। (३)"प्रजापतिरिदं ब्रह्म वेदानां ससृजे रसं। तेनाहं विश्वमाप्यासं सर्वान् कामान्दुहां महत्"(३) इति। पुरा 'प्रजापतिः', 'वेदानां', 'रसं' सारभूतं, 'इदं ब्रह्म' प्रौढं महाव्रतं, निष्केवल्यं वा, सृष्टवान्। 'तेन' कर्मणा, शस्त्रेण वा, 'अहं' होता, 'विश्वं' सर्वं फलं, 'आप्यासं' प्राप्तो भूयासं, तथा 'सर्वान्', 'कामान्' भोगान्, 'महत्' अतिशयेन, 'दुहां' सम्पादयामि॥

चतुर्थं मन्त्रमाह। (४)"भूर्भुवः स्वस्त्रयो वेदोऽसि। ब्रह्म प्रजां मे धुक्ष्व"(४) इति। ये 'भूरादयः 'त्रयः' लोकाः, यश्च 'वेदः', हे उक्थ तत्सर्वं त्वं 'असि'। मह्यं 'ब्रह्म' वेदं, 'प्रजां' च पुत्रपौत्रादिकां, 'धुक्ष्व' सम्पादय॥

पञ्चमषष्ठसप्तमाष्टममन्त्रानाह। (५)"आयुः प्राणं मे धुक्ष्व। पशून्विशं मे धुक्ष्व। श्रियं यशो मे धुक्ष्व। लोकं ब्रह्मवर्चसमभयं यज्ञसमृद्धिं मे धुक्ष्व"(५) इति। 'विशं' धनसम्पादिनीं प्रजां, 'लोकं' स्वर्गाख्यं, स्पष्टमन्यत्॥

मूर्द्धा लोकानामित्यादिकं उक्थदोहाख्यं मन्त्रसङ्घं होता प्रथमं जपित्वा पश्चादध्वर्युं वाचयेदिति विधत्ते। (६)"इति वाचयत्यध्वर्युमबुद्धं चेदस्य भवति"(६) इति। 'अस्य' अध्वर्योः, इदं मन्त्रस्वरूपं 'अबुद्धं चेत्' अनवगतं यदि, 'भवति', तदा होता पाठयेत् अवगतत्वे स्वयमेव जपेदित्यर्थः॥

तस्माज्जपादूर्ध्वं होतुः कर्त्तव्यं विधत्ते। (७)"ओमुक्थशा यज सोमस्येतोच्याये संप्रेषितो ये यजामह इत्यागूर्य नित्ययैव यजति व्यवान्येवानुवषट् करोति"(७) इति। यदाध्वर्युः 'ओमुक्थशा', 'इति', आदि प्रैषमन्त्रं पठति। तदानीं होता यागार्थं, 'संप्रेषितः', सन्, आदौ 'ये यजामह इति', उच्चार्य, 'नित्ययैव' प्रकृतिगतया पिबासोममिन्द्रेत्यनयैव, यजेत्। तामेव याज्यां पठेदित्यर्थः। तत उच्छ्वासमकृत्वैव,'आनुवषट्कारं कुर्यात्। सोमस्याग्ने वीहीत्येतं प्राकृतमेवानुवषट्कारमन्त्रं पठेदित्यर्थः॥

अनुमन्त्रणे विशेषाभावं दर्शयति। (८)"उक्तं वषट्कारानुमन्त्रणं"(८) इति। प्राकृतं वागोज इत्यादिकं यत् 'अनुमन्त्रणमुक्तं', तदत्रापि द्रष्टव्यम्॥

अध्वर्योः कर्त्तव्यं होत्रा प्रेक्षणीयं दर्शयति। (९)"आहरत्यध्वर्युरुक्थपात्रमतिग्राह्यांश्चमसांश्च"(९) इति। भक्षणार्थं 'उक्थपात्रे, 'अतिग्राह्येषु 'चमसेषु 'च', यः सोमरसोऽवशेषितः, तमध्वर्युर्होतारं प्रत्यानयेत्॥

होतुः कर्त्तव्यं विधत्ते। (१०)"भक्षं प्रतिख्याय होता प्राङ् प्रेङ्खादवरोहति"(१०) इति। अध्वर्युणा समाहृतं 'भक्षं', ज्ञात्वा, 'प्राङ्मुखो भूत्वा, 'प्रेङ्खात्', 'अवरोहेत्॥

अध्वर्यूणां कृत्यं विधत्ते। (११)"अथैतं प्रेङ्खं प्रत्यञ्चमनबध्नन्ति यथा शंसितारं भक्षयिष्यन्तं नोपहनिष्यसीति"(११) इति। 'शंसिता होता, प्रेङ्खस्य स्थाने स्वयमुपविश्य सोमं भक्षयिष्यति। तदानीं तस्य होतुः प्रेङ्खेनोपघातो माभूदित्यभिप्रेत्य तं 'प्रेङ्खं', पश्चान्नीत्वा उपरि बध्नीयुः॥

भक्षणस्थानं विधत्ते। (१२)"प्रेङ्खस्य ह्यायतन आसीनहोता भक्षयति"(१२) इति॥

समन्त्रकं भक्षणं विधत्ते। (१३)"अथैतदुक्थपात्रं होतोपसृष्टेन जपेन भक्षयति। वाग्देवी सोमस्य तृप्यतु सोमो मे राजायुः प्राणाय वर्षतु। स मे प्राणः सर्वमायुर्दुहां महदिति" (१३) इति। 'उपसृष्टेन' इतरानुज्ञापूर्वकेण, 'वाग्देवीत्यादिमन्त्रजपेन', युक्तं 'उक्थपात्रगतं सोमं 'भक्षयेत्। 'सोमस्य', रसेन वाग्देवता तृप्ता भवतु। स च 'सोमः', अस्माकं 'राजा', सन्, 'आयुर्हेतुभूतं 'प्राणार्थं' वृष्टिं जनयतु, 'सः', च 'प्राणः', मम 'सर्वमायुः', 'महत्' सम्पूर्णं, यथा भवति तथा 'दुहां'। सम्पादयतु॥

अथ तृतीयसवने विशेषं विधत्ते। (१४)"उत्तमादाभिप्लविकात् तृतीयसवनमन्यद्वैश्वदेवान्निविदानादस्य वामस्य पलितस्य होतुरिति सलिलस्य दैर्घतमस एकचत्वारिंशतमा नो भद्रीयश्च तस्य स्थान ऐकाहिकी वैश्वदेवस्य प्रतिपदनुचरौ"(१४) इति। अभिप्लवनामके षडहे यदुत्तमं षष्ठमहस्तस्मादह्नोऽस्मिन्महाव्रतनामकेऽह्नि 'तृतीयसवनं', अतिदेष्टव्यं। विश्वेषां देवानां स्तुतिवाचकानि निवित्पदानि येस्मिन्ना नो भद्रीय-

सूक्तं* प्रक्षिप्यन्ते तत् सूक्तं 'वैश्वदेवं,'निविद्धानं,तस्मात् 'अन्यत्', पूर्वभावि सर्वं, 'आभिप्लविकवत् प्रयुज्यते । 'तस्य' निविद्धानस्य, 'स्थाने', 'अस्य वामस्य', इत्येतत्, 'आ नो भद्रीयञ्च', इत्येतदुभयं पठनीयं । 'अस्य वामस्य', इति सूक्तं† द्विपञ्चाशदृचं, तस्मिन्नन्तिमा एकादश परित्यज्यावशिष्टं 'एकचत्वारिंशत्सङ्ख्याकमृक्समूहं पठेत् । स च समूहः 'सलिलस्य', सम्बन्धी, गौरीर्मिमाय सलिलानि तक्षतीति तत्रत्यायामृच्यभिधानात् । दीर्घतमा नाम कश्चिदृषिस्तेन दृष्टः, वेदिषदे प्रियधामायेत्यादिको बहूनां सूक्तानां सङ्घः‡ 'दैर्घतमसः', तस्मिन् सङ्घे 'अस्य वामस्य', इत्येतदपि सूक्तमवस्थितं । तस्य सूक्तस्यात्र सलिलसम्बन्धो दीर्घतमः सम्बन्धश्चानुस्मरणार्थमभिहितः। चोदकप्राप्तस्य वैश्वदेवनिविद्धानस्य स्थाने 'अस्य वामस्या नो भद्रा इति द्वयं पठेत् । इत्येतावानत्र विशेषः । एकाहे विश्वजिन्नामके भवौ 'ऐकाहिकौ', यौ 'प्रतिपदनुचरौ','वैश्वदेवस्य', अभिहितौ तावेवात्र महाव्रतेऽपि 'वैश्वदेवस्य § प्रतिपदनुचरौ', कर्त्तव्यौ । प्रारम्भे पठनीयस्तृचः 'प्रतिपत्' । तदनन्तरभावी तृचः 'अनुचरः' । तत्सवितुर्वृणीमह इत्येष तृचः प्रतिपत् । अद्या नो देव सवितरित्ययं तृचोऽनुचर इत्यर्थः ॥

अथाग्निमारुतशस्त्रे विशेषं विधत्ते । (१५)"वैश्वानराय धिषणामृतावृध इति ... " [sic]

* ऋग्वेदे म०१, सू०८९, ऋ०१ । ‡ ऋग्वेदे म०१, सू०१४०, ऋ०१ ।

† ऋग्वेदे म०१, सू०१६४, ऋ०१ । § वैश्वदेवशस्त्रस्येति क०, ग० च।

पः"(१५) इति। 'यज्ञा यज्ञीयं', इत्येकं साम, 'इड़ान्दं', इत्यपरं साम, ते उभे सामनी महाव्रते छन्दोगैर्विकल्पेन प्रयुज्येते। तत्र यदा 'यज्ञा यज्ञीयं', प्रयुक्तं, तदानीं बह्वृचैराग्निमारुतशस्त्र-क्लृप्तिरेवं क्रियते। वैश्वानराय धिषणामृतावृध इत्येकं सूक्तं*। यन्नः करतीत्यृगेका। प्र यज्य व इत्येकं सूक्तं†। यज्ञा यज्ञा व इत्येकः प्रगाथः‡। देवो व इत्यपरः §। जातवेदस इत्यृगेका¶। इमं स्तोममर्हत इत्येकं सूक्तं ||। आपो हि ष्ठेत्यादिकः प्राकृतः शस्त्रशेष इति**। यदा तु सामगैः 'यज्ञा यज्ञीयं', साम, परित्यज्य तस्य स्थाने 'इड़ान्दनामकं साम गीयते। तस्मिन् पक्षे पूर्वोक्तं प्रगाथद्वयं परित्यज्य तस्य स्थाने 'अग्ने तव', इत्यादयः†† 'षट्', ऋचः, पठनीयाः। तत्राद्यस्तृचः 'स्तोत्रियः', इरज्यन्नित्यादिको द्वितीय स्तृचः‡‡ 'अनुरूपः'। तत्र 'इड़ान्दं', साम, प्रथमतृचे गीयत इत्येकः पक्षः। तृचद्वयेऽपि गीयत इत्यपरः पक्षः। एकतृचगानपक्षे 'स्तोत्रियानुरूपौ', उक्तौ। 'भूयसीषु' तृचद्वयगतासु सर्वास्वृक्षु, यदि, सामगाः 'स्तुवीरन्', तदानीं स्तोत्रियाणामृचां षट्सङ्ख्योपेतत्वात् 'अनुरूपे अपि 'आग्निं न स्ववृक्तिभिरित्याद्याः, 'तावतीः' षट्सङ्ख्याका ऋचः,§§ शंसेत्। एतावानाग्निमारुतशस्त्रे विशेषः॥

आरण्यकादौ य उपक्रान्तो महाव्रतप्रयोगस्तमिममुप

---

* ऋग्वेदे म०३, सू०२, ऋ०१।
† ऋग्वेदे म०५, सू०५५, ऋ०१।
‡ ऋग्वेदे म०१, सू०१६८, ऋ०१।
§ ऋग्वेदे म०५, सू०४२, ऋ०५।
¶ ऋग्वेदे म०१, सू०९९, ऋ०१।
|| ऋग्वेदे म०१, सू०९४, ऋ०१।
** ऋग्वेदे म०१०, सू०९, ऋ०१।
†† ऋग्वेदे म०१०, सू०१४०, ऋ०१।
‡‡ ऋग्वेदे म०१०, सू०१४०, ऋ०४।
§§ ऋग्वेदे म०१०, सू०२१, ऋ०१।

संहरति । (१६)"सम्पन्नं महाव्रतं सन्तिष्ठत इदमहरग्निष्टोमो यथाकालमवभृथं प्रेङ्खं हरेयुः सन्दहेयुर्बृसीः"(१६) इति । महाव्रतविषये यच्छोत्रं तत् सम्पूर्णं । 'इदं' महाव्रताख्यमहस्र, समाप्तं । तथा 'अहः' अग्निष्टोमशस्त्रं । तस्यावभृथकाले 'प्रेङ्खं', सोमपात्रैः सह जलसमीपे 'हरेयुः' । याश्च 'वृस्यः इतरेषामासनार्थं निर्मिताः, ताः सर्वाः 'बृसीः', वेदिदहनकाले 'दहेयुः' ॥ १२ ॥

(१)नादीक्षितो महाव्रतं शंसेन्नानग्नौ न परस्मै नासंवत्सर इत्येके कामं पित्रे वाचार्याय वा शंसेदात्मनो हैवास्य तच्छस्तं भवति(१) (२)होतृशस्त्रेषूक्थशा यज सोमस्येत्येकः प्रैषः सनाराशंसेष्वनाराशंसेषु वा होत्रकाणाम् (२) (३)उक्थशा यज सोमानामिति(३) (४)तदिदमहर्नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नो एवासंवत्सरवासिने नाब्रह्मचारिणे नासब्रह्मचारिणे नो एवासब्रह्मचारिणे नानभिप्राप्तायैतन्देशं(४)(५)न भूयः सकृद्रदनाद्द्विर्गदनाद्वा द्व्येव(५) (६)एक एकस्मै प्रब्रूयादिति ह स्माह जातूकर्ण्यः(६)(७)न वत्से च न तृतीय इति(७)(८)न तिष्ठंस्तिष्ठते न व्रजन् व्रजते न शयानः शयानाय नोपर्यासीन उपर्यासीनायाध एवासीनोऽध आसीनाय(८)(९)नावष्टब्धो न प्रतिस्तब्धो नातिवीतो नाङ्कं कृत्वोद्धुरनपश्रितोऽधी-

यीत न मांसम्भुक्त्वा न लोहितं दृष्ट्वा न गतासुन्नात्रत्य-
माक्रम्य नाक्त्वा नाभ्यज्य नोन्मर्दनं कारयित्वा न नापितेन
कारयित्वा न स्नात्वा न वर्णकेनानुलिप्य न स्रजमपिनह्य
न स्त्रियमुपगम्य नोल्लिख्य नावलिख्य(९) (१०)नेदमेकस्मि-
न्नहनि समापयेदिति ह स्माह जातूकर्ण्यः समापयेदिति
गालवो यदन्यत् प्राक् तृचाशीतिभ्यः समापयेदेवेत्याग्निवे-
श्यायनोऽन्यमन्यस्मिन् देशे शमयमान इति(१०)(११)यत्रेद-
मधीयीत न तत्रान्यदधीयीत यत्र त्वन्यदधीयीत काम-
मिदं तत्राधीयीत(११) (१२)नेदमनधीयन्त् स्नातको भवति
यद्यप्यन्यद्बह्वधीयान्नैवेदमनधीयन्त् स्नातको भवति(१२)
(१३)नास्मादधीतात् प्रमाद्येद्यद्यप्यन्यस्मात् प्रमाद्येन्नैवा-
स्मात् प्रमाद्येत्(१३) (१४)नो एवास्मात् प्रमाद्येत्(१४) (१५)
अस्माच्चेन्न प्रमाद्येदलमात्मन इति विद्यात्(१५) (१६)अलं
सत्यं विद्यात्(१६) (१७)नेदंविदनिदंविदा समुद्दिशेन्न सह
भुञ्जीत न सधमादी स्यात्(१७)(१८)अथातः स्वाध्यायधर्मं
व्याख्यास्याम. उपपुराणेनापीते कृत्तोदके पूर्वाह्णे न
सम्भिन्नासु छायास्वपराह्णे नाध्यह्णे मेघेऽपक्तौ वर्षे त्रि-
रात्रं वैदिकेनाध्यायेनान्तरियान्नास्मिन् कथां वदेत नास्य
रात्रौ च न च कीर्तयिषेत्(१८) (१९)तद्दिनि वा एतस्य

महतो भूतस्य नाम भवति योऽस्यैतदेवं नाम वेद ब्रह्म भवति ब्रह्म भवति(१९) ॥ ३ ॥

इत्यैतरेयपञ्चमारण्यके तृतीयोऽध्यायः ॥

इति पञ्चमारण्यकं समाप्तम् ।

ऐतरेयारण्यकभाष्यम् ।

अथ महाव्रतशंसने नियमविशेषान् दर्शयति । (१)"नादीक्षितो महाव्रतं शंसेन्नानग्नौ न परस्मै नासंवत्सर इत्येके कामं पित्रे वाचार्याय वा शंसेदात्मनो हैवास्य तत्कृतम्भवति"(१) इति । एकाहाहीनसत्ररूपैस्त्रिविधो महाव्रत इत्युक्तं । तत्र सत्ररूपे महाव्रते होतुरपि यजमानत्वात् सिद्धैव दीक्षा । एकाहाहीनयोस्तु होता न यजमानः किन्त्वन्य एव । स एवं द्विविधः । स्वार्थेऽग्निष्टोमादौ दीक्षित एकः । सोमपानराहित्यात्* अदीक्षितोऽपरः । तयोर्मध्ये दीक्षित एव परकीये महाव्रतकर्मणि शंसनं कुर्यात् 'न', तु 'अदीक्षितः' । तच्च परकीयं महाव्रतं द्विविधं । चित्याग्निसहितं, तद्रहितञ्च । तयोर्मध्ये चित्याग्निसहिते महाव्रतप्रयोगे शंसनं मुख्यम् । 'न', तु 'अनग्नौ' चित्याग्निरहिते । 'परस्मै' पित्राचार्यव्यतिरिक्तयजमानार्थं, शंसनं न कुर्यात् । 'असंवत्सरे' संवत्सरसत्रव्यतिरिक्ते क्रतौ, क्वापि, 'न', शंसेदित्येकेषां पक्षः । 'पित्राचार्य्ययोः स्वस्मादन्यत्वेऽपि

---

* सोमयागराहित्यादिति क०, ग०, चादर्शधृतपाठः ।

देहप्रदानेन विद्याप्रदानेन चोपकारित्वात्तयोरर्थे यच्छंसनन्त-त्स्वार्थमेव भवति। अतो न प्रतिषेधः॥

शंसने नियमानभिधाय ग्रन्थाध्यापने तदिदास तदिद-मित्यादिना नियमानभिधास्यति। अत्र केचिद्वाक्यान्तरमभि-धीयते। (२)"होतृशस्त्रेषूक्थशा यज सोमस्येत्येक प्रैषः सनाराशंसेष्वनाराशंसेषु वा होत्रकाणां(२) इति। तस्यैतस्या-धिकस्य वाक्यस्यायमर्थः। यानि 'होतुः शस्त्राणि 'नाराशं-साख्यचमससहितानि तद्रहितानि च तेषु सर्वेष्वपि 'उक्थशा यज सोमस्य', 'इति' अयं, 'एकः', एवाध्वर्योः 'प्रैषमन्त्रपाठः। 'होत्रकाणां', शस्त्रेषु उक्थशा यज सोमानामित्यध्याहृत्य बहु-वचनान्तः 'प्रैषः', द्रष्टव्यः। सोऽयमर्थः प्रकृतित एव प्राप्त इति मत्वा केचिदेतद्वाक्यं नाधीयते। अपरे त्वध्याहारं परित्यज्य सोमस्येत्येकवचनान्तमेव प्रैषमनुवर्त्य होत्रकाणां शस्त्रेषु विशे-षविधानार्थमित्यभिप्रायेणैतद्वाक्यं पठन्ति॥

इदानीमध्यापननियमान् दर्शयति। (३)"तदिदमहर्नान्ते-वासिने प्रब्रूयान्नासंवत्सरवासिने नो एवासंवत्सरवासिने ना-ब्रह्मचारिणे नासब्रह्मचारिणे नो एवासब्रह्मचारिणे नानभि-प्राप्तायैतं देशं"(३) इति। अध्यापकस्य गुरोरन्ते समीपे वस्तुं शीलमस्येति 'अन्तेवासी। तन्नियमाश्च स्मृतिषु विहिताः। गुरु-रनुगन्तव्योऽभिवाद्यश्चेति गौतमस्मृतिः। आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेदिति याज्ञवल्क्यः। अक्रोधनोऽनसूयः सर्वं लाभमाहरन् गुरवे। सायं प्रातरमत्रेण भिक्षाचर्यञ्चरेत्। भिक्षमाणोऽन्यत्राऽयःपात्रेभ्योऽभिशस्तायेत्यापस्तम्बः। एतैर्निय-

मैरुपेतोऽन्तेवासी तद्विरहितः 'अनन्तेवासी, तादृशाय नियमरहिताय 'तदिदं' महाव्रतप्रतिपादकं वाक्यं, 'न ब्रूयात्', नियमवानऽपि य आचार्यसमीपे शुश्रूषां कृत्वा संवत्सरन्न तिष्ठेत्, तादृशायाऽपि 'न ब्रूयात्'। नियतिमवलोक्य दाक्षिण्येन संवत्सरवासाभावेऽपि तदहः कदा चित् प्रोच्येत इत्याशङ्क्य 'नो एव', इति निषेधति। अष्टविधस्त्रीसङ्गरहितो 'ब्रह्मचारी'। तथा च स्मर्यते।

स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणं।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च॥
एतन्मैथुनमष्टाङ्गं वदन्ति ब्रह्मवादिनः।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणमिति॥

तथाविधब्रह्मचर्यरहिताय 'न ब्रूयात्'। उक्तविधैर्ब्रह्मचारिभिः सह वसतीति 'सब्रह्मचारी, यद्वा एकस्मादाचार्य्यात्सहाध्येतारः 'सब्रह्मचारिणः'। तद्विपरीतैः सह वसतीति 'असब्रह्मचारी, तादृशाय 'न ब्रूयात्'। सहवासिनां ब्रह्मचर्याभावेऽपि तस्य ब्रह्मचर्यसद्भावमात्रेण योग्यतामाशङ्क्य संसर्गजा दोषगुणा भवन्तीति न्यायेन स्वकीयस्यापि ब्रह्मचर्यस्य कथञ्चिच्छैथिल्यं भवेदित्यभिप्रेत्य 'नो एव', इति पुनर्निषेधति। आचार्यो यस्मिन् देशे निवसति 'एतं देशं', 'अनभिप्रासाय', 'न ब्रूयात्'। धनदाक्षिण्यादिनिमित्तेन स्वयं तद्गृहे गत्वा न कथयेदित्यर्थः॥

बहुकृत्वोऽध्यापनं निषेधति। (१)"न भूयः सकृद्दनाद् द्विर्ग्दनाद्वा हयेव"(१) इति। एकस्मिन् पर्य्याये शिष्याणामध्यापनं 'सकृद्दनम्'। पर्यायद्वयेऽध्यापनं 'द्विर्ग्दनं, ततो

'भूयो न', प्रब्रूयात्। तृतीयचतुर्थादिपर्यायप्राप्तान् शिष्या-न्नाध्यापयेत्, किन्तु 'द्वयेव' द्विविधैव, अध्यापनप्रवृत्तिः कर्त्तव्या न तु ततोऽधिका ॥

अत्यन्तरहस्यत्वेन गोपनीयत्वात् तस्मिन्नेव गोपने मतान्त-रमाह। (६)"एक एकस्मै प्रब्रूयादिति ह स्माह जातूकर्ण्यः"(६) इति। 'जातूकर्ण्यनामकस्तु मुनिर्द्विरध्यापनं न सहते। एक-स्मिन्नप्यध्यापने शिष्यबाहुल्यं न सहते। किन्तु सम्प्रदायविच्छे-दनिवारणार्थं 'एकः' आचार्यः, 'एकस्मै' शिष्याय, 'प्रब्रूयात्', 'इति' एतावदेव, अभ्युपगच्छति ॥

शिष्यस्य बाल्यवार्द्धकवयसोस्तदध्यापनं निषेधति। (७)"न वत्से च न तृतीय इति"(७) इति। 'इति'शब्दः शिष्यप्रयुक्तनिषे-धसमाप्त्यर्थः ॥

शिष्याचार्योभयप्रयुक्तान्निषेधान्दर्शयति। (८)"न तिष्ठंस्तिष्ठते न व्रजन् व्रजते न शयानः शयानाय नोपर्यासीन उपर्यासीना-याध एवासीनोऽध आसीनाय"(८) इति। 'तिष्ठन्', आचार्यः, 'तिष्ठते', शिष्याय 'न', ब्रूयात्, एवमुत्तरत्रापि द्रष्टव्यम्। 'उपरि' मञ्चकादौ। आचार्यः स्वयं 'अध एव' भूमावेव, 'आसीनः', भूमिष्ठायैव ब्रूयात् ॥

पुनरपि शिष्यनियमान्दर्शयति। (९)"नावष्टब्धो न प्रति-स्तब्धो नातिवीतो नाङ्क्कृत्वोर्ध्वज्ञुरनपश्रितोऽधीयीत न मांसभु-क्त्वा न लोहितं दृष्ट्वा न गतासुन्नात्रत्यमाक्रम्य नाक्त्वा नाभ्यज्य नोत्सादनं कारयित्वा न नापितेन कारयित्वा न स्नात्वा न वर्ण-केनानुलिप्य न स्रजमपिनह्य न स्त्रियमुपगम्य नोल्लिख्य नाव-

लिख्य"(९) इति। पृष्ठभागे कुड्याद्याश्रयणं 'अवष्टम्भः'। पुरोभागे हस्तयोर्दण्डाद्याधाराश्रयणं 'प्रतिस्तम्भनम्'। वस्त्रेण सर्वाङ्गपिधानं 'अतिवीतत्वम्'। पद्मासनादिकं 'अङ्ककरणम्'। एतत्सर्वं परित्यज्य जानुद्वयमूर्ध्वं कृत्वा योगपट्टवस्त्राद्यपाश्रयरहितो ग्रन्थं 'अधीयीत'। 'मांसभोजनलोहितदर्शनमृतप्राणिदर्शनोच्छिष्टाद्याक्रमणनेत्राञ्जनदेहाभ्यङ्गशरीरमर्दननखनिकृन्तना-द्युष्णोदकस्नानचन्दनकुङ्कुमाद्यनुलेपनपुष्पमालाधारणस्त्रीसङ्गम-लिप्यक्षराद्युल्लेखनतद्विनाशनादि कृत्वा 'न अधीयीत' ॥

समाप्तौ मतभेदं दर्शयति। (१०)"नेदमेकस्मिन्नहनि समापयेदिति ह स्माह जातूकर्ण्यः समापयेदिति गालवो यदन्यत् प्राक् तृचाशीतिभ्यः समापयेदेवेत्याग्निवेश्यायनोऽन्यमन्यस्मिन् देशे शमयमान इति"(१०) इति। 'इदं' महाव्रताध्ययनं, यस्मिन् दिने प्रक्रान्तं तस्मिन्नेव 'समापनं 'न' कुर्यात्, 'इति', 'जातूकर्ण्यस्य मतं। 'गालवस्य तु कुर्यात् 'इति' मतम्। 'आग्निवेश्यायनस्य तु कियदेव 'समापयेदिति', मतम्। गायत्र्यादिभ्यः 'तृचाशीतिभ्यः', 'प्राचीनं आज्यप्रउगं', 'यत्', अस्ति, तत् 'एव', एकस्मिन्दिने समापयेत्, इतरभागन्तु दिनान्तरे समापयेत्। यथैवोत्तरभागस्य नास्मिन् दिने समापनं तथैव'अन्यं' उत्तरभागं, 'अन्यस्मिन्देशे', 'शमयमानः' समापयन्नवतिष्ठेत। 'इति'शब्दो मतत्रयसमाप्त्यर्थः ॥

देशविषये पुनरन्यं विशेषं दर्शयति। (११)"यत्रेदमधीयीत न तत्रान्यदधीयीत यत्र त्वन्यदधीयीत काममिदं तत्राधीयीत" (११)इति। 'इदं' महाव्रतप्रतिपादकं ग्रन्थजातं,यस्मिन्देशे 'अधीतं,

तस्मिन्देशे स्थित्वा ग्रन्थान्तराध्ययनं 'न', कुर्यात् । यस्मिंस्तु देशे ग्रन्थान्तरमधीतं, तस्मिन् देशे स्वेच्छया 'इदं', अध्येतुं शक्यं ॥

शाखान्तरे वेदमधीत्य स्नायादिति स्नानाख्यं यत् कर्म विहितं तस्मात् प्रागेव महाव्रताध्ययनं विधत्ते । (१२)"नेदमनधीयन्न् स्नातको भवति यद्यप्यन्यद्बह्वधीयानैवेदमनधीयन्न् स्नातको भवति"(१२) इति । कृत्स्नमपि वेदमधीत्य स्नायादिति मुख्यः कल्पः । यदा तु वेदैकदेशमधीयीतेत्यनुकल्पमाश्रीयेत, तदानीं 'यद्यपि', महाव्रतात् 'अन्यत्' दर्शपूर्णमासादिकं, 'बहु'ग्रन्थजातं, अधीतं तथापि महाव्रताध्ययनमकृत्वा स्नानं 'न', कुर्यात्, किन्तु महाव्रतमधीत्यैव स्नानं कुर्यादित्यर्थः ॥

अधीतस्य महाव्रतग्रन्थस्य विस्मृतिं निषेधति । (१३)"नास्मादधीतात् प्रमाद्येद्यद्यप्यन्यस्मात् प्रमाद्येन्नैवास्मात् प्रमाद्येत्"(१३) इति । प्रज्ञामान्द्यादिदोषेण 'यदि', 'अन्यस्मात्' दर्शपूर्णमासादिग्रन्थात्, 'प्रमाद्येत्', तद्ग्रन्थविस्मृतिं प्राप्नुयात् । तथापि प्रयत्नेन पुनः पुनरावृत्त्या 'अस्मात्' महाव्रतग्रन्थात्, 'नैव प्रमाद्येत्' ॥

अत्र केचिदिदं वाक्यान्तरमपि पठन्ति । (१४)"नो एवास्मात् प्रमाद्येत्"(१४) इति । आदरातिशयार्थन्तद्वाक्यं द्रष्टव्यं ॥

मन्दप्रज्ञस्येतरवेदभागविस्मृतिदोषोपि एतद्विस्मृत्यभावेन परिह्रियत इति दर्शयति । (१५)"अस्माच्चेन्न प्रमाद्येदलमात्मन इति विद्यात्"(१५) इति । 'आत्मनः', पुरुषार्थाय महाव्रतविस्मृत्यभाव एव 'अलं', 'इति', निश्चिनुयात् ॥

अत्रान्यद्वाक्यं केचित्पठन्ति । (१६)"अलं सत्यं विद्यात्"(१६) इति । महाव्रतमेव पुरुषार्थाय 'अलं', इति यदुक्तं, तत् 'सत्यं' प्रामाणिकं, न तत्र शङ्कितव्यमिति निश्चिनुयात् । इदमपि वाक्यान्तरमादरार्थं ।

अविस्मृतस्य ग्रन्थस्य पुनरन्यन्नियमं विधत्ते । (१७)"नेदंविदनिदंविदा समुद्दिश्येन्न सह भुञ्जीत न सधमादी स्यात्"(१७)इति । इदं महाव्रतग्रन्थजातं, वेत्तीति 'इदंवित्', तादृशः पुमान् 'अनिदंविदा' तद्ग्रन्थज्ञानरहितेन पुरुषेण, 'सह', एकस्यां पङ्क्तौ 'न भुञ्जीत'। 'सधमादी' तेन सार्द्धं हर्षादिविनोदवानपि, 'न', 'स्यात्'।

यथोक्तमहाव्रतनियमाध्ययनप्रसङ्गेन कृत्स्नवेदाध्ययननियममपि दर्शयति। (१८)"अथातः स्वाध्यायधर्मं व्याख्यास्याम उप पुराणे ना पीते कच्चोदके पूर्वाह्णे न सम्भिन्नासु छायास्वपराह्णे नाध्यूल्हे मेघेऽपर्त्तौ वर्षे त्रिरात्रं वैदिकेनाध्यायेनान्तरियान्नास्मिन् कथां वदेत नास्य रात्रौ च न च कीर्त्तयिषेत्"(१८) इति। वेदैकदेशस्य महाव्रतस्य नियमकथनानन्तर्यार्थं 'अथ' शब्देनोच्यते। एकदेशनियमेन कृत्स्ननियमस्य बुद्धिस्थत्वादानन्तर्यं युक्तं। 'अतः' शब्दो हेत्वर्थः। यस्मान्नियमेनाधीतः स्वाध्यायः फलप्रदः, तस्मादित्यर्थः। स्वस्याध्यायः 'स्वाध्यायः' स्वशाखा, तस्य 'धर्मः', निषिद्धकालाध्ययनवर्जं, न तद्धर्मं विस्पष्टं साकल्येन कथयिष्यामः। 'उप पुराणे', इत्यादिवाक्येन पौष्याः पौर्णमास्या उपरितनः काल उपलक्ष्यते। तथा हि। 'पुराणे कच्चोदके उपपीते', इति नाधीयीतेति वाक्ययोजना। 'कच्च'श-

ब्देन लतादिपुञ्जमभिधीयते । तस्य मूले वृष्टिकालसम्पादितमुदकं द्रवरूपेण किञ्चित्कालमनुवृत्तं सत्पौषादिमासेषु प्रायेण शुष्यति तदिदमत्राभिधीयते। 'पुराणे' पूर्वसम्पादिते, 'कच्चोदके', 'उपपीते' लतादिमूलसमीपे विलीने शुष्के सति, नाधीयीत। तथा च मनुना स्मर्य्यते।

श्रावण्यां पौर्णमास्यां वाप्युपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्द्धपञ्चमानिति॥

आपस्तम्बोऽप्याह। श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासम्प्रदोषे नाधीयीत। तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेदर्द्धपञ्चमांश्चतुरो मासानित्येके वदन्ति। श्रावणीपौष्योः पौर्णमास्योर्मध्यकालेऽपि प्रतिदिनं 'पूर्वाह्णे', 'अपराह्णे', च शरीरवृक्षादिच्छायासु', 'सम्भिन्नासु' मिलितासु, सतीषु, नाधीयीत। प्रातः काले सूर्य्योदये सति 'छायासु' पृथगभिव्यक्तासु प्रारभेत। सायङ्काले अस्तमयात्पूर्वं 'छायासु', विभक्तासु सतीष्वेवाध्ययनं परित्यजेत्। यदा 'मेघः', 'अध्यूढः' आधिक्येन प्रसृतः सान्द्रः, भवति, तदा 'न', अधीयीत। 'अपर्त्तौ' इत्यत्रापशब्दो वर्जनार्थः, स्वकीयमृतुं श्रावणभाद्रपदमासद्वयरूपं वर्जयित्वा प्रवृत्तः 'अपर्त्तुः', तादृशे 'वर्षे', प्रवृत्ते सति अकालवृष्टिनिमित्तीकृत्य 'त्रिरात्रं', 'वैदिकेनाध्यायेनान्तरियात्' वेदपाठेनान्तरियात्, तिसृषु रात्रिषु वेदपाठेनान्तरियात्, तिसृषु रात्रिषु वेदपाठस्यान्तरायः कर्त्तव्यः। 'वैदिकेन', इति विशेषणाद् आर्षाणां व्याकरणादीनामङ्गानामध्ययनमनुज्ञायते। अत्र स्मृतिकाराः। आर्द्रादिज्येष्ठान्तस्य त्रयोदशनक्षत्रपरिमितस्य

कालस्य वृष्टिकालत्वमभ्युपेत्य ततोऽन्यत्र वृष्टौ सत्यामकालवृष्टिनिमित्तं त्रिरात्राध्ययनवर्जनमिच्छन्ति। 'अस्मिन्' अधीयमाने स्वाध्याये, 'कथान्न वदेत्' लौकिकीं वार्त्तान्न कुर्यात्। यद्वा 'अस्मिन्' प्रकृते महाव्रताध्ययनकाले, लौकिकीं वार्त्तान्न कुर्यात् परित्यजेत्। किञ्च 'अस्य' महाव्रतस्य, पाठं 'रात्रौ', 'न', कुर्यात्। किञ्च महाव्रताभिज्ञोऽहमिति एवं जनमध्ये 'कीर्त्तिमपि 'न', इच्छेत्, महाव्रतस्य गोप्यत्वात् तद्विषयाभिज्ञानमपि न प्रकाशयेत्* ॥

उक्तनियमेनाध्ययनफलमाह। (१९)"तदिति वा एतस्य महतो भूतस्य नाम भवति योऽस्यैतदेवं नाम वेद ब्रह्म भवति ब्रह्म भवति"(१९) इति। 'इति' पूर्वोक्तेन नियमेनाधीतं, 'तत्' कृत्स्नस्वाध्यायवाक्यं, महाव्रतवाक्यं वा, 'एतस्य' प्रकृतस्य कृत्स्नवेदप्रतिपाद्यस्य, 'महतः' सर्वगतस्य, 'भूतस्य' नित्यसिद्धस्य परमात्मनः, 'नाम', 'भवति', । कृत्स्नस्य वेदस्य परमात्मप्रतिपादकत्वात्तन्नामत्वं युक्तं। तत्प्रतिपादकत्वं च कठैराम्नायते। सर्वे वेदा यत्पदमामनन्ति। विन्दन्त्यनेन परमात्मानमिति व्युत्पत्त्या वेदशब्दोऽपि तत्प्रतिपादकमेव ग्रन्थमाचष्टे। अतः कृत्स्नवेदस्य परमात्मनामत्वेन अत्यन्तरहस्यमन्त्ररूपत्वाद् बहुविधनियमपुरःसरमध्ययनं युक्तं। 'यः' पुमान्, 'एतत्' स्वाध्यायवाक्यं सर्वं, 'एवं' उक्तप्रकारेण, 'अस्य' परमात्मनः, 'नाम', इति 'वेद', विदित्वा च नियमेनाधीते। स पुमानधीतवेदमुखेन

---

* प्रकटयेदिति क०, ग० च।

परमात्मानं विदित्वा स्वस्य ब्रह्मत्वावारकाज्ञाननिवृत्त्या स्वयं 'ब्रह्म भवति'। वाक्याभ्यासस्तृतीयाध्यायसमाप्त्यर्थः, पञ्चमारण्यकसमाप्त्यर्थः, कृत्स्नारण्यककाण्डसमाप्त्यर्थश्च ॥ २ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराज-महाराज-परमेश्वर-वैदिकमार्ग-
प्रवर्त्तकश्रीवीरबुक्कमहीपालसाम्राज्यधुरन्धरस्य
सायणामात्यस्य कृतौ माधवीये वेदार्थप्रकाशे
बह्वृचारण्यभाष्यं समाप्तम् ॥



| | Rs. | As |
|---|---|---|
| The Gopála Tápaní. Edited by Paṇḍita Harachandra Vidyábhúshana | 0 | 10 |
| The Grihya Sutra of A'svaláyana, with the commentary of Gárgyanáráyaṇa. Edited by A'nandachandra Vedántavágíśa 4 Fasciculi, | 2 | 8 |
| The Nrisinha Tápani with the commentary of Saṅkara A'chárya, edited by Paṇḍita Rámamaya Tarkálankára. 3 Fasciculi, .. | 1 | 14 |
| Gopatha Bráhmaṇa, Edited by Babu Rájendralála Mitra. 2 fasc.... | 1 | 10 |
| The Taittiriya Prátisákhya. Edited by Bábu Rájendrálála Mitra. 3 fasc., ... ... .. ... | 1 | 14 |
| The Taittiriya A'ranyaka of the Black Yajur Veda. Edited by Bábu Rájendralála Mitra. 11 Fasciculi, ... ... ... | 6 | 14 |
| The Látyáyana Sutra. Edited by Paṇḍita A'nandachandra Vedántavágiśa. 9 Fasciculi, .. ... ... .. | 5 | 10 |
| Chaturvarga Chintámani by Hemádri. Dánakhandah. Edited by Paṇḍit Bharatachandra S'iromaṇi. Vol.I. 11 fasc., Vol. II. 2. Fasc | 8 | 2 |
| The Táṇḍya Mahábráhmaṇa with the Commentary of Sáyaṇácharya. Edited by A'nandachandra Vedántavágíśa, 19 Fasciculi, .. | 11 | 4 |
| Chhandah Sútra of Piṅgala A'chárya. Edited by Viśvanátha S'ástrí 3 fasc. ... ... .. .. .. | 1 | 11 |
| The Aitareya A'raṇyaka. Edited by Bábu Rájendralála Mitra. 5 Fasc. | 3 | 2 |

SANSKRIT WORKS IN PROGRESS.

*Old Series Nos.* 1 *to* 230, *demi* 8vo.

| | Rs. | As |
|---|---|---|
| The Lalita-Vistara, or Memoirs of the Life and Doctrines of S'ákya Siñha. Edited by Bábu Rájendralála Mitra. Published 5 Fasciculi, ... ... ... ... .. | 3 | 2 |
| The Taittiríya Bráhmaṇa of the Black Yajur Veda, with the commetary of Sáyaṇa. Edited by Bábu Rájendralála Mitra. Published 26 Fasciculi, .. ... ... .. | 16 | |
| Taittiriya, Sanhitá. Edited by Dr. E. Röer, E. B. Cowell, M. A. and Maheśachandra Nyáyaratna. Published 23 Fasciculi ... | 16 | 14 |

*New Series, Nos.* 1 *to* 291, *demi* 8vo.

| | Rs. | As |
|---|---|---|
| The Mímáñsá Darśana, with the Commentary of S'avara Svámí. Edited by Paṇḍita Maheśachandra Nyáyaratna. Published, 11 Fasciculi, ... .. .. ... | 6 | 14 |
| The Agni Puráṇa. Edited by Bábu Rájendralála Mitra, 7 Fasciculi, ... .. ... .. .. | 4 | 6 |
| Gobhiliya Grihya Sútra with a commentary by the Editor, Pandit Chandrakánta Tarkálankár. 5 fasc., .. ... | 3 | 2 |
| Sáma Veda Sañhitá with the commentary of Sayaṇa A'chárya. Edited by Paṇḍit Satyavrata Sámasramí, Part I. 10 fasc., Part II. Fas. V, | 11 | 4 |
| A'tharvanopanishads with the commentary of Náráyana. Edited by Paṇḍita Rámamaya Tárkaratna, Nos. 249 265 276 & 282. 305 | 3 | 2 |
| Prithiráj Rasu, by Chand Bardai, Part I. fasc. I Pt. II. fasci. I. ... | 0 | 10 |

*English Translations complete, demi* 8vo.

| | Rs. | As |
|---|---|---|
| An English Translation of the Brihad A'raṇyaka Upanishad, and Commentary. By Dr. E. Röer, 3 Fasciculi, .. | 1 | 14 |
| An English Translation of the Chhándogya Upanishad, by Bábu Rájendralála Mitra. 2 Fasciculi, ... ... ... | 1 | |
| An English Translation of the Taittiriya, Aitaréya, Svetáśvatara, Kena, Iśa, Katha, Muṇḍaka and Máṇḍukya Upanishads, by Dr. E. Röer. 2 Fasciculi, .. ... .. .. | 1 | 4 |
| The Súrya-Sidhánta, translated by Paṇḍita Bápú Deva S'ástrí. 1 Fasciculus, ... ... ... ... ... | 0 | 10 |
| The Siddhánta Siromaṇi, tranlated by the late Lancelot Wilkinson, Esq., C. S. and revised by Paṇḍita Bápu Deva Sástrí. 2 Fasciculi, .. ... ... .. | 1 | 4 |
| A Translation of the Sánkhya Aphorisms of Kapila, by Dr. Ballantyne, published 2 Fasciculi | | |

| | Rs. | As. |
|---|---|---|
| Sáhitya Darpaṇa or Mirror of Composition, a treatise on Literary Criticism by Visvanátha Kavirája. Translated into English by Babu Pramadádása Mitra 4 Fasciculi, — — | 2 | 8 |
| *English Tran.slations in progress, demi 8vo.* | | |
| The Brahma Sutra with the commentary of Sankara Achárya. Translated into English by the Rev. K. M. Banerjea No. 214, — | 1 | 0 |
| Aini Akbari By H Blochman M. A. 6 fas., — — | 10 | 8 |
| B. MISCELLANEOUS. | | |
| One complete set of the Journal of the Asiatic Society of Bengal, — | 750 | 0 |
| Journal of the Asiatic Society, from Vol. XII. for 1842, to Vol. XXXVI. for the 1867, except Vols. XXIII, XXIV. and XXIX. prices as per title page. | | |
| Asiatic Researches, from Vols. VI to XII. and Vols. XVII. to XX., each at., — — — — — | 10 | 1 |
| Ditto ditto, Index, — — — — | 5 | 6 |
| Catalogue of the Books and Maps in the Library of the Asiatic Society, By Bábu Rájendralála Mitra. 1856, — — | 3 | 0 |
| ——— of the Sanskrit Books and MSS. of the Asiatic Society, — | 1 | 0 |
| ——— of Persian, Arabic, and Urdu, ditto, — — | 1 | 0 |
| ——— of the Fossil Remains of Vertebrata from the Sewalik Hills, the Nerbudda, Perim Island, &c. in the Meseum of the Asiatic Society of Bengal. By H. Falconer, Esq., M.D., F. R.S. and H.S., | 2 | 0 |
| ——— of the Recent Shells in the Museum of the Asiatic Society, by W. Theobald, Esq., Jnr., — — — | 3 | 0 |
| ——— of the Reptiles in the Asiatic Society's Museum by W. Theobald, Esq., Jr., — — — — | 3 | 0 |
| Catalogue of Mammâlia, — — — — | 3 | 0 |
| Harivansa, 563 pages, royal 4to., — — — | 3 | 0 |
| Mahábhárata, Vols. 3rd and 4th, royal, 4to., and Index, — | 40 | 0 |
| Rájatarangini, 440 pages, 4to., — — — | 4 | 0 |
| Csoma's Tibetan Grammar, — — — | 8 | 0 |
| ——— ——— Dictionary, — — — | 10 | 0 |
| Vedánta Sára, translated by Dr. E. Röer., — — | 0 | 8 |
| Puráṇa Sangraha, edited by the Rev. K. M. Banerjea, No. I., — | 1 | 0 |
| 1—PRIVATE PUBLICATIONS. | | |
| Wise's Hindu System of Medicine, — — — | 9 | 0 |
| The pilgrimage of Fa Hian, — — — | 5 | 0 |
| Lassen's Bactrian Coins, by Dr. Edward Röer, — — | 5 | 0 |
| Meng Tseu, in Latin, by Stanislaus Julien. Two parts in one vol., | 6 | 0 |
| Aborigines of India, by B. H. Hodgson, — — | 3 | 0 |
| History of the Afghans, Pt. I., by Dorn, — — | 5 | 0 |
| Examination and Analysis of Mackenzie Manuscripts, by the Rev. W. Taylor, — — — — | 2 | 1 |
| Low's Siamese Grammar, — — — — | 2 | 1 |
| Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis, F.R.S., | 1 | 8 |
| Dictionarium Anamrtico-Latinum, by A. J. L. Tabard, — | 14 | 0 |
| Blank Vocabulary for Ethnographical purposes, — — | 1 | 0 |
| Collection of Oriental Proverbs, by Thomas Roebuck, — — | 2 | 0 |
| Mataparikhá, — — — — — | 0 | 8 |
| Travels of Macarius, Pt. I, by F. C. Balfour, — — | 4 | 0 |
| Contributions towards an Index to Indian Bibliography, F. Hall, — | 2 | 0 |
| Outlines of Indian Philology, by J. Beames, — — | 2 | 8 |
| Translations from the Tárikh Firuzshahi, — — — | 1 | 8 |

*N. B.*—For Arabic, Persian and Urdu works vide the covers of the Persian series.